श्रीः

# श्रीमन्महाराज संस्कृत महापाठशाला पत्रिका

(त्रैमासिकी)



सम्पुटम् १२] १९३६ [सञ्चिके १-२

सम्पादकः
एस्. वि. कृष्णमूर्ति, एम्. ए.,
श्रीमन्महाराज संस्कृत महापाठशालाध्यक्षः






मैसूरु
राजकीय शाखामुद्रालये सम्मुद्रिता
१९३६

॥ श्रीः ॥

श्रीमन्महाराजसंस्कृतमहापाठशालापत्रिक

# विषयसूचना

# सम्पादकीयसमितिः

---

१. श्रीमन्तः अर्थशास्त्रविशारदाः विद्यालङ्काराः महामहोपाध्यायाः डाक्टर् आर्. शामशास्त्रिणः, बि.ए., पिएच्.डि., एं.आर्.ए.एस्., विश्रान्त मैसूरु प्राच्यकोशागाराध्यक्षाः शासनविमर्शशाखाध्यक्षाश्च

२. श्रीमन्तः प्रोफेसर् डि. श्रीनिवासाचार्याः, एं.ए., मैसूरु महाराजाकालेज् संस्कृत प्रधानोपाध्यायाः

३. पण्डितरत्नं धर्माधिकारिणः ब्र. श्री. काशी शेषवेङ्कटाचलशास्त्रिणः

४. महामहोपाध्यायाः पण्डितरत्नं ब्र.श्री. लक्ष्मीपुरं श्रीनिवासाचार्याः, विश्रान्तमहापाठशालाविशिष्टाद्वैतवेदान्तप्रधानोपाध्यायाः

५. महाविद्वांसः ब्र. श्री. क. गोपालकृष्णशास्त्रिणः, महाराजाकालेज् संस्कृतपण्डिताः

६. महाविद्वांसः ब्र. श्री. करूरु शेषाचार्याः, महापाठशाला ज्यौतिषप्रधानोपाध्यायाः

७. विद्वांसः ब्र. श्री. एस्. वेङ्कटाचार्याः, महापाठशाला साहित्यप्रधानोपाध्यायाः

८. श्रीमन्तः एस्. बि. कृष्णमूर्तयः, एं.ए., महापाठशालाध्यक्षाः

भो भो महाशयाः! सहृदयाः! सप्रश्रयमिदमिदानीं विज्ञापयामः संस्कृतविद्याभिमानिनः पुरुषप्रवराः यं कंचन विषयमधिकृत्य संस्कृतभाषामयं अनतिसंक्षिप्तविस्तरं उपक्रमोपसंहारपरिकर्मितं कस्याप्यनुद्वेगकरं अचर्चितपूर्वं कालदेशदशानुगुणं प्रपञ्चोपकारकरं धर्माद्यविरुद्धं "जीर्णमङ्गे सुभाषितम्" इति निर्वेदस्य "वीरा वाचैव केवलम्" इत्यपवादस्य वा प्रशमकरं प्रस्पष्टमुख विलासमुपन्यासं विलिख्य यदि प्रेषयेयुर्महान्तः, तेभ्यो महद्भ्यः समर्प्य अनन्तान् धन्यवादान् पत्रिकायामस्यां तमुपन्यासं पारयामः प्रकाशयितुम्॥

यदीच्छति वशीकर्तुं जगदेकेन कर्मणा।
परापवादसस्येभ्यो गाश्चरन्तीर्निवारयेत्॥
न हीदृशं संवननं त्रिषु लोकेषु विद्यते।
दया मैत्री च भूतेषु दानं च मधुरा च वाक्॥

संपादकस्य.

---

## मूल्यप्रकारः

अस्याः पत्रिकायाः वार्षिकम् अग्रिमं मूल्यं सार्धैकरूप्यकं प्रापणव्ययपृथक्कृतम्. (भारतमण्डले.)
विद्यार्थिनां पुनः एकरूप्यकम्. प्रापणव्ययपृथक्कृतम्.
विभिन्नदेशे सपादरूप्यद्वयम् (3s.) प्रापणभृतिः पृथक्.

पत्रिकाप्राप्तिस्थानम्,

संपादकः,

श्रीमन्महाराजसंस्कृतमहापाठशाला, मैसूरु.

## सधन्यवादमस्माभिरङ्गीकृता एता विनिमयरूपाः पत्रिकाः

---

1. संस्कृतसाहित्यपरिषत्पत्रिका, श्रीनगरम्
2. संस्कृत साहित्यपरिषत्पत्रिका, कल्कत्ता.
3. उद्यानपत्रिका, तिरुवाडि.
4. सुप्रभातम्, काशी.
5. सूर्योदयः, काशी.
6. संस्कृतरत्नाकरः, जयपुरम
7. संस्कृतपद्यवाणी, कल्कत्ता.
8. मञ्जूषा, कल्कत्ता.
9. अच्युतः, काशी.
10. कल्याणम्, गोरखपुरम्.
11. मधुरवाणी, बेलगाम्.
12. देववाणी, कल्कता.
13. The Mythic Society Journal, Bangalore.
14. Annals of the Bhandarkar Oriental Research Institute, Poona.
15. Review of Philosophy and Religion, Poona.
16. Journal of Oriental Research, Madras.
17. The Law College Magazine, Madras.
18. Sunday Edition "The Hindu," Madras.
19. The Aryan Path, Bombay.
20. The Theosophical Movement, Bombay.
21. The Philosophical Quarterly, Calcutta.
22. Karnataka Historical Review, Dharwar.
23. Ardra, Ceylon.

24. "Yoga," Bulsar.
25. The Vaitarini, Chowdwar.
26. ಆಂಧ್ರ ಸಾಹಿತ್ಯಪರಿಷತ್ಪತ್ರಿಕಾ, ಕಾಕಿನಾಡ.
27. ಭಾರತೀ, ಮದ್ರಾಸು,
28. ಸನಾತನಮತಪ್ರಚಾರಿಣೀ, ಭಟ್ಟಿಪಲ್ಲಿ
29. ಜಯಕರ್ಣಾಟಕ, ಧಾರವಾಡ.
30. ಸದ್ಬೋಧಚಂದ್ರಿಕೆ, ಆನಂದವನ.
31. ವಿಶ್ವಕರ್ಣಾಟಕ, ಬೆಂಗಳೂರು.
32. ತಾಯಿನಾಡು, ಬೆಂಗಳೂರು.
33. ಆಧ್ಯಾತ್ಮಪ್ರಕಾಶ, ಬೆಂಗಳೂರು.
34. ರಂಗಭೂಮಿ, ಬೆಂಗಳೂರು.
35. ಕರ್ಣಾಟಕ ಸಾಹಿತ್ಯಪರಿಷತ್ಪತ್ರಿಕೆ, ಬೆಂಗಳೂರು.
36. ಕಾದಂಬರೀಸಂಗ್ರಹ, ಚಾಮರಾಜನಗರ.
37. ಪ್ರಬುದ್ಧಕರ್ಣಾಟಕ, ಮೈಸೂರು.
38. ವಿವೇಕಾಭ್ಯುದಯ, ಮೈಸೂರು.
39. ಪೂರ್ಣಬೋಧ, ಮೈಸೂರು.
40. ಸಾಧ್ವೀ, ಮೈಸೂರು.
41. ಗರಿಕೆ, ಮೈಸೂರು.

---

## स्वीकारः.

पुण्यां (पूना) पत्तने तावन्मीमांसाग्रन्थप्रकाशकसांमत्या लोकोपकारबुद्ध्या परमादरेण प्रकाशिता मीमांसाप्रकाशाख्यमासिकपत्रिकायाः प्रथमसम्पुटस्य प्रथमासाञ्चिका, तथैव 'पूना ओरियेण्टलिस्ट्' पत्रिकायाः प्रथमसम्पुटस्य प्रथमा साञ्चिका अचिरादेव अस्मद्धस्तगते भवतः, सप्रमोदङ्गीकृते च। तद्विमर्शः पुनः अस्मद्भाविसञ्चिकायां प्रकटीक्रियत इति सविनयं विज्ञाप्यते ॥

॥ श्रीः ॥

श्रीमन्महाराजसंस्कृतमहापाठशालापत्रिका

प्रतिमासत्रयं प्रकटीक्रियमाणा

"कुर्वन्नेवेह कर्माणि जिजीविषेच्छतꣳ समाः"

(ईशोपनिषत्)

सम्पुटम् १२] १९३६ [सञ्चिके १-२

## सुभाषितानि.

आदरेण यथा स्तौति धनवन्तं धनेच्छया ।
तथा चेद्विश्वकर्तारं को न मुच्येत बन्धनात् ॥ १ ॥

जलबिन्दुनिपातेन क्रमशः पूर्यते घटः ।
स हेतुः सर्वविद्यानां धर्मस्य च धनस्य च ॥ २ ॥

अगाधहृदया भूपाः कूपा इव दुरासदाः ।
घटका गुणिनो नो चेत् कथं लभ्येत जीवनम् ॥ ३ ॥

व्यालाश्रितोऽपि विफलोऽपि सकण्टकोऽपि
वक्रोऽपि पङ्कजनितोऽपि दुरासदोऽपि ।
गन्धेन बन्धुरसि केतक पुष्पजेन
ह्येको गुणः खलु निहन्ति समस्तदोषान् ॥ ४ ॥

अर्थभारवती वाणी पुष्पभारवती लता ।
शीलभारवती कान्ता भजते कामपि श्रियम् ॥ ५ ॥

## धातृवत्सरारम्भमङ्गलाशासनम्.

---

मुनिजनगुहागेहा मोहापहा सितदेहभा-
जितसितपयोवाहा वाहानना प्रमदावहा ।
निगमसुरभिर्ह्येषा ह्याऽनघा परदेवता
हरतु जगतामीतिं धात्राह्वये नवहायने ॥ १ ॥

खरकरसुतातीरागारा स्मराकृतिभासुरा
रुचिरमुरलीधीराराव प्रहृष्टसुरासुरा ।
दिशतु जगतां भद्रं काचिद्विभागुणमेदुरा
निरवधिदयापूरा धातृप्रथे नववत्सरे ॥ २ ॥

अनाकुलमनामयं विपुलमायुरव्याहतां
श्रियं मुदमभङ्गुरां शुभगिरं च धर्म्यां मतिम् ।
कलां विनयसंयुतां हरिपदे च भक्तिं दृढां
वितीर्य जगतामवत्वातितरां कृपाब्धिर्हरिः ॥ ३ ॥

पूर्वं दुर्भिक्षदोऽब्दो मुहुरपि भयकृद्धातृनामोपयातः
किं किं वाऽग्रे भवेदित्यनुकलमुदितां देहिनां भीतिशङ्काम् ।
शीतांशुर्हर्तुकामः किल घनकृपया धातृवर्षस्य राजा
मन्त्री भूत्वा सखायं रविमवति भुवं सैन्यनाथं वितन्वन् ॥ ४ ॥

सेनाधीम्बुदपो रविर्धरणिजो धान्याधिपो भूपतिः
मन्त्रीन्दूरसपस्सितोऽरसपतिस्सस्याधिपश्चेन्दुजः ।
वर्षे धातृसमाह्वयेऽत्र तनुतां श्रीकृष्णभूमीशितुः
कर्णाटावनिपस्य कीर्तिमतुलामायुश्श्रियं चाधिकाम् ॥ ५ ॥

स्वगेहं चापाह्व कतिचन दिनान्यत्र शरदि
प्रयातः कीटर्क्षं सखिगृहमितो वक्रगतितः ।
मुहुस्तस्माच्चापं गुरुरुपगतो घोरसमितिं
ब्रवीति क्ष्मेशानां शमयतु हरिस्तां घनघृणः ॥ ६ ॥

धात्रब्दे युग्ममासे रविहिमकरयोः प्रग्रहौ पञ्च वारा·
स्तिग्मांशोर्भौमचान्द्रयोस्समरमथमिथस्सप्तमे सूरिभृग्वोः ।
वासो युग्मे च राशौ रविबुधभृगुजक्ष्माजकेतुग्रहाणां
योगश्च स्युस्तदुत्थं भयमखिलवपुश्श्रीसहायो निरुन्धाम्॥७॥

इति धातृवत्सरोपक्रममङ्गलमेष शेषकविसूरिः ।
आशास्ते कृष्णनृपास्थानमहापण्डितप्रथोपेतः ॥ ८ ॥

आस्थानमहाविद्वान् **करूरुशेषाचार्यः**,
ज्योतिश्शास्त्रप्रधानोपाध्यायः,
श्रीमन्महाराजसंस्कृतमहापाठशाला, महीशूरपुरी.

# धातृवत्सरारम्भमङ्गलाशासनम्.

मुनिजनगुहागेहा मोहापहा सितदेहभा-
जितसितपयोवाहा वाहानना प्रमदावहा ।
निगमसुरभिद्वेषा हृद्याऽनघा परदेवता
हरतु जगतामीतिं धात्राह्वये नवहायने ॥ १ ॥

खरकरसुतातीरागारा स्मराकृतिभासुरा
रुचिरमुरलीधीरारावप्रहृष्टमुरासुरा ।
दिशतु जगतां भद्रं काचिद्द्विभागुणमेदुरा
निरवधिदयापूरा धातृप्रथे नववत्सरे ॥ २ ॥

अनाकुलमनामयं विपुलमायुरव्याहतां
श्रियं मुदमभङ्गुरां शुभगिरं च धर्म्यां मतिम् ।
कलां विनयसंयुतां हरिपदे च भक्तिं दृढां
वितीर्य जगतामवत्वतितरां कृपाब्धिर्हरिः ॥ ३ ॥

पूर्वं दुर्भिक्षदोऽब्दो मुहुरपि भयकृद्धातृनामोपयातः
किं किं वाऽग्रे भवेदित्यनुकलमुदितां देहिनां भीतिशङ्काम् ।
शीतांशुर्हर्तुकामः किल घनकृपया धातृवर्षस्य राजा
मन्त्री भूत्वा सखायं रविमवति भुवं सैन्यनाथं वितन्वन् ॥ ४ ॥

सेनार्घाम्बुदपो रविर्धरणिजो धान्याधिपो भूपतिः
मन्त्रीन्दूरसपस्सितोऽरसपतिस्सस्याधिपश्चेन्दुजः ।
वर्षे धातृसमाह्वयेऽत्र तनुतां श्रीकृष्णभूमीशितुः
कर्णाटावनिपस्य कीर्तिमतुलामायुश्श्रियं चाधिकाम् ॥ ५ ॥

# करुणरसतरङ्गिणी.

वन्दारुजनबृन्देभ्योऽप्यमन्दानन्ददायिनम् ।
बृन्दावनचरं वन्दे नन्दात्मजमरिन्दमम् ॥ १ ॥

तिलककलितफालालोलवालालिजालम्
ललितलुलितचेलं बाललीलाविलोलम् ।
परिमलसुममालं नीलभृङ्गालिनीलं
सकलसुरभिपालं नौमि गोपालबालम् ॥ २ ॥

करुणो रसेषु जनचित्तमाद्रुतं
वितनोति मोदयति कर्षति क्षणात् ।
अत एव तन्मयकृतिं तनोम्यहं
यदुनन्दनस्य शिशुभावचेष्टिते ॥ ३ ॥

नक्षत्राण्यथवा समुद्रसिकताश्चेयत्य एवेत्यलं
लोके स्याद्गदितुं कदापिगणनाशक्तो मनुष्यः क्रमात् ।
काव्यानीह कृतानि पूर्वकविभिश्चेयन्ति भावस्त्विया-
नित्येवं गदितुं भवेत्किमु ततः कर्तव्यमन्यन्न हि ॥ ४ ॥

तथापि शुकवाणीव श्रीकृष्णचरिताञ्चिता ।
मम वाणी नवीनापि शोभतां भुवि सर्वतः ॥ ५ ॥

बाल्ये शौरिकृतां निशम्य विविधामामोदसंवर्धिनीं
चेष्टामद्भुतसाध्वसैकजननीं लोकप्रतीपां क्षणात् ।
चित्तं कस्य न याति तद्गतरसास्वादैकनिघ्नं मदं
तस्माल्लीनमिदं ममापि हृदयं मन्दस्य तस्यामभूत् ॥ ६ ॥

विष्णुचित्तकृतिभावनाबला-
  द्विष्णुचित्रचरितावलोकनात् ।
कृष्णपादकमलैकभक्तितः
  कृष्णचित्रचरितं तनोम्यहम् ॥ ७ ॥

यस्मिन्नाश्रितवात्सल्यं दर्शयामास माधवः ।
काळीयवृत्तं तद्वक्तुं मम जिह्वा प्रवर्तते ॥ ८ ॥

हस्ते निधाय मुरळीं धृतपीतवस्त्रो
  मायूरबर्हकृतमौळिमनोज्ञभूषः ।
गुञ्जावबद्धसरमण्डितकम्बुकण्ठः
  कृष्णो जगाम विपिनं सह गोपबालैः ॥ ९ ॥

किसलयकुसुमावृतैरुदग्रै-
  र्विटपिगणैर्विविधाण्डजन्मरावैः ।
हरिततरतृणस्थलैश्च रम्ये
  विपिनतटे सह तैश्चिरं सरेमे ॥ १० ॥

वियन्मध्यं भास्वत्यधिगतवति प्रोज्झिततृणः
  पिपासाक्रान्तैस्तैस्सुरभिनिकरो गोपतनयैः ।
विषज्वालातप्तं कृतनिवसतेस्तत्र फणिनो
  विना कृष्णं गत्वा तपनतनया तीर्थमपिबत् ॥ ११ ॥

विकृतवक्त्रविलोचनतारकाः
  पुलिनदेशनिपातितविग्रहाः ।
मरणमापुरनुक्षणमेव ते
  ज्वलनपार्श्वगताश्शलभा इव ॥ १२ ॥

विचिन्वन्मुकुन्दोऽथ गोमित्रबृन्दं
वनान्ते स्ववेणुस्वनं श्रावयंश्च ।
मुहुः क्रन्दतो भ्रंशितस्य स्वयूथा-
द्दशामापमातङ्गपोतस्य दीनः ॥ १३ ॥

ततस्समासाद्य यमस्वसारं
तत्तीरसुप्तान्सुहृदो गतासून् ।
वर्षत्सुधौघैर्भगवान्कटाक्षैः
प्राबोधयत्स्वापविबोधितान्वा ॥ १४ ॥

शौरेस्सर्वे सविधमचिरादेत्य सन्तुष्टचित्ता-
स्स्थित्वा बालाः पद्रुतमभितस्स्तोतुमारेभिरे ते ।
कारुण्याब्धे क इह वद नस्त्वामृते रक्षकोऽन्यो
भूयस्तत्तद्विपदि सपदि त्वं ह्यरक्षः कुलं नः ॥ १५ ॥

स्तुत्वेत्थं कतिचिन्मुकुन्दचरणौ चक्रुश्शिरस्यर्भकाः
केचित्तत्तनुमालिलिङ्गुरचिरादूचुश्च केचिच्छिवम् ।
आजिघ्रुः कतिचिच्च मस्तकतले गावश्च हर्षाश्रुभि-
र्जिह्वाग्रेण तनुं विलिह्य शिषिचुः कृष्णस्य मेघद्युतेः ॥ १६

स्तुतोऽयं कालसर्पं तं जिघांसुर्नन्दनन्दनः ।
चिन्तयामास निश्चेष्टो निस्तरङ्ग इवाम्बुधिः ॥ १७ ॥

विचिन्त्य शौरिस्सहसा कदम्बं
तीरोत्थितं वृक्षमुदग्रकोटिम् ।
आरुह्य तस्मिन्सलिले पपात
तत्पुष्पगुच्छः किल पूर्णभृङ्गः ॥ १८ ॥

निपतति यदुनाथे क्षोभिताम्भस्सरस्तत्
क्षुभितगहनगर्भोद्गच्छदत्युग्रयादः ।
विविधशबलशाकापूर्णवह्निप्रतप्त-
क्वथितसलिलपूर्णस्थालिकावस्थमासीत् ॥ १९ ॥

क्रुद्धोऽथ कालीयफणी मुकुन्द-
मायान्तमाबध्य शरीरवल्ल्या ।
फूत्कारनिस्सारितबुद्बुदाढ्या-
ज्जलादुदैत्क्ष्वेळ इवाम्बुराशेः ॥ २० ॥

आस्फोट्य विस्फुटपरिस्फुरितस्फटाग्रैः
कृष्णं कराळरदनैर्दशति स्म भोगी ।
सोऽप्युज्ज्वलो रुधिरबिन्दुसमाचिताङ्गो
रम्येन्द्रगोपचितशाद्वलवद्रराज ॥ २१ ॥

कोपविघूर्णितभोगविभक्त-
प्रोच्चलदम्बुतरङ्गचिताङ्गम् ।
नन्दकिशोरमहो रुचिराभं
भोगवरेण दृढं स बबन्ध ॥ २२ ॥

भवबन्धविमोक्तापि नर्मणे भोगिभोगतः ।
सभारबन्धं बद्धोऽयं बालत्वमनुपालयन् ॥ २३ ॥

दृष्ट्वा द्राक्तदनुविचेष्टितं मुकुन्दं
सुप्तं तं पयसि निमीलितेक्षणाब्जम् ।
एवं ते रुरुदुरहो गतोऽसि शौरे
गोपेभ्यः कथय कथं निवेदयामः ॥ २४ ॥

ततो बाला रुदन्तस्ते व्रजं गत्वा विषाविले ।
ह्रदे कृष्णः पपातेति यशोदायै न्यवेदयन् ॥ २५ ॥

श्रुत्वा यशोदा तनयात्ययं द्रा-
क्त्यक्तान्यकार्याऽश्रुमुखीत्यरोदीत् ।
जाने विना राममसावरण्यं
गतो यदा मृत्युरनुप्रविष्टः ॥ २६ ॥

श्रुत्वैतत्प्रतिवेशिनी सरभसं तस्या विवेशालयं
किं रोदिष्यथि ते क वा प्रियसुतो ब्रूहीति पृच्छन्त्यमुम् ।
सर्वेऽप्येवमुपेत्य किन्विति जनास्सङ्घी बभूवुः क्षणा-
त्तेभ्यस्सर्वमसौ निगद्य निरगाद्यत्रावमग्नश्शिशुः ॥ २७ ॥

सीरपाणिमुखसर्वजनौघ-
श्शोकगद्गदगळो नु यशोदाम् ।
निर्जगाम चरितं व्रजसूनो-
श्चिन्तयन्विनिगदन्प्ररुदंश्च ॥ २८ ॥

ततस्सर्वे ह्रदं गत्वा क्लिन्नकुन्तलचन्द्रकम् ।
प्लवमानं विचेष्टं तं दृष्ट्वेत्थं रुरुदुश्शुचा ॥ २९ ॥

विषहते त्वयि नन्दकिशो[illegible]
विषहते कथमद्य जनोऽप्ययम् ।
व्रजति नो निखिले विषये स्पृहा
व्रजति नो यदि दीनजनान्भवान् ॥ ३० ॥

(अनुवर्तते)

प्रतिभाति । वाचस्पतिमिश्रास्तु बौद्धयुगादनन्तरवर्तिनः तस्मात्तेषा वचसि बौद्धदार्शनिकानां मतानि ग्रथितानि भवन्ति । तेन भाष्यकारस्य प्राचीनता नैव भज्यते । मिश्रमहोदयस्तु वार्त्तिकव्याख्यायां बौद्धमता-न्युत्थाप्य निजव्याख्याकौशलं प्रकटीचकारेत्यत्र कानुपपत्तिश्चकास्ति? 'क्षणिकवाद' 'नैरात्म्यवाद' प्रभृतयोऽतिप्राचीनेषु उपनिषद्भारता-दिष्वपि उपलभ्यन्ते । 'दशावयववादः' बौद्धानां जैनानां वा यदि भवेत्तर्हि वात्स्यायनः 'नैय्यायिका' इति न निर्दिशेत् । नास्तिकादिनामैव गृह्णीयात् । तस्मात्तर्कवागीशमहोदयस्य मतमपि नातीवहृदयङ्गममिति प्रतिभाति ॥

न्यायशास्त्रप्रबन्धस्य समालोचनेनैवम्प्रतिभाति । न्यायसूत्र-भाष्यकारः वात्स्यायनः, पक्षिलस्वामी, पक्षिलमुनिरिति नामभिः परिचित इति ज्ञायते ॥

न्यायभाष्यस्य * चरमे वात्स्यायननाम्न उल्लेखो दृश्यते ॥

उद्योतकरविरचितन्यायवार्तिकस्यान्तिमपद्येऽपि वात्स्यायननाम्न उल्लेखो † दृश्यते । एतेन भाष्यकारस्य मुख्यं प्रसिद्धं च नाम 'वात्स्या-यने'ति सूच्यते ॥

न्यायवार्त्तिकटीकायां‡ः प्रारम्भे वाचस्पतिमिश्रा न्यायभाष्यकारं

---

* योऽक्षपादमृषिं न्यायः प्रत्यभाद्वदतां वरम् ।
तस्य वात्स्यायन इदं भाष्यजातमवर्तयत् ॥ न्या. भा.

† यदक्षपादप्रतिमो (प्रतिभो) भाष्यं वात्स्यायनो जगौ ।
अकारि महतस्तस्य भरद्वाजेन वार्त्तिकम् । न्या.वा.

‡ अथ भगवता अक्षपादेन निःश्रेयसहेतौ शास्त्रे प्रणीते व्याख्याते च भगवता च पक्षिलस्वामिना किमपरमवशिष्यते यदर्थं वार्त्तिकारम्भः । न्या. वा. ता. टीका.

*'पक्षिलस्वामी' ति कीर्तयामासुः। विश्वविश्रुतकीर्तिर्माधवाचार्यस्स
दर्शनसङ्ग्रहे अक्षपाददर्शने न्यायभाष्यकारं 'पक्षिलस्वामी' ति नि
देश ॥

वरदराजः स्वरचित "तार्किकरक्षा"† भिधानप्रबन्धे "पक्षि
मुनि" रिति भाष्यकारमाजुहाव। एतैः प्रमाणैर्वात्स्यायनः पक्षि
स्वामीति एवं पक्षिलमुनिरिति नामभ्यां प्रसिद्ध इति ज्ञायते। ए
वात्स्यायनः पक्षिलस्वामी पक्षिलमुनिरभिन्नाव्यक्तिः॥

पक्षिलस्वामीति वा मुनिरिति वा अनुक्ताः केचन नैय्यायिक
केवलं 'पक्षिल' इत्येवोचुः। एतेन 'पक्षिल' इत्येवं तदीयना
'स्वामी' 'मुनि' रित्यादिकन्तु वात्स्यायनस्सन्यासीति उपनामैवे
‡ ज्ञायते। अद्यत्वेऽपि श्रीधरस्वामीत्यादि नामधेयाः दृश्यन्ते॥

तार्किकरक्षाटीकाकारो मल्लिनाथः§ प्रशस्तपाद-भाष्यटीकाक
श्च॥धरश्च न्यायभाष्यकारं 'पक्षिल' नाम्नैव निरूपितवन्तौ॥

सम्प्रति वात्स्यायनः पक्षिलो वा कस्मिन् काले धरामिमाम
श्चकारेति चिन्तनीयम्। एतद्देशीया अनेके पण्डिताः कौटिल्य
न्यायभाष्यकार इति भणन्ति। तत्र युक्तयः—

---

* "पक्षिलस्वामिना च सेयमान्वीक्षकी विद्या प्रमाणादिभिः पदार्थविभज
माना" सर्वदर्शनसङ्ग्रहे, अक्षपादद.

† "अक्षचरण-पक्षिलमुनिप्रभृतयो वर्णयन्ति" तार्किकरक्षा।

‡ "Svamin may imply his becoming an ud
sina, or it may have been merely an honorary title
Kusumanjali—Cowell, Preface—p. ix.

§ 'अक्षचरणपक्षिलौ सूत्रभाष्यकारौ' मल्लिनाथटीका।

‖ यदिमौ परमास्तिकौ पक्षिलशबरस्वामिनौ नानुतिष्ठत इत्यसम्भावनमिद
न्यायकन्दली-श्रीधराचार्यः।

I. हेमचन्द्रसूरि 'रभिधानचिन्तामणि' नामकप्रबन्धे वात्स्यायनस्य अष्टनामा*न्यभ्यधात् ॥

तने 'कौटिल्यार्थ—शास्त्र' प्रणेता चाणक्य एव न्यायसूत्रभाष्यकारो वात्स्यायन इति ज्ञायते, कौटिल्यचणकात्मजपक्षिलस्वामिविष्णुगुप्तेत्यादिनामभिः मौर्यचन्द्रगुप्तस्य सचिवो नन्दकुलान्तकः कुटिलमतिश्चाणक्य एवेति स्फुटं प्रतीतेः ॥

II. परन्तु कौटिल्यार्थशास्त्रस्य 'विद्या समुद्देश' प्रकरणे 'आन्वीक्षिकीप्रशंसायां चाणक्यो यत्पद्यमुदाहरत्तदेव किञ्चित्परिवर्तितं न्याय†भाष्ये दृश्यते। तेनैवं ज्ञातुं पार्यते यत्कौटिल्य एव न्यायभाष्ये अर्थशास्त्रोक्तपद्यस्य चतुर्थं चरणं परिवर्त्य उदाजहारेति। न्यायभाष्ये तु एतत्पद्यस्य चतुर्थचरणः 'विद्योद्देशे प्रकीर्तिते'ति। एतच्चतुर्थचरणद्वारा एवं ज्ञायते,—कौटिल्य एव न्यायभाष्ये 'अहं' विद्योद्देशे—मत्कृतार्थशास्त्रस्य विद्यासमुद्देशप्रकरण एतामान्वीक्षिकीमेवं प्रतिपादितवानित्युवाचेति ॥

III. किञ्च अर्थशास्त्रस्या‡न्ते कौटिल्यश्शास्त्रोद्धारं चकारेति वर्णितम्। तेनेत्थं ज्ञातुं पार्यते—कौटिल्य एव न्यायसूत्राण्युद्धृत्य, भाष्यं प्रणिनायेति ॥

---

* वात्स्यायनो मल्लनागः कौटिल्यश्चणकात्मजः।
द्रमिलः पक्षिलस्वामी विष्णुगुप्तोऽङ्गुलश्चसः।
अभिधानचिन्तामणि, मर्त्यकाण्डे, ५१८।

† 'सेयमान्वीक्षिकी प्रमाणादिभिर्विभजमाना—
प्रदीपस्सर्वविद्यानामुपायस्सर्वकर्मणाम्।
आश्रयस्सर्वधर्माणां विद्योद्देशे प्रकीर्तिता ॥' न्या. भा. १-१-१ सू.

‡ येन शस्त्रञ्च शास्त्रञ्च नन्दराजगता च भूः।
अमर्षेणोद्धृतान्याशु तेन शास्त्रमिदं कृतम् ॥ कौटिल्यार्थ शा. शेषे.

## तन्मतसमालोचनम्.

अत्रेत्थमभिधीयते—

I. हेमचन्द्रश्लोकद्वारा कौटिल्य एव न्यायभाष्यकार इति निर्णेतुं न शक्यते। नाम्न ऐक्याद्व्यक्तेरैक्यं न सुसाधम्। न्यायभाष्यकारवत्कौटिल्यस्यापि वात्स्यायन इति पक्षिलस्वामीति च नामद्वयं सम्भवेत्। परन्तु तार्किकरक्षायां वरदराजस्य वचनेन मल्लिनाथीयतद्व्याख्यया च न्यायभाष्यकारवात्स्यायनस्य पक्षिल इति नामान्तरमस्तीत्यवसीयते। तस्मा'त्स्वामी'ति तस्योपनामैवेति प्रतीयते। न्यायकन्दल्याः प्रारम्भे 'पक्षिल—शबरस्वामिना'विति श्रीधरोक्त्यापि प्रोक्त एवार्थः दृढीकृतो भवति। सत्येवं, वाचस्पतिमिश्रप्रमुखा स्वामीति उपनाम्नैव व्यवाजहुरिति ज्ञायते। यदि कौटिल्यस्य नामान्तरं 'पक्षिलस्वामी'ति, न्यायभाष्यकारस्य नामान्तरं पक्षिल इति च भवेत्, तर्हि एतन्नाम्ना न्यायभाष्यकारः कौटिल्य इति निर्णेतुं न शक्यते॥

II. 'प्रदीपः सर्वविद्यानां—' इत्यादिपद्यद्वारा न्यायभाष्यकार अर्थशास्त्रकारश्चैक एवेति निश्चेतुं न पार्यते। एकः प्रबन्धकारः केनचिदुद्देशेन ग्रन्थान्तरगतमपि पद्यं किञ्चित्परिवर्त्य उल्लिखेत्। किञ्च कौटिल्यो यदि न्यायभाष्यं विरचय्य पूर्वोक्तपद्यद्वारा अर्थशास्त्रे आन्वीक्षिक्याः कीर्तनमावश्यकमिति मनुते, तदैतत्पद्यस्य चतुर्थचरणे 'अर्थशास्त्रे प्रकीर्तिता' इत्येव कथयेत्। अर्थशास्त्रीयविद्यासमुद्देशप्रकरणं विद्योद्देशशब्दद्वारा अस्पष्टभावेन किमिति प्रकाशयेत्? यदि 'विद्योद्देश' इत्युक्त्यैव अर्थशास्त्रीयतत्प्रकरणं ज्ञायते, तर्हि कौटिल्यादन्योपि न्यायभाष्ये 'अर्थशास्त्रे एवं आन्वीक्षिक्याः प्रशंसा अस्ती'ति वक्तुं प्रभवेदेव। वस्तुतः भाष्यकारः प्रथमं 'सेयमान्वीक्षिकी' इत्यभिधाय,

निरूपितपद्यस्य चरमे चरणे 'विद्योद्देशे प्रकीर्तिता' इत्युक्त्या एवं ज्ञायते, यत् विद्योद्देशे—शास्त्रे त्रयीप्रभृतिचतुर्विधविद्यानां यत्र कीर्तनं, तत्रास्या आन्विक्षिक्या एवाभिधानं ; एषा आन्वीक्षिकीविद्यैव चतुर्विध-विद्यान्तर्गता चतुर्थी विद्या, इति । जयन्तभट्टोऽप्येवमेवाभिप्रैति । परन्तु तत्रोद्धृतपद्यस्य चतुर्थचरणे 'विद्योद्देशे परीक्षिते'ति पाठो दृश्यते । तद्दृष्ट्या च शास्त्रे चतुर्विधविद्यपरिगणनस्थले एषा आन्वीक्षिकी विद्या परीक्षिता—अवधारिता अस्तीति । एषा न्यायविद्यैव चतुर्थी आन्वीक्षिकीति निश्चप्रचमिति तात्पर्यं ॥

किञ्च अर्थशास्त्रे साङ्ख्यस्यापि आन्वीक्षिक्यन्तर्गतता न्यरूपि । वात्स्यायनादयः तान्नाभिप्रयन्तीति तद्ग्रन्थसन्दोहैरवगम्यते । सत्येवं कौटिल्य एव कथं न्यायभाष्यकरो भवेत्?

किञ्च अर्थशास्त्रे आन्वीक्षकीति पाठो दृश्यते । स च समीचीनश्चेत्तं न्यायभाष्यकाले किमर्थमुपेक्षतेत्यादिकं दूषणं दुर्वारं भवतीति ॥

III. अर्थशास्त्रस्य चरमे भागे विद्यमानशास्त्रशस्त्रनन्दराज्योद्धारवचनमात्रेण कौटिल्य एव न्यायभाष्यकार इति न सिध्यति । स हि नानाशास्त्रेभ्यो राजनीतिसमुच्चयं उद्दधार । तमेव शस्त्रनन्दराज्योद्धारेण साकमुदगिरत् । न पुनः न्यायसूत्रोद्धारमभिप्रेत्येति नायं निरवकाशो हेतुः । परन्त्वनेन पद्येन कौटिल्यः शास्त्रोद्धारादनन्तरं अर्थशास्त्रमरीरचदित्येवावगम्यते ॥

किञ्च वात्स्यायनभाष्य—कौटिल्यार्थशास्त्रयोः समालोचने बौद्धयुगेतिहाससमाकलने च प्रोक्तहेतवः कल्पनाप्रसूता एवेति ज्ञायते । यदि चाणक्य एव भाष्यकारस्तर्हि प्रसिद्धं चाणिक्यनाम परित्यज्य भाष्ये किमिति विभिन्नमभिधानमावहेत्? न्यायभाष्ये कुत्रापि भ्रमतोपि

## तन्मतसमालोचनम्.

अत्रेत्थमभिधीयते—

I. हेमचन्द्रश्लोकद्वारा कौटिल्य एव न्यायभाष्यकार इति निर्णेतुं न शक्यते। नाम्न ऐक्याद्व्यक्तेरैक्यं न सुसाधम्। न्यायभाष्यकारवत्कौटिल्यस्यापि वात्स्यायन इति पक्षिलस्वामीति च नामद्वयं सम्भवेत्। परन्तु तार्किकरक्षायां वरदराजस्य वचनेन मल्लिनाथीयतद्व्याख्यया च न्यायभाष्यकारवात्स्यायनस्य पक्षिल इति नामान्तरमस्तीत्यवसीयते। तस्मा 'त्स्वामी' ति तस्योपनामैवेति प्रतीयते। न्यायकन्दल्याः प्रारम्भे 'पक्षिल—शबरस्वामिना' विति श्रीधरोक्त्यापि प्रोक्त एवार्थः दृढीकृतो भवति। सत्येवं, वाचस्पतिमिश्रप्रमुखा स्वामीति उपनाम्नैव व्यवाजह्रुरिति ज्ञायते। यदि कौटिल्यस्य नामान्तरं 'पक्षिलस्वामी' ति, न्यायभाष्यकारस्य नामान्तरं पक्षिल इति च भवेत्, तर्हि एतन्नाम्ना न्यायभाष्यकारः कौटिल्य इति निर्णेतुं न शक्यते॥

II. 'प्रदीपः सर्वविद्यानां—' इत्यादिपद्यद्वारा न्यायभाष्यकार अर्थशास्त्रकारश्चैक एवेति निश्चेतुं न पार्यते। एकः प्रबन्धकारः केनचिदुद्देशेन ग्रन्थान्तरगतमपि पद्यं किञ्चित्परिवर्त्य उल्लिखेत्। किञ्च कौटिल्यो यदि न्यायभाष्यं विरचय्य पूर्वोक्तपद्यद्वारा अर्थशास्त्रे आन्वीक्षिक्याः कीर्तनमावश्यकमिति मनुते, तदैतत्पद्यस्य चतुर्थचरणे 'अर्थशास्त्रे प्रकीर्तिता' इत्येव कथयेत्। अर्थशास्त्रीयविद्यासमुद्देशप्रकरणं विद्योद्देशशब्दद्वारा अस्पष्टभावेन किमिति प्रकाशयेत्? यदि 'विद्योद्देश' इत्युक्त्यैव अर्थशास्त्रीयतत्प्रकरणं ज्ञायते, तर्हि कौटिल्यादन्योपि न्यायभाष्ये 'अर्थशास्त्रे एवं आन्वीक्षिक्याः प्रशंसा अस्ती' ति वक्तुं प्रभवेदेव। वस्तुतः भाष्यकारः प्रथमं 'सेयमान्वीक्षिकी' इत्यभिधाय,

निरूपितपद्यस्य चरमे चरणे 'विद्योद्देशे प्रकीर्तिता' इत्युक्त्या एवं ज्ञायते, यत् विद्योद्देशे—शास्त्रे त्रयीप्रभृतिचतुर्विधविद्यानां यत्र कीर्तनं, तत्रास्या आन्विक्षिक्या एवाभिधानं ; एषा आन्वीक्षिकीविद्यैव चतुर्विध-विद्यान्तर्गता चतुर्थी विद्या, इति । जयन्तभट्टोऽप्येवमेवाभिप्रैति । परन्तु तत्रोद्धृतपद्यस्य चतुर्थचरणे 'विद्योद्देशे परीक्षिते'ति पाठो दृश्यते । तद्दृष्ट्या च शास्त्रे चतुर्विधविद्यपरिगणनस्थले एषा आन्वीक्षिकी विद्या परीक्षिता—अवधीरिता अस्तीति । एषा न्यायावद्यैव चतुर्थी आन्वीक्षिकीति निश्चप्रचमिति तात्पर्यं ॥

किञ्च अर्थशास्त्रे साङ्ख्यस्यापि आन्वीक्षिक्यन्तर्गतता न्यरूपि । वात्स्यायनादयः तान्नाभिप्रयन्तीति तद्ग्रन्थसन्दोहैरवगम्यते । सत्येवं कौटिल्य एव कथं न्यायभाष्यकरो भवेत्?

किञ्च अर्थशास्त्रे आन्वीक्षकीति पाठो दृश्यते । स च समी-चीनश्चेत्तं न्यायभाष्यकाले किमर्थमुपैक्षतेत्यादिकं दूषणं दुर्वारं भवतीति ॥

III. अर्थशास्त्रस्य चरमे भागे विद्यमानशास्त्रशस्त्रनन्दराज्यो-द्धारवचनमात्रेण कौटिल्य एव न्यायभाष्यकार इति न सिध्यति । स हि नानाशास्त्रेभ्यो राजनीतिसमुच्चयं उद्दधार । तमेव शस्त्रनन्दराज्योद्धारेण साकमुदगिरत् । न पुनः न्यायसूत्रोद्धारमभिप्रेत्येति नायं निरवकाशो हेतुः । परन्त्वनेन पद्येन कौटिल्यः शास्त्रोद्धारादनन्तरं अर्थशास्त्रमरी-रचदित्येवावगम्यते ॥

किञ्च वात्स्यायनभाष्य—कौटिल्यार्थशास्त्रयोः समालोचने बौद्ध-युगेतिहाससमाकलने च प्रोक्तहेतवः कल्पनाप्रसूता एवेति ज्ञायते । यदि चाणक्य एव भाष्यकारस्तर्हि प्रसिद्धं चाणिक्यनाम परित्यज्य भाष्ये किमिति विभिन्नमभिधानमावहेत्? न्यायभाष्ये कुत्रापि भ्रमतोपि

चाणिक्यनाम न समापतितम् । तथा अर्थशास्त्रेपि वात्स्यायननामापि न श्रूयते । तस्मात्तदन्यो वात्स्यायनः । एवं कामसूत्रकारोऽपि न न्यायभाष्यकारः । कामसूत्रभाष्यकारो यशोधरः वात्स्यायनमल्लनाग-नामभ्यां सूत्रकारं स्तौति* । तन्नामसु पक्षिलस्वामिनाम न दृश्यते । न्यायसूत्रन्यायभाष्ययोश्शैल्यपि नैकविधा । किञ्च भाष्ये मङ्गला-चरणं न दृश्यते । कामसूत्रे तद्दृश्यते । तस्मात्कामसूत्रकारः न न्यायभाष्यप्रणेता इति ॥

एवं च न्यायभाष्ये वेदान्तप्रभृतिदर्शनानां विचारो वर्तते । तस्मात्कृष्णद्वैपायनाद्बहोः कालादनातरं बुद्धात्पूर्वमेव रचितं न्यायभाष्यम् । क्रिस्तपू. ७०० अब्दाः परं तन्ननिर्मितम् । क्रिस्तपू. २५०० अब्दा-दनन्तरं क्रि.पू. ७०० अब्दमध्ये एव न्यायभाष्यं निर्मम इत्येवाभि-प्रैति नरेन्द्रचन्द्रः । ग्रन्थगौरवभिया नाधिकमभिधीयते । ततश्च योग-शब्दः क्रि.पू. ७०० अब्दीय इति सिध्यति । तं समयमारभ्य योग-शब्दः लाघवान्नैय्यायिकवैशेषिकबुबोधयिषया आरम्भवादरूप (परमाणु-संयोग) यौगिकार्थमभिप्रेत्य प्रायोजि वात्स्यायनजैनबौद्धादिपण्डितैरिति सर्वमनवद्यम् ॥

---

## परिशिष्टम्.

### प्राचीनग्रीक्दर्शने योगवादः.

क्रिस्तपू. ६२५ अब्दमारभ्यैव ग्रीक्दर्शनस्य समुदयः । तत्रा-दिमो थेलिसनामा प्रथमं सलिलस्यैव मूलोपादानतामगादीत् । तदनु अनाक्सामिनिसनामा दार्शनिकः सलिलापेक्षयापि सूक्ष्मं गतिशीलं वायुं मूलोपादानं जगाद । तदनन्तरं जनोप्यानिसः इलियाटिक्शाखा-

* 'वात्स्यायन इति गोत्रनिमित्तासंज्ञा मल्लनाग इति सांस्कारिकी' ॥

प्रवर्तक ईश्वरमास्थाय तस्यैव जगत्कारणतां उररीचकार । पार्मिनायिसभिधानः ग्रीकुलोत्तंसः दार्शनिकेषु प्रसिद्धः । स तु जगत एवेश्वरत्वमङ्गीकृत्याद्वैतवादं प्रवर्तयांचक्रे—ईश्वरस्य परिवर्तनाभावात्तद्रूपजगतोऽपि तन्नास्तीति जगत्परिवर्तनं भ्रान्तिविलासितम् । जन्ममृत्यू न स्तः । वस्तु किमपि सीमानिर्दिष्टं न भवति । सर्वमपि जीवनसत्तारूपमिति तन्मतम् । ततश्च तदन्तेवासी जेनोनामा तर्कशास्त्रद्वाराविस्तारं (Extension) परिमाणं (Magnitude), गतिं (Motion), स्थानं च (Space) निराचकार । कस्यचिद्वस्तुनः परिमाणनिर्देशे हि तस्यैव बृहत्तमं क्षुद्रतममिति चाख्याद्वयं प्रदातव्यं । तद्वस्तु बृहत्तमं, कुतः, असङ्ख्यांशैर्विभाज्यत्वात् । क्षुद्रतमं, कुतः विस्तारहीनस्य अंशस्य परिमाणमेव नास्तीति । गतिरपि धारणातिगा ; यद्बिन्दुमादाय गतिरारभ्यते, तदारभ्य चरमबिन्दुपर्यन्तमपि कल्पिता रेखा बिन्दुसमष्टिरूपैव, नातिरिक्ता । बिन्दोः किल स्वतः परिमाणमेव नास्ति । सत्येयं तत्समष्टिरूपस्यापि तन्नास्तीति लोके परिमाणमेव दुर्लभम् । तदभावे गमनमभूदिति नास्ति । अत्र सद्योनिक्षिप्तेषुः निदर्शनं भवति । स शरः लक्ष्यं स्थानं एकं एकमिति बिन्दुसमष्टिमतीत्य गच्छति । बिन्दुरपि अतिसूक्ष्मबिन्दुसमष्टिरूप इति तस्य परिमाणाभावात् बिन्द्वतिक्रमणं तत्रैव स्थितिश्चैकमेव सञ्जातम् । तस्माच्छरस्य गमनं, निश्चलावस्थानामित्येकमेव । गतिस्तु दृष्टिभ्रमविषयीभूतैवेति तदभिप्रायः॥

तदनन्तरं ल्यूकीपास्शिष्यः आबूडेराभिजनः 'डिमाक्रिटास्' (470 B.C.) नामा आधुनातनजडवादिनां नेता बभूव । सः अनाकसमिनिस्, डैऔनिज्, अनाक्समागौरास्प्रभृतीनां मतानि सम्यक् समालोचितवान् । अयमेव योगवादस्य (परमाणुसंयोग) प्रधानसेनानीः सृष्टेरुपकरणानि असङ्ख्याकानि, सूक्ष्मसूक्ष्मांशैर्विभक्तानि । तेषां सङ्कलनादेव सृष्टिः, तेषां वियोगादेव ध्वंसः । अणवः असङ्ख्याकाः, अवि-

भाज्याः, अथ च तेऽपि आगोरासोक्तगणितबिन्दुरूपा न भवन्ति । गणितबिन्दोः विस्तारो नास्ति । तत एव तदस्तित्वमपि दूरापास्तं । अणुनिचयस्य रासायनिकसम्बन्धतः साम्येऽपि परस्परं आकाशवैषम्यमस्त्येव । ते तु गतिशीलाः, परन्तु सा गतिः स्वाभाविकी । ते नियतिवशतः शक्तिसम्पन्नाः । गत्यङ्गीकारे च शून्यमभ्यङ्गीकरणीयमिति अवकाशस्यापि सिद्धिः । ततः कालस्येति प्रागुक्तवस्तुचतुष्टयमप्यावश्यकं भवति । एतच्छून्यमेव परवर्तिभिः प्लेटोप्रभृतिभिः आरिस्टाटिल्प्रभृतिभिश्च 'असदिति' 'सत्ताया अव्यक्तावस्थे'ति च गीयते । अयमेव डिमाक्रटिस् नैय्यायिकवैशेषिका इव योगवादमेव समास्थितः । ततः बहुपूर्वं भारते अयं योगवादः सार्वजनीनस्समासीत् ॥

अयं डिमाक्रटिस्प्रसूतो योगवादः ऐरोपीयदर्शनाभ्युदये नवजागरणे 'डेनीयेसेनार्ट्' (1606-1541 B.C) लबे अध्यापक 'इरास्यूस्पूटोनास्' (Erycius Putaenus 1637-1572 B.D), सुप्रसिद्ध पिटरग्यसंडि (Peter-Gassendi 1646-1574 B.C) प्रमुखैः कैश्चन दार्शनिकैरभिवृद्धिं गमितो विराजते । एते सर्वेऽपि आरिस्टाटिल्प्रवर्तितजडविज्ञाने अनास्थां स्थापयामासुः । सोऽयं योगवादः परमाणूनामपि अविभाज्या अंशाः सन्तीति अद्यत्वे विज्ञानद्वारा परिशोधितः । स च द्वैतवेदान्ते बहुकालात्पूर्वमेव श्रीमदानन्दतीर्थभगवत्पादाचार्यैः 'अविभागः पराणुता' (अनुव्याख्यानं) इति वदद्भिः सुव्यवस्थापित स्समुल्लसतीति शम् ॥

दोषानेव वितर्कयद्भिरखिलैः स्नेहाद् दृढं वारितो-
प्याबद्धाञ्जलये तवाहमिति सम्प्राप्ताय सद्यः प्रभुः ।
यः शत्रोरपि सोदराय विपुलं लङ्काधिपत्यं ददौ
तस्मिन्नेव मनो ममास्तु करुणास्निग्धप्रसन्नेक्षणे ॥

## श्रुतिप्रामाण्यविषयः.

---

अनुभवानुसारित्वादेव श्रुतेः प्रामाण्योपपत्तिः, नान्यथा। ननु स्वत एव प्रमाणं श्रुतिः। न, अभ्युपगमे च स्वतःप्रामाण्ये श्रुतिर्निर्दुष्टा श्रुतित्वादिति न्यायो भवितुमर्हति। तत्र च दृष्टान्ताभावात्। असाधारण्यव्यभिचारदोषप्रसङ्गः। सर्वज्ञेनेश्वरेणोक्तत्वात्प्रामाण्यमिति चेन्न। ईश्वरास्तित्वस्य श्रुतिप्रामाण्यापेक्षत्वात् ईश्वरास्तित्वश्रुतिप्रामाण्ययोः अन्योन्याश्रयदोषप्रसङ्गात्। अपौरुषेयत्वादिति चेन्न। अन्यत्रापौरुषेयानभ्युपगमात् हेतुसाध्ययोः अपौरुषेयत्वानिर्दुष्टत्वयोः साहचर्यदर्शनाभावात् व्याप्यत्वासिद्धिदोषप्रसङ्गात्॥

कथं पुनरनुभवानुसारित्वमाम्नायस्य। उच्यते। प्रमाणप्रमेयादिव्यवहाराश्रयत्वात् प्रागेव प्रमाणप्रमेयव्यवहारात् सिद्धस्य आत्मनः प्रमाणमनपेक्ष्यैव सिद्धत्वम् तस्य च जाग्रत् स्वप्नसुषुप्त्यवस्थात्रयसाक्षित्वात् व्यभिचरतामवस्थात्रयाणां मिथ्यात्वं अव्यभिचरतः साक्षिणः सत्यत्वं च। अपि च मिथ्याभूतयोः स्वप्नजागरप्रपञ्चयोरधिष्ठानत्वेनात्मनस्तयोः प्रपञ्चयोर्जन्मस्थितिभङ्गकारणत्वं नाम ब्रह्मत्वम्। एवमहमवस्थात्रयसाक्षी जगतो जन्मस्थितिभङ्गकारणत्वं नाम ब्रह्मत्वम्। एवमहमवस्थात्रयसाक्षी जगतो जन्मस्थितिभङ्गकारणं ब्रह्मास्मीतिप्रतिपत्तिः सम्यक्ज्ञानं विद्या च। तदभावोऽविद्या। अविद्यैव दुःखस्य हेतुः। तस्या विद्याया बाध्यमानत्वात् समस्तदुःखोपमर्देनेन मोक्षो नाम आनन्दमयस्थितिप्राप्तिः विद्यया। एतज्ज्ञानस्य अनुभवावसानत्वात् प्रामाण्योपपत्तिः। अतश्च एतदर्थप्रतिपिपादयिषोः श्रुतेरपि प्रामाण्योपपत्तिः॥

ननु अन्यदर्थप्रतिपादिका श्रुतिः, तर्हि विविधार्थप्रतिपिपादयिषोः श्रुतेरप्रामाण्यमेव प्रसज्येत । तत्र अर्थाभासनिराकरणसम्यगर्थनिर्धारणे किं प्रमाणम् । न तर्कः अप्रतिष्ठितत्वात्तस्य । किं तर्हि अनुभव एव । ननु अर्थान्तरस्यापि अनुभवावसानत्वम् । अत्रोच्यते । अनुभवान्तरं पूर्वोक्तानुभवाद्भिन्नं विरुद्धं वा । विरुद्धानुभवौ तु अनुपपन्नावेव । न हि अग्निः उष्णः शीतलश्च भवितुं शक्यते । भिन्नत्वे तु तत्त्वे विकल्पसम्भवः । न हि आत्मनः स्वतःसिद्धत्वं शक्यते केनचिन्निराकर्तुम्, यस्तु निराकर्ता तस्यैव आत्मत्वात् । अवस्थात्रयानुभवस्य सर्वजनीनत्वात् न तदनुभवजन्यनिर्धारणं शक्यते केनचिदपह्नोतुम् । एवं निर्धारितस्य तत्त्वस्य बाधकमनुभवान्तरमसम्भवमेव । अपि च विकल्पासहिष्णुर्हि तत्वम् अनेकविधं भवितुं न शक्यते । तस्मात् अनुभवान्तरं भ्रान्तिजन्यमेव सवितुर्गतिवत् । यद्यनुभवावसानत्वाभावमर्थान्तरस्य अतश्च श्रुतेरप्रामाण्यमेव प्रसज्येत । तस्मात् यथोक्तानुभवानुसारित्वादेव श्रुतेः प्रामाण्यमिति ॥

चि. महादेवय्य.

## श्रीकृष्णराजयशोवर्णनम्

---

दीर्घायुष्यमनामयं तनुबलं प्रज्ञाबलं धीबलं
सत्सन्तानफलं सुहृज्जनबलं भोगान् प्रियान् बान्धवान् ।
प्रख्यातिं गुरुदैवभक्तिविभवं सत्सङ्गतिं कांक्षित-
श्रीलाभं विजयं च कृष्णनृप ते दत्तां रमावल्लभः ॥ १ ॥

सा त्वां पातु सरस्वती भगवती सर्वाङ्गरक्ता कथं ?
शुक्लाभा ननु सा पुरा खलु तथा कृष्णेन्द्र साद्यारुणा ! ।
कस्मात् तेऽद्य धरानुरागकिरणैश्शोणीकृता साधुना
कृष्णेन्दो तदुदीरिता ननु मया सर्वाङ्गरक्तेति सा ॥ २ ॥

राजन् ! वर्णप्रपञ्चे स्पृशति सितरुचं त्वद्यशश्चन्द्रिकाभिः
चित्रो वर्णो रसज्ञामभजत विदुषां पिङ्गलो वत्सरोऽभूत् ।
किष्किन्धां प्राप नीलः रविरधमरुणः संश्रिता वाक्प्रपञ्चान्
अन्ये सङ्कीर्णवर्णाः सपदि कपिशताऽऽढ्योऽभवद्रामचन्द्रः ॥

कास्ते लक्ष्मण ! राघवः ? स्मृतिपथं नायाति वाऽक्ष्णोः कुतः ?
रामोऽहं किल ? भक्त ! विस्मृतिरियं का ? विस्मृतिः कस्य ते ?।
तत्किं पृच्छसि राघवं ? भवतु तत् त्वं दुग्धवर्णः कथं ?
मद्भक्तोत्तमकृष्णभूपतियशांस्यापृच्छ तत्कारणम् ॥ ४ ॥

कृष्णेन्दो ! तव निस्तुलाऽमितयशोराकासुधांशूदये
श्रीकृष्णो बलभद्रतां रघुपतिस्सौमित्रितां चापतुः ।
क्षीराब्धयादिषडर्णवा अपि ययुः क्षीराब्धितां निम्नगाः
सर्वा जाह्नवितां तथा तिथिगणो राकात्मतामप्यगात् ॥ ५ ॥

श्रीमन् कृष्णमहीन्द्र तावकयशः पुञ्जांशुपञ्चीकृत-
ब्रह्माण्डस्थसमस्तकोशनिचयप्रत्यूढकोशच्छटाः ।
प्रापुः काममलेखतां श्रुतधराः कोशानपेक्षं बुधा-
स्त्वाम्नायाध्ययनक्रमात्प्रवचनं छात्रेष्वहो तन्वते ॥ ६ ॥

स्पर्शग्राह्यलिपिस्थितिर्धवलिमामात्रेण वर्णस्थितिः
वाङ्मात्रेण सितेतरस्थितिरपां क्षीरात्मनावस्थितिः ।
दर्शादर्शविशेषविस्मृतिरपि क्षोण्यां प्ररूढाः प्रभो
कृष्णेन्दो तव विश्वविक्रमयशस्त्रैविक्रमप्रक्रमे ॥ ७ ॥

लेखाः प्रापुरलेखतां क्षितिधराः कैलासतामब्धयः
क्षीराम्भोनिधितां शकुन्तनिवहः कादम्बतां कुञ्जराः ।
जिष्णोर्वारणतां सितेतररुचस्सर्वास्सिताकारतां
कृष्णेन्दो किल तावकीनयशसस्त्रैविक्रमप्रक्रमे ॥ ८ ॥

कामी कोऽपि यशांसि ते न सहते श्रीकृष्णपृथ्वीपते !
को हेतुर्वद कोविद क्षितिपते हेतुः किलायं शृणु ।
स्वस्कीर्तीन्दुकरैरशेषभुवने शुक्लीकृते कुन्तलान्
कामी कोऽपि विलोक्य यौवतगतान्निन्दत्यलं ते यशः ॥ ९ ॥

**अनुलोमविलोमपद्यम्.**

ज्यां वाराहहरावाज्यां
तां ततां हि हितां तताम् ।
नोष्णेऽकृतान्तां कृष्णेनो
विभुरेककरे भुवि ॥ १० ॥

**अन्वयक्रमः**—वाराहहरौ, ततां, आज्यां, हितां, नोष्णेततां, अन्तां, ज्यां, विभुः, कृष्णेनः, भुवि, एककरे, अकृत, हि ॥

तात्पर्यार्थः——आदिवराहहरेः क्रोडाग्रे ततां, धनुर्धरात्वादासमन्ताज्जयानुषक्तां, अनुकूलस्वभावां, सौम्यस्वभावेषु विस्तृतां, अतिसुन्दरीं वसुधां, समर्थः कृष्णराजः, एकेन करेण, अनायासेन धृतवान् इति निर्गळिताभिप्रायः हीति प्रसिद्धौ ॥

पद्यान्तरगर्भितं आशीःपद्यम्.

श्रीमन् कृष्णधराधिराज कृतधीवाणीड्य भामण्डलाऽऽ-
निघ्नत्केतन भोः प्रधानविबुधोद्गीत स्वयंश्रीवृत!
वाणीवासपदेष्ट रत्नशिबिकाधार्य श्रयेः नाल्वडि-
श्रीकृष्णेन्द्र समेष्ट केवलरमाधीशाक्ष तास्ते श्रियः ॥ ११

गुप्तपद्यम्.

श्रीकृष्णराजवाणीभाण्डनिकेतप्रधानविबुधोऽयम् ।
श्रीवासदेशिकार्यः नाल्वडिकृष्णेन्द्रमेवमाशास्ते ॥ १२ ॥

राष्ट्रमङ्गलम्.

मोदन्तां सकलाः प्रजाः कृषिकला संवर्धतां लुप्यता-
मालस्यं भजतां वदान्यपदवीं भिक्षाशिनोऽप्यम्बुदाः ।
दत्तां वृष्टिमभीप्सितां विजयतां धर्मो गदः क्षीयतां
सर्वत्राऽऽयुरुपैधतां विजयतां श्रीनाल्वडीकृष्णराट् ॥ १३ ॥

ति. स. श्रीनिवासदेशिकाचार्यः,
श्रीमन्महाराजशारदाभाण्डागारप्रधानपण्डितः, मैसूरु.

# वादभूमिः

अद्वैतविद्याचार्यैः श्रीमदप्पदीक्षितैः कुवलयानन्दाख्येऽलङ्कारग्रन्थे द्वितीयविनोक्त्यलङ्कारोदाहरणतया पद्यमिदमुपात्तम्—

'आविर्भूते शशिनि तमसा मुच्यमानेव रात्रिः
नैशस्यार्चिर्हुतभुज इव च्छिन्नभूयिष्ठधूमा ।
मोहेनान्तर्वरतनुरियं लक्ष्यते मुक्तकल्पा
गङ्गारोधः पतनकलुषा गृह्णतीव प्रसादम्' ॥ इति ॥

इदन्तु पद्यं प्रकृतोपयोगाय व्याख्यायते मया । कालिदासकृते विक्रमोर्वशीयनाटके प्रथमेऽङ्के पद्यमिदं विद्योतते ॥

तस्य चैतस्य प्रकरणमिदं—केशिनामानं दानवं विजित्य तदपहृतां साध्वसवशादपगतचेतनामूर्वशीं तस्यास्सख्या चित्रलेखया सह रथेन प्रत्याहरता राज्ञा पुरूरवसा क्रमादपगच्छन्मूर्छावस्थां तामवलोक्य चित्रलेखां प्रत्युच्यते 'आविर्भूत' इत्यादि ॥

एवमेव हि तत्र नाटके पद्यादस्मात्प्राक्तनी वाचः प्रक्रिया—

चित्रलेखा—'अम्महे कहं उस्ससिदमेत्त संभविद जीविदा अज्जवि एसा सण्णं णप्पाडिवज्जादि' । (सकरुणम्) 'हळा ! उव्वासि ! पज्जवत्थावेहि अत्ताणं अणच्चरावि अ पडिभासि'॥

राजा—(सहर्ष) 'चित्रलेखे ! दिष्ट्या वर्धसे । प्रकृतिमापन्ना ते प्रियसखी, पश्य'॥

तथा च पद्यस्यास्य प्रकरणोचितोयमाशयः । बहुळपक्षक्षपातमसा प्रथममभिभूता, चन्द्रोदये सति यथा क्रमेण तेन मुच्यते ; यथा च रात्रौ

ज्वलतोज्वलनस्य ज्वाला धूमस्तोमेन मुच्यते, स्रोतःपातितकूला कलुषा च गङ्गा यथा कालुष्यात्क्रमान्मुच्यते, तथेयमूर्वशी मोहेन मूर्छया मुक्तकल्पा ईषन्न्यूनमुक्ता न तु सम्यङ्मुक्ता । इति ॥

एवं स्थिते—कुवलयानन्दचन्द्रिकाकारेण पदवाक्यप्रमाणज्ञेन वैद्यनाथेन पद्यमिदमेवं व्याख्यातम् ॥

'आविर्भूत इति मानवतीविषये नायकस्य परामर्शोऽयं—इयं वरतनुः अन्तः अन्तःकरणे मोहेन मानावेशेन मुक्तकल्पा ईषन्न्यूनमुक्ता लक्ष्यते, केव? पूर्वं रोधसस्तटस्य पतनेन कलुषा अनन्तरं कालुष्यापगमात् प्रसादं नैर्मल्यं गृह्णती आश्रयन्ती गङ्गेव' इत्यादि—

अत्रेदं विचार्यते—कुवलयानन्दोदाहृतस्यास्य पद्यस्य 'मानवतीविषये नायकस्य परामर्शोऽयं' इति प्रकरणं विवृण्वता चन्द्रिकाकारेण स्वस्य विक्रमोर्वशीयनाटकप्रबंधानवलोकनं, स्वसंभावितप्रकारेण प्रकरणकल्पनं चेति दोषद्वयमिदं प्रकटीकृतं भवति ॥

तथाहि—अनेन व्याख्यात्रा विक्रमोर्वशीयं दृष्टं न वा, दृष्टं चेत् मानवतीविषये नायकस्य परामर्शोऽयं इति प्रकरणं न प्रदर्श्येतैव, अतएव न दृष्टमिति कल्पः सिद्धान्ततामवलम्बते ॥

किञ्च — मानवतीविषयकप्रकरणस्थमेतदेव पद्यमन्यत्र ग्रन्थे व्याख्यात्रा दृष्टं न वा, यदि दृष्टं तर्हि तद्ग्रंथनाम निर्दिष्टं भवेत् तदभावात्तदभावस्सिध्यति ततश्च परिशेषात्स्वोत्प्रेक्षापक्षमात्रमवशिष्यते ॥

तथा च—दृष्टस्य परित्यागः अदृष्टस्य कल्पनं चेति दूषणद्वयमापद्यते ॥

अपि च—मूर्छाप्रकरणानवबोधोऽयं व्याख्यातुरपरमपि दोषमुद्घाटयति ॥

तथा हि—'मोहेनान्तर्वरतनुः' इत्यत्र मोहेनेति पदस्य मानावेशेनेति या व्याख्या सा कथमुपपद्येत? मुहधातोः वैचित्त्यार्थकाऽद्भावे घञि मोह इति पदं निष्पद्यते। वैचित्र्यं नाम विचित्तता, ज्ञानाभावः मूर्छेति यावत्। यां किल मूर्छां—'मूर्छा मरणायार्थसंपत्तिः' इति वेदान्तिनोऽप्याचक्षते॥

मानशब्दस्तु 'मनु अवबोधने' इति धातोर्घञि निष्पद्यते। तदर्थस्तु चित्तौज्वल्यं। अमरसिंहोऽप्याह—'मानश्चित्तसमुन्नतिः' इति यं किल एवमालङ्कारिका लक्षयन्ति—'स्त्रीणामीर्ष्याकृतः कोपो मान इत्यभिधीयते' इति॥

तथा च—मोहेनेत्यस्य मानावेशेनेति व्यख्यानमनुचितमेव। मोहस्य चित्तवृत्त्यभावरूपत्वात् मानस्य उद्रिक्तचित्तवृत्तिरूपत्वाच्च। घटघटाभावयोरिव अत्यन्तविरुद्धत्वात्तयोः पर्यायत्वस्य सुतरामसंभवात्। इति॥

पाठप्रवचनसमये भातं स्पष्टीकृतं तस्मात्।
दोषैकदृक्तया मां मा मन्यन्तां बुधास्सर्वे॥ १॥

यद्यस्ति वाचि युक्तिर्मे मोदन्तां विबुधाः परम्।
यदि दोषः स्फुटीकुर्युः कुतूहल्यस्मि निर्भरः॥ २॥

जग्गू वेङ्कटाचार्यः,
साहित्यालङ्कारः, साङ्ख्यवेदान्तविद्वान्, साङ्ख्यतीर्थः, आस्थानविद्वान्.

श्रीमन् कृष्णनृप श्रुतेक्षण दिशाधिष्ठातृमात्रोदित
ब्रह्मक्षत्रहित क्षमामव समामिन्द्रो यथा तां दिवम् ॥४३॥

निगूढपद्यम्.

विद्वत्कल्पतरो ! दक्ष ! भूसुरप्रेक्षण ! प्रभो !
श्रीकृष्णनृपते ! शाधि क्षमामिन्द्रो यथा दिवम् ॥४४॥

वर्णाधिरोहिणीपद्यम्. (३)

भू,दे,व,पा,द,ल,स,द,क्ष,त,मा,लि,का,ढ्य-
वर्णक्रमाऽऽहातियुतद्विपदक्रमेड्यः ।
भूदेवपादलसदक्षतमालिकाढ्यः
भूयादिहैव भुवि नाल्वडिकृष्णराजः ॥ ४५ ॥

मुक्ताऽमुक्तलिपिक्रमैः प्र,वि,ल,स,द्वी,वि,क्र,मा,र्थो,ह्ल,स-
च्चा,मा,ऽधी,श,प,दे,र्थ,दो,बुधनुतस्सर्वप्रजावत्सलः ।
विद्वद्भूसुरवेदलोकनयनस्सत्यैकसंजीवनः
भावज्ञश्च दुरूहभावरुचिरः श्रीकृष्णराड्वर्धताम्" ॥ ४६ ॥

कीदृशस्तुर्यकृष्णेन्दुरिति प्रश्नोत्तराष्टकैः ।
गर्भितोऽत्रान्तिमः पादश्चा,मा,धी,श,प,दे,र्थ, दः ॥ ४७ ॥

राजन् ! वर्णप्रपञ्चे स्पृशति सितरुचं त्वद्यशश्चन्द्रिकाभिः
चित्रो वर्णो रसज्ञामभजत विदुषां पिङ्गळो वत्सरोऽभूत् ।
किष्किन्धां प्राप नीलः रविरथमरुणस्संश्रितो वाक्प्रपञ्चा-
नन्ये सङ्कीर्णवर्णस्सपदि कपिशताढ्योऽभवद्रामचन्द्रः ॥ ४८ ॥

तथा हि—'मोहेनान्तर्वरतनुः' इत्यत्र मोहेनेति पदस्य मानावेशेनेति या व्याख्या सा कथमुपपद्येत? मुहधातोः वैचित्त्यार्थकाऽद्भावे घञि मोह इति पदं निष्पद्यते। वैचित्त्यं नाम विचित्तता, ज्ञानाभावः मूर्छेति यावत्। यां किल मूर्छां—'मूर्छा मरणायार्थसंपत्तिः' इति वेदान्तिनोऽप्याचक्षते ॥

मानशब्दस्तु 'मनु अवबोधने' इति धातोर्घञि निष्पद्यते। तदर्थस्तु चित्तौज्वल्यं। अमरसिंहोऽप्याह—'मानश्चित्तसमुन्नतिः' इति यं किल एवमालङ्कारिका लक्षयन्ति—'स्त्रीणामीर्ष्याकृतः कोपो मान इत्यभिधीयते' इति ॥

तथा च—मोहेनेत्यस्य मानावेशेनेति व्यख्यानमनुचितमेव। मोहस्य चित्तवृत्त्यभावरूपत्वात् मानस्य उद्रिक्तचित्तवृत्तिरूपत्वाच्च। घटघटाभावयोरिव अत्यन्तविरुद्धत्वात्तयोः पर्यायत्वस्य सुतरामसंभवात्। इति ॥

पाठप्रवचनसमये भातं स्पष्टीकृतं तस्मात्।
दोषैकदृक्तया मां मा मन्यन्तां बुधास्सर्वे ॥ १ ॥

यद्यस्ति वाचि युक्तिर्मे मोदन्तां विबुधाः परम्।
यदि दोषः स्फुटीकुर्युः कुतूहल्यस्मि निर्भरः ॥ २ ॥

**श्रीमन् कृष्णनृप** श्रुतेक्षण दिशाधिष्ठातृमात्रोदित
ब्रह्मक्षत्रहित क्षमामव समामिन्द्रो **यथा** तां **दिवम्** ॥४३॥

**निगूढपद्यम्.**

विद्वत्कल्पतरो ! दक्ष ! भूसुरप्रेक्षण ! प्रभो !
श्रीकृष्णनृपते ! शाधि क्षमामिन्द्रो यथा दिवम् ॥४४॥

**वर्णाधिरोहिणीपद्यम्.** (३)

**भू,दे,व,पा,द,ल,स,द,क्ष,त,मा,लि,का,ढ्य-**
वर्णक्रमाऽऽहतियुतद्विपदक्रमेड्यः ।
भूदेवपादलसदक्षतमालिकाढ्यः
भूयादिहैव भुवि नाल्वडिकृष्णराजः ॥ ४५ ॥

मुक्ताऽमुक्तलिपिक्रमैः **प्र,वि,ल,स,द्वी,वि,क्र,मा,र्थो,ल्ल,स-**
**च्चा,मा,ऽधी,श,प,दे,र्थ,दो,**बुधनुतस्सर्वप्रजावत्सलः ।
विद्वद्भूसुरवेदलोकनयनस्सत्यैकसंजीवनः
भावज्ञश्च दुरूहभावरुचिरः श्रीकृष्णराड्वर्धताम्" ॥ ४६ ॥

कीदृशस्तुर्यकृष्णेन्दुरिति प्रश्नोत्तराष्टकैः ।
गर्भितोऽत्रान्तिमः पाद**श्चा,मा,धी,श,प,दे,र्थ, दः** ॥ ४७ ॥

राजन् ! वर्णप्रपञ्चे स्पृशति सितरुचं त्वद्यशश्चन्द्रिकाभिः
चित्रो वर्णो रसज्ञामभजत विदुषां पिङ्गळो वत्सरोऽभूत् ।
किष्किन्धां प्राप नीलः रविरथमरुणस्संश्रितो वाक्प्रपञ्चा-
न्न्ये सङ्कीर्णवर्णस्सपदि कपिशताढ्योऽभवद्रामचन्द्रः ॥ ४८ ॥

काऽऽस्ते लक्ष्मण! राघवः स्मृतिपथं नायाति वाऽक्ष्णोः कुतः?
　रामोऽहं किल भक्त! विस्मृतिरियं का? विस्मृतिः कस्य ते?
तत्किं पृच्छसि राघवं? कथमसि त्वं दुग्धवर्णः प्रभो!
　मद्भक्ताग्रणि कृष्णभूपतियशांस्यापृच्छ तत्कारणम् ॥ ४९ ॥

### नृपनामगर्भितं पद्यम्.

नागादौ दिव्यबिल्वप्रवणहृदि सदा किञ्च नाडीज्ञमध्ये
　सिंहश्रीपीठमध्ये सुकृतिहृदि लसत्कृष्णसन्तानमध्ये।
भूदेवानां पुरस्तान्नृपशिरसि मनश्शीर्षभागे निजांशै-
　स्सर्वांशैश्चाधिकं यो लसति सजयतात्कोऽपि राजाधिराजः ॥ ५० ॥

(नाल्वडीश्रीकृष्णभूपइति नामगर्भितम्).

### अन्तर्लापिपद्यानि (५).

को धर्मिष्ठो नृशंसे? परहितनिरतान् कान् भवान् वेत्ति?
　किं पीयूषं नराणां? विलसति यशसा कः? प्रियः को यदूनाम्?
स्वर्णं कस्संविधत्ते? परकरणलिपिः का? रमावल्लभः कः?
　श्रीकृष्णक्षोणिपालो लसति भुवि कथं? यादवाख्यानसूतः ॥५१॥

प्रश्नोत्तराणि—(१) यातः (२) दतः (३) वातः (४) ख्यातः (५) नतः (६) सूतः (७) तः (८) अः (९) यादवाख्यानसूतः ॥

के वारस्याष्टमांशाः? मुनिजनविभवाः के? ग्रहाः के नमस्याः?
　सृष्ट्या का लेलभावा? जगति बहुमताः के तनूजा जनन्याः?
के कृष्णेन्द्रप्रियाः? का नृपतिबहुमताः? के प्रशस्याः? कथं स्युः?
　दीपाः के? गन्धभाजः? नृपगणधुरि के? यादवाभान्तिभौमाः ॥

प्रश्नोत्तराणि—(१) यामाः (२) दमाः (३) वामाः (४) भामाः (५) अन्तिमाः (६) भौमाः (७) माः (८) यादवाः (९) भान्ति (१०) भौमाः (११) **यादवाभान्ति भौमाः** ॥

कृष्णः केन युतः? पितॄन् यजति कः? कः स्निह्यति स्वामिनि?
प्राप्यः कः? नुदतीह कश्शकटिकां? कृष्णप्रभुः कीदृशः?
को रक्ष्योऽवति कः प्रभुं? क्षितिधराः केनाऽर्दिताः? मातलिः
कः? कस्मान्नजयी? गुरुः कथमभूत्? **सुत्रामसूनुश्रितः** ॥ ५३ ॥

प्रश्नोत्तराणि—(१) **सुत्रामसूनुश्रितः** (२) सुतः (३) त्रातः (४) मतः (५) सूतः (६) नुतः (७) श्रितः (८) सुत्रातः (९) सुत्रामतः (१०) सुत्रामसूतः (११) सुत्रामसूनुतः (१२) सुत्रामश्रितः ॥

को धीबलः? भजति कस्सुखमीड्यते कः?
शूरेऽस्ति किं? दिवि च कः? किमुपास्यवस्तु?
कः पूज्यते? किमुगळेऽस्त्यरणौ च? नव्यः
कः? कृष्णराज! **नवनीतसुधोपहारः** ॥ ५४ ॥

प्रश्नोत्तराणि—(१) नरः (२) वरः (३) नीरः (४) तरः (५) सुरः (६) घोरः (७) परः (८) हारः (९) रः (१०) नवनीतसुधोपहारः ॥

**कीदृशस्तुर्यकृष्णेन्दुरितिप्रश्नोत्तराष्टकैः ।**
गर्भितोऽत्रान्तिमः पादः **चामाधीशपदेर्थदः** ॥ ५५ ॥

"**कीदृशस्तुकृष्णेन्दुः**" इति प्रश्नोत्तराणि—(१) दः (२) अर्थदः (३) देर्थदः (४) पदेर्थदः (५) **ईशपदेर्थदः**

काऽऽस्ते लक्ष्मण ! राघवः स्मृतिपथं नायाति वाऽक्ष्णोः कुतः ?
　रामोऽहं किल भक्त ! विस्मृतिरियं का ? विस्मृतिः कस्य ते ?
तत्किं पृच्छसि राघवं ? कथमसि त्वं दुग्धवर्णः प्रभो !
　मद्भक्ताग्रणि कृष्णभूपतियशांस्यापृच्छ तत्कारणम् ॥ ४९ ॥

नृपनामगर्भितं पद्यम्.

नागादौ दिव्यबिल्वप्रवणहृदि सदा किञ्च नाडीव्रमध्ये
　सिंहश्रीपीठमध्ये सुकृतिहृदि लसत्कृष्णसन्तानमध्ये ।
भूदेवानां पुरस्तान्नृपशिरसि मनश्शीर्षभागे निजांशै-
　स्सर्वांशैश्चाधिकं यो लसति सजयतात्कोऽपि राजाधिराजः ॥ ५० ॥

(नाल्वडीश्रीकृष्णभूपइति नामगर्भितम्).

अन्तर्लापिपद्यानि (५).

को धर्मिष्ठो नृशंसे ? परहितनिरतान् कान् भवान् वेत्ति ? विद्वन् !
　किं पीयूषं नराणां ? विलसति यशसा कः ? प्रियः को यदूनाम् ?
स्वर्णं कस्संविधत्ते ? परकरणलिपिः का ? रमावल्लभः कः ?
　श्रीकृष्णक्षोणिपालो लसति भुवि कथं ? यादवाख्यानसूतः ॥५१॥

प्रश्नोत्तराणि—(१) यातः (२) दतः (३) वातः (४) ख्यातः (५) नवः (६) सूतः (७) तु (८) अः (९) यादवाख्यानसूतः ॥

के वारस्याष्टमांशाः ? मुनिजनविभवाः के ? ग्रहाः के नमस्याः ?
　सृष्टया का लोलभावाः ? जगति बहुमताः के तनूजा जनन्याः ?
के कृष्णेन्द्रप्रियाः ? काः नृपतिबहुमताः ? के प्रशस्याः ? कथं स्युः ?
　दीपाः के ? गन्धभाजः ? नृपगणधुरि के ? यादवाभान्तिभौमाः ॥

प्रश्नोत्तराणि—(१) यामाः (२) दमाः (३) वामाः (४) भामाः (५) अन्तिमाः (६) भौमाः (७) माः (८) यादवाः (९) भान्ति (१०) भौमाः (११) **यादवाभान्ति भौमाः** ॥

कृष्णः केन युतः? पितॄन् यजात कः? कः त्रायते स्वामिने?
प्राप्यः कः? नुदतीह कश्शकटिकां? कृष्णप्रभुः कीदृशः?
को रक्ष्योऽवति कः प्रभुं? क्षितिधराः केनाऽर्दिताः? मातलिः
कः? कस्मान्नजयी? गुरुः कथमभूत्? **सुत्रामसूनुश्रितः** ॥ ५३ ॥

प्रश्नोत्तराणि—(१) **सुत्रामसूनुश्रितः** (२) सुतः (३) त्रातः (४) मतः (५) सूतः (६) नुतः (७) श्रितः (८) सुत्रातः (९) सुत्रामतः (१०) सुत्रामसूतः (११) सुत्रामसूनुतः (१२) सुत्रामश्रितः ॥

को धीबलः? भजति कस्सुखमीड्यते कः?
शूरेऽस्ति किं? दिवि च कः? किमुपास्यवस्तु?
कः पूज्यते? किमुगळेऽस्त्यरणौ च? नव्यः
कः? कृष्णराज! **नवनीतसुधोपहारः** ॥ ५४ ॥

प्रश्नोत्तराणि—(१) नरः (२) वरः (३) नीरः (४) तरः (५) सुरः (६) धोरः (७) परः (८) हारः (९) रः (१०) नवनीतसुधोपहारः ॥

**कीदृशस्तुर्यकृष्णेन्दुरितिप्रश्नोत्तराष्टकैः ।**
गर्भितोऽत्रान्तिमः पादः **चामाधीशपदेर्थदः** ॥ ५५ ॥

"**कीदृशस्तुकृष्णेन्दुः**" इति प्रश्नोत्तराणि—(१) दः (२) अर्थदः (३) देर्थदः (४) पदेर्थदः (५) ईशपदेर्थदः

(६) धीशपदेर्थदः (७) माधीशपदेर्थदः (८) **चामाधीशपदेर्थदः**, इत्यष्टौ ॥

### द्व्यर्थपद्यम्.

रसज्ञानां तुष्टिं प्रथयितुमुपात्तात्मजनुषा-
मदृष्टस्वार्थानां शुभविमलरोचींषि किरताम् ।
द्विजैस्साकं योगं रहसि भजतां कृष्णनृपते
द्विजेन्द्राणां तेजः विपुलमभयं **नः** कलयताम् ॥ ५६ ॥

'नः कृष्णनृप! ते,' इति नृपदन्ततेज पक्षे, 'कृष्णनृपते! नः द्विजेन्द्राणां' इति ब्रह्मतेजः पक्षे च अन्वयपदव्यत्ययः ॥

राजन्! पालनकर्मधारय कुरु द्वन्द्वं द्विगुश्रीकरं
भक्त्या **तत्पुरुषं** भजाऽऽचर सदा पात्रे **व्ययीभावताम्** ।
भूमिं सस्यवतीं विशालय भवद्राष्ट्रे **बहुव्रीहये**
श्रीकृष्णेन्द्र! **समासभाषितमिदं** सर्वज्ञ! चित्ते कुरु ॥५७॥

**कृष्णेन्द्रे नृपकर्म धारयति** नः पृथ्वी **बहुव्रीहिदा**
जाता **तत्पुरुषे** रतिर्द्विगुणिता **द्वन्द्वं** विना विस्तृता ।
भाषासन्ततिमूलमातृवचसां जाताऽ**व्ययीभावता**
सत्यश्रीर्विंतता **समासवचनान्येतानि** तास्मिन् बुधाः ॥५८

### अन्यापदेशपद्यानि (३)

शमीपर्णं प्राहुर्विपुलदलमेवागमगिरः
शरीसुस्ताद्विपा क्रमुककदलाद्याः प्रजहसुः ।
शमीवर्णैः स्तुतैः प्रथितमशनं पांसुपतितं
मुहुर्मोचापर्णं शरणमयते कृष्णनृपते ॥ ५९ ॥

बृहत्पर्णानस्मान् भुवनविदितान् नैवकलयन्
बृहत्पर्णीं वेदः कथमिति शर्मी व्याहरदिति ।
स्मयाविष्टैर्मोचाक्रमुकतरुपर्णैर्निजकराः
प्रदष्टा वेदेष्टं कथमिव विजानीम नृपते ॥ ६० ॥

पादूमुण्डी[1] प्ररूढैरमितशितमुखैः कण्टकैरक्ष्यगम्यैः
पर्णान्यूत्वा शमीनां कलयतु पथिकास्तेषु पाथेयबन्धम् ।
तावन्मात्रेण तालक्रमुककदळिकापर्णवैपुल्यभाजः
किं वा शम्याश्छदास्ते न हि निगमगिरा नार्थसृष्टिर्मवित्री ॥

**गोमूत्रिकाबन्धः.**

यादवान्वयदुग्धोदसोम! वैष्णवभोदय !
सदयान्वक्ष! दुर्वादभीम! कृष्णप्रभो जय ॥ ६२ ॥

**मातृकाक्षरगुप्तिः.**

भज खानि पराञ्चयङ्ग! श्रीधीपीठाऽऽस्थ? वाञ्महीम् ।
झषछत्रबलोढेढ्य! कृष्णेन्दो घटयेः फलैः ॥ ६३ ॥

**एकाक्षरपद्यम्.**

(१) नोनेन (२) नानाऽनूनान्नाऽऽनव (३) नानाननानन ।
(४) नानेनाऽऽनन (५) नानोना,ऽननाऽन्नानन नोन–नुः ॥

तात्पर्यार्थः—१. (अर्थिषु) निषेधवचनरहितप्रभो! २. नानाश्रेष्ठ भोग्यवस्तु वृद्धिद्वारभूत! ३. नानानने=सहस्रशीर्षविष्णौ, आनन= अभिमुख! ४. नुः=मनुष्यस्य. अन्नानन=अन्न विश्राणननिबद्धदृष्टे? कृष्णप्रभो! नः–अन अन=अस्मान् रक्षरक्ष । द्विरुक्तिरर्थनातिशये ॥

---

[1] पादूमुण्डी—सूक्ष्मतमकण्टकैर्युतो मुण्डीविशेषः.

### अभिनवशतपथबन्धः.

उद्धार्यपद्यम्—

सदाऽन्यनन्ददायाम-
चामाङ्गरस! भूसर!
जयाय कृष्णभूत्रेन!
नृलोकभर नाकप! ॥ ६७ ॥

उद्धृतपद्यम्—

समदायाऽन्यदानन्द-
चारमासङ्गभूरस!
जनयात्रेयभूकृष्ण!
नृपलोककनाऽभर! ॥ ६८ ॥

### उक्तचित्रविशेषग्राहकपद्यम्.

व्यायामैः कृतकृत्यतामुपगता सन्ध्यानटप्रक्रमं
सानन्दं गमिता क्रमात्कृतिरियं भूषायुधाद्याकृतीः ।
स्वीकृत्य नवापि, कृष्णनृप ते भेरुण्डभूताऽधुना
प्रस्थाय भ्रमणाय तिष्ठति भुवां राजन् पुरस्ते दृशोः ॥ ६९

### अभिनवशतपथबन्धः (मध्यमकूट

श्रीवासुदेवे दासेष्टे
भूवासदिवि हेमपे
[illegible]स्थानसायामे
श्रीदीपविशदे प्रदे ॥ ७० ॥

उद्धृतपद्यम्—श्रीष्टे वासे सदा देवे
भूपे वामसहे दिवि
समे दयारसस्थान-
श्रीदे दीप्रपदे विश ॥ ७१ ॥

### उक्तचित्रविशेषग्राहकपद्यम्.

व्यायामैः कृतकृत्यतामुपगता सन्ध्यानटप्रक्रमं
सानन्दं गमिता क्रमात्कृतिरियं भूषायुधाद्याकृतीः ।
अङ्गीकृत्य रमापतिं रमयितुं तार्क्ष्यात्मना प्रस्थिता
शेषाद्रिं तदधीशपादनयनं चाऽऽश्लिष्य धन्या बभौ ॥ ७२ ॥

### अनुलोमविलोमपदपद्यम् (मध्यमङ्गलम्).

नन्दनन्दन! कान्ता का? मासमा कापि गोपिका ।
रमाकुमार माता मा काऽपिका? ममता मम ॥ ७३ ॥

नन्दनन्दन!
कान्ता का?
मासमा
काऽपि गोपिका ॥
रमाकुमार-
माता मा
काऽपि का
ममता मम ॥

### वलयबन्धः

हेमाधीशावासामासा श्रीदाधीशेज्यासास्ताते ।
त्वन्नोज्ञः कौ श्रीमूद ज्ञेन्त्वन्नोज्ञः कौ भीधीदाज्ञे ॥ ७४ ॥

अनुलोमविलोमपद्यम्

ज्यां वाराहरावाज्यां
　तां ततां हि हितां तताम् ।
नोष्णे कृतां तां कृष्णेनो
　विभुरेककरे भुवि ॥ ७५ ॥

भाषाद्वयात्मकं प...

स्वामिकृष्णप्रभुगळे चिन्नदीहारबन्दिते ।
निजश्रीसन्दिते स्वामी देवते परदेव ते ॥ ७६ ॥

धर्मात्मने विहितवादसुखात्मने ते
　पुण्यात्मने निरुपमाखिलभूपराय ।
सत्यात्मने जनयशोभिमतात्मनेऽस्तु
　कृष्णेन्दुरूप, शिबिराय दिशेशभाग्यम् ॥ ७७ ॥

ಸ್ವಾಮಿಕೃಷ್ಣ ಪ್ರಭುಗಳೆ ಚಿನ್ನ ದೀಹಾರಬನ್ದಿತೇ ।
ನಿಜಶ್ರೀಸನ್ದಿತೆ ಸ್ವಾಮೀ ! ದೇವತೇ ಪರದೇವ ತೇ ॥
ಧರ್ಮಾತ್ಮನೇ ವಿಹಿತವಾದಸುಖಾತ್ಮನೇ ತೇ
　ಪುಣ್ಯಾತ್ಮನೇ ನಿರುಪಮಾಖಿಲಭೂಪರಾಯ ।
ಸತ್ಯಾತ್ಮನೇ ಜನಯಶೋಭಿಮತಾತ್ಮನೇ ಸ್ತು
　ಕೃಷ್ಣೇನ್ದುರೂಪ, ಶಿಬಿರಾಯ ದಿಶೇಶಭಾಗ್ಯಮ್ ॥

यदुनन्दनकृष्णभूपचित्ता-
    ऽऽननपाण्यब्जमरन्दपूरदिग्ध !
नवनीतसुधोपहार ! कस्ते
    सदृशोवाऽभ्यधिको नृपोपहारः ॥ ७९ ॥

नवनीतसुधोपहार ! तुर्यं
    यदुकृष्णप्रभुमीहसे स्वयं यत् ।
उचितं तदवैमि यत्स भूपो
    मधुरेशो मधुरोऽधिकं भवत्तः ॥ ८० ॥

नवनीतसुधोपहारमेनं
    विबुधप्रीणनमार्यभौमपेयम् ।
नवनीतसुधोपहारहृद्यं
    नृपते ! मानवनीतमर्पये ते ॥ ८१ ॥

कविनामगुप्तिः.

सत्यागारपदाञ्चितं नृपवरं त्वां कृष्णपृथ्वीपते !
    नित्यं श्रीलसितं निगूढहृदयं वासंगतं स्वाह्वये ।
देशीड्यं भृतकाश्रयं च लसितं लब्धाऽऽर्ययोगं गिरा
    शंसन् कोऽपि कविर्बभौ तव समस्त्वत्संश्रयस्तादृशः ॥८२ ।

" सत्यागारं श्रीनिवासदेशिकाचार्य " इति कविनामगुप्तम्

पद्यान्तरगर्भितं पद्यम्.

श्रीमन् ! कृष्णधराधिराज ! कृतधीवाणीड्य ! भामण्डला-
    निम्नतकेतन ! भोः ! प्रधानविबुधोद्गीत ! स्वयं श्रीवृत ! ।
वाणीवासपदेष्ट ! रत्नशिबिकाधार्य ! श्रयेः नाल्वडि
    श्रीकृष्णेन्द्र ! समेष्ट ! केवलरमाधीशाक्ष ! तास्ते श्रियः ॥

गर्भितं पद्यम्.

श्रीकृष्णराजवाणीभाण्डनिकेतप्रधानविबुधोऽयम् ।
श्रीवासदेशिकार्यः नाल्वडिकृष्णेन्द्रमेवमाशास्ते ॥ ८४ ॥

नामगुप्तिचमत्कारः.

नाळीकं बिल्वपत्रं सपदि समभवन् सोऽपि गाण्डीवधन्वा
कृष्णाऽनुष्णक्रियाभूः पवनतनुभवः पद्मनाभस्य हृद्याः ।
यन्नाम्नामंशसंगादिति सकलबुधैश्शङ्कनीयात्मचर्यः
राजर्षिः पुण्यकीर्तिर्जगति विजयते नाल्वडीकृष्णभूपः ॥ ८५

(२) बहिर्लापिपद्यम्.

को वेदान् ब्रह्मणेऽदात्? किमभवदुदधिः कोलवेषस्यविष्णोः?
को वा वैद्यः? सुखानां जनिपदमपि किं? विष्णुपूजारताः के?
जामाता कस्य विष्णुः? जगति बहुमताः के? स राजाधिराजः
प्रोक्तप्रश्नोत्तरान्तर्लिपिगणविषयो वर्धतां कोऽपि भूपः ॥ ८६

प्रश्नोत्तराणि—(१) धीनाथः (२) पल्वलं (३) नाडीज्ञः (४) सुकृतं (५) वैष्णवाः (६) वाराशेः (७) सुजनाः.

को दैत्यारिः? प्रियद्रुः क इह पशुपतेः? कः पृथासूनुचापः?
को गीताशास्त्रवक्ता? क इह रतिपतेर्मातुलः? भूप्रियः कः? ।
को मित्रं नन्दसूनोः? यदुकुलतिलको दिक्षुविख्यातनामा
प्रोक्तप्रश्नान्तराळे लसितनिजलिपिः वर्धतां कोऽपि भूपः ॥८७

प्रश्नोत्तराणि—(१) श्रीनाथः (२) बिल्वद्रुः (३) गांडीवः (४) श्रीकृष्णः (५) अनुष्णरश्मिः (६) वराहः (७) विजयः.

### पद्यान्तरगर्भितं पद्यम्.

सत्याढ्यो निलयस्सतां यदुसमः **श्रीधीनिवासः** प्रजा-
भाग्यं **देशिककार्यविन्नृपवराश्चित्तोक्षिता सत्यभूः** ।
जीयाच्चामनृपालकप्रियसुतः **कृष्णेन्दुरिन्द्रेऽर्पिता**
तस्मिन्नः प्रथिता चिरं **कृतिरियं** चोर्व्यां **शुभा** वर्धताम् ॥ ८८ ॥

### गर्भितं पद्यम्.

सत्यालयश्रीनिवासदेशिकार्यविपश्चिता ।
सत्यपालककृष्णेन्द्रेऽर्पिता कृतिरियं शुभा ॥ ८९

### एतद्ग्रन्थजन्मवत्सरप्रशंसा (त्र्यर्थकं पद्यम्.)

बलोज्ज्वलो युवाब्दोऽयं गोवर्धनकरो, गवाम् ।
धत्ते दत्ते च कल्याणं कृष्णवत्कृष्णराजवत् ॥ ९० 

### एतद्ग्रन्थरचनाकालः.

दिङ्नाग, भूत, वसु, चन्द्र, मिते, शकाब्दे
शाल्यूढवाहगणिते भविके युवाब्दे ।
जेष्ठेऽर्जुने हरिदिनेऽवततार एषः
श्रीकृष्णराजनवनीतसुधोपहारः ॥ ९१

### ग्रन्थप्रशस्तिः.

लक्षं प्रत्यक्षरं च प्रतिपदमुपयन्नः प्रबन्धः किलाऽयं
लक्षं प्रत्यक्षरं च प्रतिपदमुपयन् विश्रुतेभ्यः कविभ्यः ।
लक्षं प्रत्यक्षरं च प्रतिपदमुपयन्नाल्वडीकृष्णभूपात् ।
लक्षं भूयोपि लब्धुं रसिकबुधगणाद्विश्वलक्षं जगाहे ॥ ९२

### एतद्ग्रन्थानुबन्ध पद्यानि (२).

क्रीडाकाले न पाठः, न पठनसमये क्रीडनं, तत्सुधीभि-
  र्निर्दिष्टः कालभेदः तदुभयविषये विश्वविद्यालयेषु ।
तौ क्रीडापाठकालौ घटयति हि समं चित्रकाव्यस्य पाठः
  चित्रं काव्यं तदेतद्रचितमभिनवं त्वत्परं कृष्णभूप! ॥ ९३

पारंपर्याच्च साक्षाद्विषयमुखफलं प्रेक्षकेष्टं चतुष्कं
  सङ्गीभूयाऽत्र काव्ये लसति तव तरां तुर्यकृष्णाक्षितीन्दो! ।
क्षुब्धे चित्ते प्रसन्ने नृपवर! भवताश्चित्रकाव्यामृतांशा-
  ऽऽस्वादात्को वाऽनुबन्धो विगळति सुधियां तं न जाने नृपाऽहम् ॥

चित्रोक्तिर्विषयः फलं सहृदयाह्लादः कृतावत्र नः
  सम्बन्धस्तु तुरीयकृष्णधरणीभर्तुर्गुणाऽऽम्रेडनम् ।
लीलापाठसहानुभूतिरुचयः प्रेक्षाधरास्तद्विधाः
  छात्राः शास्त्रपथे प्रतप्तमनसश्चाऽत्राऽधिकारं गताः ॥ ९५

### राष्ट्राशीर्वचनम्.

बहुव्रीहिं धत्तामवनिरवनीन्द्राः द्विगुहिते
  प्रवर्तन्तां द्वन्द्वे रतिरपि पदं नैव लभताम् ।
विवर्धन्तां तत्तत्पुरुषसुगुणाश्शोभनगणाऽ-
  व्ययीभावं धत्तां महितचरितः कृष्णनृपतिः ॥ ९६

मोदन्तां सकलाः प्रजाः कृषिकला संवर्धतां लुप्यता
  मालस्यं, भजतां वदान्यपदवीं भिक्षाशिनोप्यम्बुदाः ।
दत्तां वृष्टिमभीप्सितां विजयतां धर्मः गदः क्षीयतां
  सर्वत्राऽऽयुरपैषतां विजयतां श्रीनाल्वडीकृष्णराट् ॥ ९७

दीर्घायुष्यमनामयं तनुबलं प्रज्ञाबलं श्रीबलं
सत्सन्तानबलं सुहृज्जनबलं भोगान् प्रियान् बान्धवान् ।
प्रख्यातिं गुरुदैवभक्तिमनिशं सत्सङ्गतिं काङ्क्षित-
श्रीलाभं विजयं च कृष्णनृप, ते दत्तां स सम्पत्सुतः ॥ तथास्तु !!

**श्रीमन् तुर्यश्रीकृष्णसार्वभौमो विजयताम् ॥**

इति श्रीमन्महीशूरपुराधीशशारदाभाण्डागारीयप्रधानविबुधस्य श्रीशैलसन्तति-
समुद्भवस्य सत्यागारीय श्रीनिवासदेशिकाचार्यस्य कृतिषु
**नवनवनीतः** श्रीकृष्णराजनवनीत-
सुधोपहारः सम्पूर्णः.

# भूमिका.

---

अयञ्च औद्गात्रपदार्थप्रकाशनरूपः पद्यात्मको ग्रन्थः मया उपलब्धः, किंतु असम्पूर्णः अशुद्धप्रायः विशकलितश्च कियतामेव विषयाणां प्रकाशकश्च। एतत्प्रकाशनं च औद्गात्रविषयजिज्ञासूनां महते उपकाराय कल्पत इति मत्वा अशुद्धानां शोधनेन आकाँक्षितानामंशानां पद्यरचनेन संवादप्रमाणोपन्यासेन उपन्यस्तानां आकरप्रदर्शनेन च प्रकाशपथं नीतः। भाष्योक्तानां विषयाणां प्रकाशकत्वात् "प्रकाशिका" इत्यपि नाम कृतम्। अत्र निर्दिष्टानां विषयाणां विमर्शस्तु विस्तृतभूमिकायां भविष्यति ॥

"स्वादुपुष्परसास्वादे कः प्रेरयति षट्पदम्" इति न्यायैकलक्षीभूतानां सहृदयानां विशेषतः किं वक्तव्यम्? सर्वथा मदीयामिमां प्रवृत्तिं सफलयन्तु तत्रभवन्तः सहृदया इति शिवम् ॥

सहृदयवशंवदः,

**रा. नारायणस्वामिदीक्षितः.**

॥ ओं नमः सामवेदाय ॥

# श्रौतप्रकाशिका

---

## मङ्गलाचरणम्.

फुल्लपङ्कजदलायतेक्षणं वासवाद्यखिलदेवपूजितम् ।
अन्तरायतिमिरप्रभाकरं हस्तिराजमुखमाश्रयेऽनिशम् ॥

## गुरुनमस्कारः.

ऐक्याप्त्युपायमनिशं श्रुतिसीमसारं
सौख्येन शिष्यततये समुपादिशन्तः ।
तुर्याश्रमे विदधते सफलं जनिं ये
**श्रीवालुकेश्वरगुरून्** प्रणमाम्यहं तान् ॥

ये साम्ना सुगजाननं कृतशिरःकम्पं व्यतन्वांश्चिरं
सामाध्यापनतश्च सामगगणे गण्यं व्यधुर्यं स्वयम् ।
तान्नित्यं कलयन्ननर्घ्यसुगुणान् वेदस्वरूपात्मनः
सोऽहं नौमि च सामगान् गुरुवरान् **श्रीरामनाथाभि**

## ग्रन्थारम्भः.

**अथशब्दार्थः सामान्यत उक्तानां परिभाषादीनां क्रत्वर्थत्वं च ॥**

[1]अथेति मङ्गळार्थस्स्यात्स[2]र्वक्रत्वर्थ एव च ।
सुब्रह्मण्यायजुःप्रायश्चित्ताम्नायस्तथैव च ॥ ३

**याज्ययाजकलक्षणम्.**

[3]द्व्यस्तोऽषण्ड एवं स्यान्नाभेरूर्ध्वमधस्तथा ।
समो वा [4]याज्य एव स्यादार्षेयादित्रयान्वितः ॥ ४

**सामान्यत उद्गातृपरिभाषा.**

[5]एकवचनेनोक्ते तत्रोद्गाता प्रतीयते ।
[6]अनादिष्टमन्त्रा येप्यायोष्टासदनादयः ॥ ५

**सुब्रह्मण्यागानप्रकारः.**

[7]प्राङ्मुखत्वमनादेशे सुब्रह्मण्यास्तथैव च ।
[8]आतिथ्यान्ते तु (न) संप्रैषन्त्र्यहेऽतीत एव च ॥ ६
[9]एतावदहेत्युक्तिः सुत्याप्राक्कालमुक्तवान् ।
सुत्यामिति पृथग्देशात् श्वस्सुत्येति च दर्शनात् ॥ ७
[10]ब्रह्मा दक्षिणतस्तिष्ठेदाह्वाने सर्वदा तथा ।

**कर्मसँयुक्तद्रव्याणि तत्तत्कर्मकर्तुरेव.**

[11]दक्षिणावस्तु क्रतुषु शकटः राजवाहनम् ॥ ८
अनोयुक्तं प्रदद्याच्च कर्मसंयोगहेतुतः ।
कर्मसँयुक्तवस्त्राणां प्रस्तोतुश्च कुशान्वितम् ॥ ९
औदुम्बर्यर्थमुद्गातुः प्रतिहर्तुर्दशान्वितम् ।
पत्न्यावृतं च प्रस्तोतुः वचनादिति निर्णयः ॥ १०

---

[1] द्रा श्रौ सू १-१-१. [2] द्रा श्रौ १-१-१. [3] द्रा १-१-७. [4] द्रा १-१-८. [5] द्रा-१-१-४. [6] द्रा-१-१-५. [7] द्रा-१-२-२२. [8] द्रा-१-२-२४. [9] द्रा-१-३-४—५. [10] द्रा-१२-१-१. [11] द्रा-१-३-१.

## नामसुब्रह्मण्याह्वानम्.

[1] द्विपिता वा द्विमाता वा नामग्राहं द्वयोर्द्वयोः ।
एवं पितामहादेश्च स्त्रीपुँसोर्ज्येष्ठतस्तथा ॥ ११
पौत्रात्पुत्रोऽनुजः स्याच्चेत्पुत्रवर्गं समाप्य च ।
पौत्रस्य ग्रहणं पश्चात्प्रपौत्रस्यैवमेव च ॥ १२
प्रत्ताया नाम गृह्णीयान्न मृतस्य तथैव च ।
न च षण्डस्य गृह्णीयात्पतितस्य न चेष्यते ॥ १३
न सन्यासिन एव स्यान्न शाक्यादेस्तथैव च ।
[2] अमुष्य शब्दे स्त्रीपुँसोस्साधारण्येन चोच्यते ॥ १४

## सुब्रह्मण्यास्वरनिर्णयः.

[3] उच्चान्तं यज्ञशर्मेति क्रियां यजत इत्यपि ।
आद्युदात्तवतीं ब्रूयात्सैव सर्वत्र योज्यते ॥ १५
उपेन्द्रादिकषष्ठ्यन्ताश्चान्तोदात्ताः प्रकीर्तिताः ।
पुत्रादिप्रथमान्तानां द्वितीयाक्षरमुच्चकम् ॥ १६
पितृवर्गं समाप्याथ मातृवर्गोऽभिधीयते ।
श्रीलक्ष्मीदाया इत्यत्र दायाइत्युन्नतः स्वरः ॥ १७
मध्ये द्वे अक्षरे उच्चैः जनिष्येति पदस्य च ।
पिता इत्यत्र ताकार आद्यान्त्यौ च पितामहे ॥ १८
प्रपीत्येतौ च होकारः प्रपितामहवाचके ।
सुब्रह्मण्यास्वराश्चैवं सूत्रभाष्यादिसम्मताः ॥ १९

## परिसामगानप्रकारः.

[4] प्रस्तोता परिसामानि गायेन्नादेश एव तु ।
[5] तृचेषु त्रिचमापन्नानि त्रिर्गायेदितराणि तु ॥ २०

---

[1] द्रा–१-३-१९—२१. [2] द्रा–१-३-२०. [3] द्रा–१-३-२३—२७.

### प्रवर्ग्यगानप्रकारः.

[1]प्रवर्ग्याणि च सामानि सूत्रोक्तानि दशाष्ट च ।
[2]तत्र शार्ङ्गवदारूढाऽङ्गिरसे च त्रिरभ्यसेत् ॥ २१
[3] अन्त्यं स्वार्निधनोऽपेतं गायेत्सूत्रकृतां मतम् ।
[4]एकान्येव तु शेषाणि होतृलिङ्गोऽपपत्तितः ॥ २२

### धेनुसाम्नि मतभेदेन गाननिर्णयः.

[5]धेनुसामनि सूत्रोक्तान् विकल्पान् वच्मि सुस्फुटम् ।

### धेनुसाम्नि गौतममतम्.

[6]देवतासूच्यमानासु सोपायं स्तोभमाहरेत् ॥ २३
पादायात्रानुपायं तु अभ्यसेदुत्तमं पदम् ।
यथा पञ्चधने देव्ये तद्वदत्रापि **गौतमः** ॥ २४

### तत्रैव शाण्डिल्यमतम्.

[7]**शाण्डिल्यमतेनात्र** समस्येत्पददेवते ।
अत्राप्युत्तमं पादमभ्यसेदेव पण्डितः ॥ २५
यथाध्ययनं सामान्ते सोपायस्तोभ एव तु ।
देवता चतुष्टये पूर्वं निरुपायस्तोभ एव हि ॥ २६

### तत्रैव वार्षगण्यमतम्.

[8]अभ्यसेन्नोत्तमं पादं समस्येत्पददेवते ।
**मरुतां भूतिवच्छेषं वार्षगण्ये** समापनम् ॥ २७

---

[1]आ-प्र. [2]द्रा २–१–३. [3]द्रा २–२–४०. [4]द्रा २–१–४—५. २–२–३०. [6]द्रा २–२–३०. [7]द्रा २-२–३१ [8]द्रा २–२–३२—३३.

## उद्गातुः कृत्यम्.

अत्रादौ वृत उद्गाता [1] **महदित्यादिकं** जपेत् ।
[2] **देवो** गृहाद्विनिर्गत्य दूरं गत्वा [3] **विहाय** च ॥ २८
यागभूम्यन्तिके [4] **बद्वा** [5] **पितरः** पित्र्युपस्थितिम् ।
[6] सुत्यायाः पूर्वदिवसे यदि चेद्गमनं भवेत् ॥ २९
उद्गातुर्लोप एव स्या [7] त्तान् नप्त्रादिकर्मणाम् ।
प्रायणीयदिनारभ्य त्रिष्वेवं दिवसेष्वपि ॥ ३०
अग्नीषोमीयपर्यन्तं (गाना) सोमाप्यायननिह्नवाः ।

## मन्त्राणां विनियोगप्रकारः.

औदुम्बर्युच्छ्रयमन्त्रस्तु [8] **द्युतानस्त्वेति** कीर्त्यते ॥ ३१
श्वभ्रे दध्या[9]**दायोष्ट्वा** अवधाय जपे[10]**न्नमः ।**
[11] अध्वर्युणाऽभिहुतायामौदुम्बर्या विशाखयोः ॥ ३२
हुनेत्तथा [11] **घृतेनेति** [12] **प्राजापत्याश्चतूत्तराम्** ।
अधस्तात्तु विशाखस्य परिगृह्य जपे[13]**द्दिवि** ॥ ३३
**देवान् दृ॰हमयि प्रजां** अथ मध्ये जपेत्तथा ।
[14] **अन्तारिक्षे वयाऽसीति दृ॰हमायि पशूनिति** ॥ ३४
मूले [15] **पृथिव्यामध्यौषधीर्दृ॰हमयि सजातान् ।**
श्वभ्रेऽवच्छाद्यमानायां [16] **दिव्यञ्छद्मासि सन्तानि ॥** . ३५
यूपोच्छ्रयणवेलायां जपेयु[17]**र्नृमण** मन्त्रकम् ।

---

[1] म ब्रा १-१-१. [2] म ब्रा १-१-२. [3] म ब्रा १-१-३. [4] म ब्रा १-१-४. [5] म ब्रा १-१-५. [6] द्रा १-१-२. [7] द्रा १४-२-३. [8] म ब्रा ६-४-२. [9] म ब्रा ६-४-३. [10] म ब्रा ६-४-७. [11, 12] द्रा २-३-७-८. [13] द्रा २-३-१२. [14] द्रा २-३-१३. [15] द्रा २-३-१४. [16] द्रा २-३-१७. [17] म ब्रा १-१-६.

### प्रस्तोतुः यष्टुश्च कृत्यम्.

महारात्रे प्रबुध्यैव प्रस्तोताऽग्नीध्र एव च ॥ ३६
यज्ञसारथिशालाग्नौ यष्टा लोकाहितिस्तथा ।
उपावहृत्य सोमं तु होतरेहि यदोच्यते ॥ ३७

### विश्वरूपागानयाच्ञा प्रतिषेध समाधानानि.

[1] यष्टा त्वं विश्वरूपाश्च मम गायेति तं प्रति !
प्रत्याचष्टे यदोद्गाता चतुष्टोमातिरेकतः ॥ ३८
[2] चतुष्टोमादिहेतूक्तिः गायेत्याह च हेतुना ।
वसतीवर्य इत्यादि नमाम्नामेति चेष्यते ॥ ३९

### विश्वरूपागानम्.

[3] प्रवेशः पूर्वया द्वारा होतुः पूर्वेण गच्छतः ।
आर्चिकं मनसा यष्टुः स्तोत्रधर्मो न चेष्यते ॥ ४०
[4] अनिरुक्तं तथा गायेदुद्गाता च क्रमाश्रितः ।

### वि गा [5] गायत्रीगानं.

अनिरुक्तस्य गानस्य लक्षणं प्रोच्यतेऽधुना ॥ ४१
युञ्जेवाचं शतपदोमिति खेऽङ्गुष्ठसंस्थितिः ।
ओमि(इ)ति भ्रमणं कृत्वा तर्जन्यां पतनक्रिया ॥ ४२
तेनाक्षरेण तत्रैव त्रिष्कर्षो भ्रमणोक्तितः ।
हिङ्कारयुक्तमाकारं भ्रमित्वा पूर्ववत्पतेत् ॥ ४३
आकाशे स्थाप्य चोकारं ततश्चाकारमक्षरम् ।
सतर्जनीमध्यमादि कनिष्ठान्तं प्रसारयेत् ॥ ४४

---

[1] द्रा २–४–६. [2] द्रा २–४–७—८. [3] द्रा २–४–९. [4] द्रा–घ; २-४-११- [5] द्रा–२-४-१३-१४.

### वि गा [1] पाङ्क्तगानं.

युञ्जे वाचं शतपदोमित्युपक्रम्य पूर्ववत् ।
पादत्रयं च युगपदुत्क्रान्त्ये प्रेङ्खपातनम् ॥ ४५
पञ्चमस्य प्रदेशिन्यां सकृच्चान्तं हि कर्षणम् ।
तत्स्थाकारे द्विकर्षत्वं हिं आ इत्यादि पूर्ववत् ॥ ४६

### [2] प्रगाथगानं.

प्रगाथीकरणस्यापि यथापूर्वमुपक्रमः ।
द्वितीयपादे सप्रेङ्खैः तृतीयेन सम्मापनम् ॥ ४७
तृतीयं च द्विरभ्यस्य चतुर्थेन समापयेत् ।
तच्चाप्येवं द्विरभ्यस्य पञ्चमेन समापयेत् ॥ ४८
[3] गातृयष्ट्रोरनिरुक्तं गानं धन्वीति मन्यते ।

### सुत्यादिवसे सुब्रह्मण्याह्वानम्.

सुब्रह्मण्यासमाह्वाने ह्यद्य सुत्येति चेष्यते ॥ ४९

### प्रस्तोतृप्रतिहर्त्रोः उद्गातारमनुसृत्य उपवेशनम्.

[4] युगपत्कर्मसूद्गातुः प्रस्तोता दक्षिणो भवेत् ।

### मन्त्राणां विनियोगः.

सव्यं च प्रतिहर्ता तु [5] मृदा वेद्याक्रमे जपः ॥ ५०
रराटीस्पर्शनं [6] विष्णोः हविर्द्धान [7] मिषे विशेत् ।
[8] युन बाहून्नयेत्सोमे [9] ऋतस्ये त्युपवेशनम् ॥ ५१

---

[1] द्रा-२-४-११. [2] द्रा-२-४-१५. [3] द्रा-२-४-१२. [4] द्रा-३-१-१. [5] म १-१-७. [6] म १-१-८. [7] म १-१-९. [8] म १-२-१. [9] म-१-२-२.

[1] ऋत स्पृशेद्द्रोणकुम्भं [2] वान प्रोहेदमुं पुरः ।
आरभ्याग्नेयमीशानदेशान्तं सप्रदक्षिणम् ॥ ५२

[3] मरु ग्रावस्पृशेदेषु द्रोणस्याध्यूहनं [4] त्विदम् ।
निदध्युः कलशं ग्राव्णां उपरी[5]द मितीर्य च ॥ ५३

निर्दिशेदमुमित्यत्र यजमानस्य नाम वै ।
[6] वसवस्त्वेति सम्मृज्यादुद्गाता कलशदण्डकम् ॥ ५४

[7] रुद्रास्त्वेति तन्मध्यं [7] आदित्यास्त्वेति तद्बिलम् ।
उदग्दशमवाङ्नाभि [8] पवि द्रोणेपटं क्षिपेत् ॥ ५५

उद्गातैव तु धारायां सन्ततायां [9] प्रशुक्रिति ।
बहिस्तोत्रस्थलं प्रोक्तं वेदेरन्तस्सदोबहिः ॥ ५६

कुर्युः(शुनां चोपवेशं) (स्वनाम्नोपहवं) [10] त्रयस्सर्वत्र हिङ्कृतौ ।
अत्र वाग्यमनं चैव आबहिस्स्तोत्रपूरणात् ॥ ५७

## ज्योतिर्गानम्.

[11] यदि विश्वरूपाभिगीता कर्तव्यं ज्योतिरत्र वा ।
अग्निर्ज्योतिस्त्रीन् पादान् प्रत्येकं त्रिस्त्रिरभ्यसेत् ॥ ५८

गायत्रमनिरुक्तं त्रिः गायेद्धन्वीति मन्यते ।

## ज्योतिर्गाने कालविकल्पः.

[12] येद्वा प्रातरनुवाके सूक्ते होत्रा समापिते ॥ ५९

---

[1] उ १-२-३. [2] म १-२-४. [3] म १-२-५. [4] म १-२-६. [5] म १-२-६. [6] म १-२-७. [7] म १-२-७. [8] म १-२-८. [9] म १-२-९. [10] द्रा ३-३-1-३-७, [11] द्रा २-४-१७--२३, [12] द्रा ३-३-१२,

### [~] सर्पणम्.

[1] पञ्चर्त्विजः प्रसर्पन्ति यजमानश्श्रुतेर्बलात् ।

### प्रवृत(त्त)होमादि.

[2] कुर्युः प्रवृत(त्त)होमौ द्वौ [3] बेकु [4] सूर्य इति क्रमात् ॥ ६०
[5] ऋच~सामेति द्वितीया [6] मुद्गातैव तु केवलम् ।

### त्रयाणां मन्त्रवदुपवेशनं.

तृणापसरणे [7] योऽद्य [8] यो मे स्यादुपवेशने ॥ ६१
[9] नमस्सखीति मन्त्रं ते स्तोत्रेष्वावृत्तिषु त्रयः ।

### स्तोमयोगः.

[10] स्तोताध्वर्युणा दत्तं प्रस्तरं प्रतिगृह्य च ॥ ६२
ब्रह्मन् स्तोष्याम इति प्रयच्छेद्गातृहस्तके ।
[11] अग्नेरिति स्तोमयोगो दक्षिणामुपहत्य च ॥ ६३
[12] अग्नेरुद्गीथ इत्यादि अन्तमेव बृहस्पतेः ।

### बहिष्पवमानम् [13] धूर्गानेऽनिरुक्तगानम्.

हृदि कृत्वार्चिकं गानं वाचा गायेदनार्चिकम् ॥ ६४
ओङ्कारेणैव चोद्गीथभक्त्युपक्रमणं भवेत् ।
सकृत्सकृत्प्रेङ्खयित्वा प्रत्येकं [14] पवमाक्षरैः ॥ ६५
नायेन्दावाइ प्रदेशिन्या मध्याङ्गुल्यवरोहणम् ।
अभिदेवा~ इयेत्यत्र तर्जन्यां कर्षणं सकृत् ॥ ६६

---

[1] म ६–७–१२. [2] द्रा ३–३–१७. [3] म १–३–१ [4] म १–३–२. [5] सा वे १–४–२—३–१०. [6] द्रा ३–३–१९. [7] म १–३–३. [8] म १-३-४, [9] द्रा ४–४–१३. [10] द्रा ३–४–१६. [11] म १–३–५. [12] छा उ २–२२. [13] ष वि-२-१. [14] आ पि.

आकारं तु यकारस्थं द्विःकर्षेदनवानतः ।
गायेद्गायत्रवत्सर्वं स्तोत्रीये च द्वितीयके ॥ ६७

[1]उत्तमं मध्यमस्यास्य प्रथममुत्तमस्य च ।
[1]व्यतिषङ्गेन गातव्यं श्रादेयुवं [1]श्रुतेर्बलात् ॥ ६८

तृतीये शङ्गनेत्यत्र पवमेतिवदुच्यते ।
निक्षिप्य तर्जनीस्थाने [1]यशमेत्यक्षरत्रयम् ॥ ६९

वींकारेण समुत्थाय ताईत्यत्रैव संपतेत् ।
श॰राजेति क्रमाद्वर्णा नीचोचा नीचसंमिताः ॥ ७०

सङ्कृष्टो जस्थिताकारो नो इति भ्रमणं ततः ।
षाघा इत्यक्षरद्वन्द्वमुच्चनीचं क्रमेण तु ॥ ७१

धान्त्याकारो द्विकर्षेण स्वरेणैव प्रयुज्यते ।
चतुर्थगाने संप्राप्ते [1]परिष्टोभन्तियाकृपा ॥ ७२

सकृत्सकृदिह प्रेङ्खं चतुर्थाष्टमवर्णयोः ।
सोमाश्शुक्रेत्यत्र वर्णाः क्रा इति प्रेङ्ख उच्यते ॥ ७३

गावा इत्यत्र षाधावत्स्वरानिर्णय इष्यते ।
गाने तु पञ्चमे कुर्या[1]दावाजं वाजियक्रमीत् ॥ ७४

अत्र सप्ताक्षराण्युच्चैर्नीचैर्मीकार ईयते ।
मकारवासि (र्सि)नः कुर्यादीकारस्य द्विकर्षणम् ॥ ७५

सीदन्तो वेत्यत्र दन्तो उच्च॰ स्यादक्षरद्वयम् ।
आकारे च वकारस्थे योजयेत्कर्षणद्वयम् ॥ ७६

नीचं पर्व नुषेत्येतदाकारे कर्षण(त्र)द्वयम् ।
षष्ठे च गाने कुर्वीत [1]शङ्गमानो दिवाकवे ॥ ७७

# स्वर्णमुक्तासंवादः

(तालपत्रपुस्तकतः)

---

जानाति राम तव नामरुचिं महेशो
  जानाति गौतमसती चरणप्रभावं ।
जानाति दोर्बलपराक्रममीशचापो
  जानात्यमोघपटुबाणगतिं पयोधिः ॥ १ ॥

अस्ति स्वस्तिमती समस्तनगरीसौन्दर्यपूर्णा पुरी
  ख्याता श्रीनगरी गरीयसि गुणैर्गौरीगुरोः पर्वते ।
यत्र स्वर्णमयीसभासुसदने मुक्तामयी च श्रियौ
  सेवेते बलभद्रदेवचरणावन्योन्यसंस्पर्धया ॥ २ ॥

सुवर्ण—इतस्ततः सभ्यकरकर्णांगुळीषु अवलोक्य (सक्रोधं)—

भोस्सभ्याः कथयन्तु येयमधमा सार्धं मया स्पर्धते
  केयं कस्य सुता च कस्य वनिता कार्यं किमस्याः पुनः ।
किं जानाति न मां सुवर्णमखिलैराराध्यमानं सदा
  धातूत्तंसमिहापरत्र च सुखासाधारणं कारणम् ॥ ३ ॥

यतः—

यत्राहं निवसामि तत्र गुणिनः शस्त्रं च शास्त्रं तथा
  वस्त्रं चापि विचित्रवस्तुसुभगा नागास्तुरंगा अपि ।
नानादेशसमागताः सुचरिताः सन्तः कियंतो न वा
  भक्ष्यं भोज्यमपीह वस्तु सकलं नानाविधं विद्यते ॥ ४ ॥

गेहे यस्य वसामि तस्य विविधा वापीतटाकादयो
धर्मश्शर्मकरस्तनोति सतुलादानानि मानानि च ।
स्वर्गारोहणकारणानि सकलाः सोमाश्वमेधादयो
यागास्तेन नरेण कर्तुमुचिता विद्यापि तस्यैव सा ॥ ५ ॥

मुक्ता (सास्मितम्)—

तातः ख्यातस्सपाथोनिधिरिति महती रत्नगर्भा च माता
ये ये सौभाग्यवंतो जगति सुकृतिनो नायका मामकास्ते ।
आर्याः कार्यं मदीयं यदिह किमपि वा तद्भवंतो वदंतु
क्लीबं कस्मादकस्मादतिमयि वसुधावर्णमेतत्सुवर्णं ॥ ६ ॥

भ्राता मे स कलानिधिर्गिरिसुताभर्तुश्शिरोभूषणं
या सा मे भगिनी रमा भगवतो वक्षस्थलस्थायिनी ।
किंचाहं च समस्तराजरमणीवक्षोजभूषांकरी
मुक्ता नाम गुणैकधाम सततं निर्मुक्तदोषव्रजा ॥ ७ ॥

सुवर्णम्—भो भो सारासारविचारचतुराः सभासदः कथमियं मुक्तानाम मुक्तलोकलज्जा मां क्लीबमित्याभाषते । यतः—

मुकुटकुण्डलकण्ठविभूषणैः
कटककंकणकिंकिणिकादिभिः ।
पदकपादविभूषणनूपुरै-
र्जगति संततसंततिकोस्म्यहम् ॥ ८ ॥

यदि च शब्दमात्रेण सैषा रंडा समस्तवस्तुस्तुतं मां क्लीबमित्याभाषते, तर्हि ब्रह्मपदमपि निखिलजगज्जनकस्यापि ब्रह्मणः क्लीबतां कथं नापादयेत । किंच दारदैवतदेवतापदानां पुन्नपुंसकस्त्रीलिंगत्वेपि न तदर्थानां तल्लिंगतेति सुप्रसिद्धतरम् । अहो! सभ्याः नूनमस्यां गणिकायां

भवन्तोऽपि पक्षपातिनः संतीति मन्ये । यैरेवंवदन्त्यामस्यां मौनमाश्रितं युष्माभिः । न चैतद्युक्तमत्रभवतां । यतः,

सभा वा न प्रवेष्टव्या वक्तव्यं वा समञ्जसम् ।
अब्रुवन् विब्रुवन् वापि नरो भवति किल्बिषी ॥ ९ ॥

इति धर्मशास्त्रं श्रूयते । यदि च धर्मशास्त्रान्नाभिबिभ्यंति तर्हि राजदण्डभीरपि नास्तीत्यहो महत्साहसम् ॥

रागाल्लोभात् भयाद्वापि स्रंसते योधिकारतः ।
न सुखं विद्यते तस्य चेहलोके परत्र च ॥ १० ॥

सभ्याः पृथक् पृथक्दण्ड्याः । विवादाद्विगुणं दंडम् इति धर्मशास्त्रस्मरणात् ।

सभ्याः—(सुवर्णमालोक्य सस्मेरं) येन त्वां कवयः स्थले स्थले क्लीबत्वेन निर्दिशंति तेन वयं मौनमाश्रिताः । न मुक्तापक्षपातेन ॥

सुवर्णम्—हन्त! भवंतोऽपि कवीनां वचः प्रमाणयन्ति । यतः—

कवयः किं न भाषंते किं न जल्पंति मद्यपाः ।
राजानः किं न कुर्वंति किं न भक्षंति वायसाः ॥ ११ ॥

इति कविभिरेव कविवचसो यथार्थत्वकथनादित्यलमसत्कलहेन ।

मुक्ता—(तदेतत्सुवर्णवचनमाकर्ण्य सगर्वम् )

हे हे हिरण्य दुर्वादिन् गर्वमावहसे कथम् ।
क्षमाकरजनिस्स्वर्ण रत्नाकरजनिस्त्वहम् ।
समता ममता चैव घटते न कदाचन ॥ १२ ॥

सुवर्णम्—(सोपहासम्)

अहो जडजने रम्यं मुक्ताया जाड्यमीदृशम् ।
युक्तमेव हि कार्येषु गुणाः कारणकारिणः ॥ १३ ॥

युक्तायुक्तविचारहीनहृदये मुक्ते न युक्ता तव
स्पर्धा मे गुणवत्तमस्य सततं नोजन्मलोकत्रये ।
किं तातेन कुलेन किं निजगुणैरेव प्रशंसा भवेत्
मत्स्याः संति सहस्रशो जलनिधौ किं ते प्रशस्याः पुनः ॥

किंच—
यदि जनकमहत्वादेव जन्ये महत्वं
तदिह किमिति न स्याच्छुक्तिकायां तवापि ।
अथ निजगुणशून्यं तत्कथं वा महत्स्यात्
स्वमपि कमपि मुक्ते पश्य गौणं विशेषम् ॥ १५ ॥

मत्वा स्वर्णमयं सुवर्णशिखरं शक्रादयः संश्रिताः
किं चेमानि जगंति संति सततं यस्याण्डभाण्डोदरे ।
सृष्टं येन चराचरात्मकमिदं स्रष्टा स मद्गर्भजः
कोवा ते जलधिर्मदीयगणने का त्वं वराकी पुनः ॥ १६ ॥

का—(सगर्वम्)
सुवर्ण दुर्वर्णसहोदरत्वं विवर्णवत्किं कुरुषेतिगर्वम् ।
इदं हि सर्वं खलु केशवे स्थितं स मत्पितुः कोणकणावशायी ॥
अभिभूतगुणोयस्त्वं गुणिनं वदसि स्वयम् ।
सदा गुणवतीं मांश्च निर्गुणां किं वदस्यरे ॥ १८ ॥

तारोहारोमदीयः कथमिहतनुते कामिनीनामुरोजे
शोभामाभाति फाले कथमथ सुभगा मामकी नागरीणाम् ।
नासाभूषाग्रमध्ये विलसति वितता कीदृशी मामकी सा
शोभाकीदृक्च कंठे रचयति सुदृशां साच्छगुच्छा मदीया ॥
गुञ्जया तुलितस्वर्ण मुक्तया सह तुल्यता ।
युक्ता न ते पिकस्पर्धी काकः किं गरुडायते ॥ २० ॥

सुवर्णम्—(सोपहासं)

अये मुग्धे मुक्तेऽखिलगुणगणापारनिलये
मयि स्वर्णे गुञ्जासमतुलनदोषः खलु कियान् ।
सुधासाराधारे निखिलजगदानन्दजनके
कलानाथे किं वा भवति शशदोषस्य गणना ॥ २१ ॥

करे कंठे च कर्णे च सदा स्वर्णं महीभुजाम् ।
विराजति कथं वा स्युः युक्तयः तव मौक्तिके ॥ २२ ॥

मुक्ता—भो भो भर्म तव वर्म सर्वमहं जानामि । परं तु न कश्चिन्मर्मणि स्पृशेदिति धर्मशास्त्राद्बिभेमि । किंच हे हिरण्य साधूक्तं ॥

विचारय निजे चित्ते हेलां हाटक मा कृथाः ।
कथं च न हि युज्येत स्पर्धाविद्धविमुक्तयोः ॥ २३ ॥

परमात्मन इव नित्यमुक्ताया मम जीववद्दृढग्रंथिबद्धे त्वयि कथं स्पर्धा ॥

सुवर्णं—

सुवर्ण नसुवर्णेन सार्थं या स्पर्धसे मया ।
निजापरविशेषज्ञे मुक्ते मुक्तासि लज्जया ॥ २४ ॥
सारवद्भिरसारत्वात् त्यक्तेति तव मुक्तता ।
सदा यत्सूत्रबद्धासि मुक्तिस्ते कीदृशी पुनः ॥ २५ ॥

अये रंडे मुक्ते त्वदभिमतमोक्षस्य जनकं
न पश्यामि ज्ञानं किमपि न च कर्मापि विहितम् ।
विना हेतुं कार्यं बत वदसि मूढे किमथवा
जडापत्यस्येदं वचनमिह चित्रं वितनुते ॥ २६ ॥

यदि मुक्तासि मुक्ते त्वं नापवर्गवर्ती सदा ।
अपवर्गवती चेत्त्थं न मुक्तासीति निश्चयः ॥ २७ ॥

यस्मादेवं बहुविधभाषिणी भवती । अतः प्रेक्षावद्भिरुपेक्षणीया यतः-
विवादश्चविवाहश्च समयोरेव युज्यते ।

ा—(स्वगतम्) अद्यास्यैव दुर्वर्णवाचिनः सुवर्णस्य मुखभंगं करोमि । (प्रकाशं) रे रे सुवर्ण नूनं दुर्मुखतादोषादेव तापनताडनछेद-नादि विदधतीति मन्ये । अहोपरीक्षकाः, साधु साधु ॥

यदेवं दुर्मुखस्यास्य कनकस्य पुनः पुनः ।
दत्वा लोहं मुखे शून्यं परीक्षध्वं परीक्षकाः ॥ २८ ॥

किंच—

तपनीयस्य तापोऽपि युक्त एवास्य दुर्मतेः ।
पररूपापहर्तुः किं कठच्छेदो न युज्यते ॥ २९ ॥
अभद्रापि यथाभद्राऽमंगळोपि च मंगळः ।
नूनं तथा सुवर्णस्य दुर्वर्णस्य सुवर्णता ॥ ३० ॥

(तूष्णींस्थितमपि पुनः कटुवचनानि श्रुत्वा सक्रोधं)

र्णम्—भो भो परीक्षकाः कथमियं परुषाक्षरभाषिणी मुक्तानाम राक्षसी भवत्समक्षं प्रगल्भते । आः कथं ममास्याश्च परीक्षां न कुरुथ ।

सुवर्णस्य सुवर्णस्य दुर्मुखत्वप्रभाषिणी ।
प्रतीपदर्शिनी सेयं मुक्ता कस्मान्न वार्यते ॥ ३१ ॥
पावके पातितस्यापि शुद्धिरेषा ममाधिका ।
अस्यास्तु पापरूपाया भस्मीभावः परं भवेत् ॥ ३२ ॥
लोहदत्तेपि न क्वापि ममाकारविकारता ।
अस्याः पुनश्च मुक्तायां नाकारोऽप्यवशिष्यते ॥ २२ ॥

न मे भवति भंगोऽपि जातिभ्रंशः कदा च न ।
न तु पश्यामि विच्छेदः छेदेऽपि मम जायते ॥ ३४ ॥

मुक्तेयं पुनरेतस्याः जातिभ्रंशोऽपि जायते ।
अहो दुरितवत्येषा स्वरूपादपि हीयते ॥ ३५ ॥

अत्यंतानलयोगतोऽपि सुचिरं नोपैमि यत्क्षीणतां
यत्संसर्गगुणेन विक्षतिरपि प्राप्नोमि रूपक्षतिम् ।
सद्भिः साधु परीक्षितस्य गुणिनस्तेजस्विनस्तस्य मे
गांगेयस्य करोति हंत समतां मुक्तापिशाची कथम् ॥ ३६ ॥

मुक्ता—(पुनः परीक्षकमुखं प्रेक्ष्य सुवर्णं लक्षीकृत्य सेर्ष्या) आम् ।

रे कार्तस्वर मुंच मुंच तमिमं सर्वस्ववर्गं मुदा
किं वा वल्गासि पश्य मामपि सुधातुल्याममूल्यामिह ।
एतानेव परीक्षकांस्त्वमथवा पृच्छस्यरे किं न वा
ये क्रीणंति मदेकचारुगुडिकां भास्वत्कमुद्राशतैः ॥ ३७ ॥

किंच—

किंच कांचन विलोकयासि त्वं
सोदरानिह निजान् रजतादीन् ।
किंन पश्यसि मदीयसपक्षान्
वज्रविद्रुमहरिन्मणिमुख्यान् ॥ ३८ ॥

सुवर्णं रजताभिमुखमवलोक्याक्षिपक्ष्म चालयति ।

ततः क्रोधाविष्टं रजतं—अहो महासभासदोलोकाः कथमियं मुक्ता कुलटा भवतामग्रे अस्मत्कुलावतंसस्य सुवर्णस्य निंदां विदधती तावन्न वार्यते भवद्भिः । यतः ॥

न केवलं यो महतोपि भाषते
श्रुणोति तस्मादपि यस्स पापभाक् ॥

इति अन्यच्च —

दूरे तिष्ठतु कांचनं मम पुरः केयं हि मुक्ता पुनः
के वा हीरहरिन्मणिप्रभृतयः पाषाणभेदा अमी ।
यत्राहं निवसामि तत्र सदने मुक्ता विमुक्ता सदा
सीदंति प्रचितास्तथा कतिकति ख्याता मणीनां गणाः ॥ ३९

किंच—

यच्छस्त्रास्त्रबलेन हस्ततलगा सर्वापि रत्नप्रसूः
तच्चास्मच्चरमानुजन्म गुणिनामग्रेण लोहेन वा ।
किं मुक्तादिषु साम्यमस्ति किमपीहापीदृ कस्यापि वा
यद्वीरप्रवरक्षमापतिकरप्रांते सदा मोदते ॥ ४० ॥

तदिदं दुर्वर्णवचनमाकर्ण्य विवर्णा सती हीरकमुखमवलोकयन्ती सावेशं मुक्ता, स्वीयानुच्चारयति—

हे हाटकस्फटिकविद्रुमपद्मराग
गारुत्मता मरकतप्रभवाभिभूताः ।
गोमेधनीलमणिभद्रभवा भवंतो
दुर्वर्णदुर्वचनमत्र कथं सहंते ॥ ४१ ॥

हीरकं—भोभगवति मुक्ते पश्य—

एतेषु धातुषु गुणैर्गणयामि पश्यन्
स्वर्णं न दुर्मुखमिदं किमपीह मन्ये ।
ताम्रादिसीसविषये पुनरर्थशुद्धैं
रंगायसं च कुरुते मुखरं वराकाः ॥ ४२ ॥

तर्हि अस्यैव दुर्वर्णवाचिनो मुखरस्य रजतस्य स्वयमेव मुखभंगो भवि-
ष्यति । यतः—

न गणस्याग्रतो गच्छेत् सिद्धे कार्ये समं फलं ।
यदि कार्यविपत्तिः स्यात् मुखरस्तत्र हन्यते ॥ ४३ ॥

इति ।

अरे मुखर दुर्मुख प्रथितभूरिदोषाकर
त्वया सह कथापि नो रजत किन्नु लज्जाकरी ।
प्रमत्तगजकुंभभित्सकलशूरधीराग्रणीः
करोति वद किमपि हुंकृतिं दारुणां केसरी ॥ ४४ ॥

मुक्ते देवि विचारय त्वमखिलान् धातूनिमान्सर्वतः
किं कस्यापि च योग्यताऽस्ति मणिना केनापि सार्धं सता ।
एकेनापि हि केन चित् सुमणिना मुद्रास्सहस्राधिका
नीयंते कनकस्य तत्र गणना रौप्यस्य का वा पुनः ॥ ४५

रजतं—(सोपहासं) भोस्वामिन् सुवर्ण समाकर्णितं भवताऽल्पप्रस्तरस्य
प्रागल्भ्यं । अहो स्वामिन् पुरास्माभिरवगतानामेयं मुक्तैव ज्ञान-
मुक्तिहा सर्वेपि तादृशा एव ते ॥

सुवर्ण—भो रजत उचितमेवेदं शीलं शिलानां ।

रजतं—हीरकाभिमुखं अवलोक्य (सक्रोधं) । अरे रे प्रस्तर कथं मां
दुर्मुखमुखरदुर्वर्णमित्यात्थ त्वम् ॥

नान्यो दुरादिभावेन दुर्मुखो मुखरोयदि ।
तदा भगवती दुर्गा रमापि किमु तादृशी ॥

किञ्च—

नूनमेवं प्रवदतु विष्णोर्मुखत एव ते ।
हिरण्यगर्भगर्भं यन्निन्दासि त्वं कथं पुनः ॥ ४७ ॥

रे वज्र गर्जसि मुधा बत कोऽपि युष्मान्
जानाति जातिगुणतत्त्वविवेकतो वा ।
आराजगोपमखिलाः खलु धातुवर्गं
जानन्ति देवपितृमानुषकर्मयोग्यम् ॥ ४८ ॥

महावेषो मान्यो भवति भवतां चापि यदहो
विना हेम्नो योगं न खलु सुषुमा कापि भवताम् ।
ऋते रत्नैः शोभानिचयललिताः सन्ति भवने
कियन्तोऽलङ्काराः कति कति च पात्राणि धनिनाम् ॥ ४९

हे हे हीरक मामनेकविविधालङ्कारसत्कारणं
दारिद्र्यैकनिवारणं यदि न वा जानाति किं तावता ।
गन्धापूरितदिङ्मुखां च निमिलद्भृङ्गालिभिर्लोलितं
पद्मं वेत्ति न दर्दुरो यदि तदा पद्मस्य किं हीयते ॥ ५० ॥

सुवर्णम्—भो भो वत्स कलधौत किमेतैः पाषाणैः सह कलहेनास्माकमेषां च सारासारविचारं राजाधिराजबलभद्र एव करिष्यतीति तच्चरणसमीपमुपगच्छामः ।

मुक्ता—तदेतत् श्रुत्वा (सहर्षं) साधु सुवर्ण सम्मतमेतदस्माकं । ततः सर्वेऽपि क्षितिपालमुपगम्य स्वस्वविषयविशेषमावेदयन्तो विज्ञापयन्ति—

राजाधिराज बलभद्र समस्तवस्तु-
तत्त्वज्ञ ते निकटमत्र समागताः स्मः ।
तन्नो विचारय विशेषमशेषमीश
सभ्यैस्समं सुमतिभिः समतासमेतैः ॥ ५१ ॥

उक्तं च—

व्यवहारान्नृपः पश्येत् विद्वद्भिर्ब्राह्मणैस्सह ।
धर्मशास्त्रानुसारेण क्रोधलोभविवर्जितः ॥ ५२ ॥ इति ।

राजा—तदावेदितमाकर्ण्य (सस्मेरम्)

हे हे सुवर्ण सित ताम्रक नागवङ्ग
लोहारकूटकलहं कुरुतात्र कस्मात् ।
पश्यामि नैव कलहस्य हि बीजमाद्यं
नापि प्रयोजनकमत्र विलोकयामि ॥ ५३ ॥

न हि बीजप्रयोजनात विना किञ्चिदस्तीति ।

सुवर्णमाह—राजन् सत्यमेतन्न बीजप्रयोजनाभ्यां विना किञ्चिदस्तीति ।

शक्यते न मया सोढुं समता मुक्तयानया ।
सरमासूनुना साम्यं सहते किमु केसरी ॥ ५४ ॥

राजा—(पुनःसस्मेरं ।) भो सुवर्ण अस्मत्सभायां अभिमानमपहाय निखिलवत् चित्तेवस्थीयतां । यतः—

सर्वेऽपि गर्वमपहाय समत्वमेत्य
तिष्ठन्ति पश्य समवेत्यपरस्परेण ।
संत्यत्र के चन समा विषमाश्च के चित्
किं कोऽपि केन कुरुते कलहं कदापि ॥ ५५ ॥

सुवर्ण–(राजाभिमुखमवलोक्य) यदादिशति इत्युक्त्वा तूष्णीं स्थितम् ।

राजा—(एवं सुवर्णादीन् संबोध्य मुक्तादीन् संबोधयति) ।

मुक्ते हीरक विद्रुम स्फटिक भो गोमेद गारुत्मत
भो वैडूर्यक नील भो मरकत श्रीपद्मरागामुना ।

यूयं किं कुरुताम्रधातुपतिना स्वर्णेन वैरं वृथा
येनास्मिन्मिलितं व्यधायि भवता ते नोचितं नैव तत् ॥ ५६ ॥

युष्माकं यादृशी कान्तिः काञ्चनेन सहामुना ।
नान्यथा तादृशी तेन मिलित्वैवास्यतामिह ॥ ५७ ॥

हीरकं च (मनसि विचार्य)–भो भगवति मुक्ते साधूक्तं सकलार्थ तत्त्वविदा महाराजेन । यतः—

उपकर्त्रारिणा सन्धिर्नमित्रेणापकारिणा ।
उपकारापकारौ हि लक्ष्यं लक्षणमेतयोः ॥ ५८ ॥

उपकारस्त्वहोऽस्माकं काञ्चनेन महान् कृतः ।

यतः तद्दुःखासीनान् अस्मानानीयपरमपवित्रकमनीयमूर्तेभगवच्चरणस्य आनन्ददानमानसंतानसंतोषितभूरिभूसुरप्रवरस्य विविधविद्याचतुरप्रचुरपण्डितमण्डलिमण्डितसभामण्टपस्य निजकीर्तिकौमुदीमुदित जगत्पद्मस्य क्षितिपालचयचक्रचूडामणिश्रेणिनीराजितोपात्तपादद्वयांभोजाकिम्मीरितस्वर्णपीठस्य अस्य महाराजस्य दर्शनं कारितम् ॥

किञ्च—

उपजीव्याविरोधेन न कुतश्चिदलं स्थितिः ।
महाराजेन साधूक्तं मिळित्वैवास्यतामिति ॥ ५९ ॥

सर्वाकूपारपारस्थितमपि विविधं वस्तुजातं समस्तं
शस्तं यत्पादपीठं क्षितितलममलं सर्वदालंकरोति ।
सोसौ भूचक्रवर्ती जगदखिलमहावीरतीव्राग्रवर्ती
प्राज्यं राज्यं विधत्तां नृपतिकुलमणिः **साहिवाहोनरेन्द्रः** ॥६०॥

इयं श्रीनगरी यस्य श्रीमहेशमनीषिणः ।

॥ श्रीहयवदनपरब्रह्मणेनमः ॥

# श्रीवेलापुरीयसौम्यकेशवोत्सवमालिका.

---

लक्ष्मीवक्षोजाग्रानुक्षणविक्षतिकनत्किणभ्रमदम् ।
वक्षसि वृषशैलपतेर्लक्ष्मालक्ष्मीं हरत्वजस्रं नः ॥ १ ॥

श्रीमन्मङ्गलवेदिबद्धमुकुरश्रेणीषु लज्जाभरा-
दन्योन्यप्रतिबिम्बवीक्षणमनागन्तःकृतानन्दयोः ।
व्यक्ताव्यक्तमितस्मितप्रविलसद्गण्डस्थलीस्निग्धयो-
र्लक्ष्मीकेशवयोः कटाक्षसरणिर्वैवाहिकी पातु नः ॥ २ ॥

काप्यागच्छति मामकीनभवनं त्रैलोक्यसंमोहिनी-
मेनां द्वारि न मुञ्चतात्र विदितं गोपीविटत्वं हरेः ।
श्रुत्वेत्थं गदितं श्रिया प्रति सखीर्भस्मासुरोद्धूतये
कान्तारूपजुषस्सदा समवताच्छ्रीकेशवस्य स्मितम् ॥ ३ ॥

औदार्यश्रीविहारस्थलमधिकतरब्रह्मतेजस्समृद्धे-
र्निक्षेपं प्राक्तनाश्वप्रचुरविहृतिसन्मन्दुरामिन्दिरेशम् ।
साक्षाद्भूमावुदीतं शुभगुणनिलयं पुण्डरीकायताक्षं
श्रीवासब्रह्मतन्त्रादिमपदकलिजिद्देशिकं भावयेऽहम् ॥ ४ ॥

एलादिवल्लिपरिवेल्लितरम्यशाखि
मालापरिष्कृतमहोपवनालिरम्या ।
बालामणीविहरणास्पदसौधसान्द्रा
वेलामिधा जगति राजति राजधानी ॥ ५ ॥

सकलसमृद्धिस्थानं विकसत्कर्णाटदेशकमलस्य ।
या कर्णिकेव राजति नाकसदोनगरमदविधूतिचणा ॥ ६ ॥

स्फुटोज्ज्वलन्मञ्जुलशङ्खचक्र-
रेखानि कूश्माण्डफलानि यस्याम् ।
जातानि वर्षन्तितरां जनानां
स्फीतास्सदाश्चर्यसमृद्धिधाराः ॥ ७ ॥

केशवविरहासहनादागत इव दुग्धजलनिधिर्यस्याः ।
विलसति दक्षिणभागे विष्णुसमुद्राभिधस्तटाकोऽपि ॥ ८ ॥

शरदुदयदुडुव्रजप्रकाशाः
पृथुलतरा उदयन्ति यत्र मुक्ताः ।
स्वरुचिविधुतपूर्णचन्द्रबिम्बा
विरचितदक्षिणवेष्टनाश्च शङ्खाः ॥ ९ ॥

यः खलु सेतूपलहतिचूर्णितवीचिच्छटापृषन्निकरैः ।
तटभुवि चरतां नृणामात्मोद्भवमौक्तिकानि किल दत्ते ॥ १० ॥

या नगरी धरणितले विष्णुसमुद्रस्य तस्य वेलायाम् ।
स्थित्या वेलाभिख्यामलभत निखिलैर्जनैश्श्लाघ्याम् ॥ ११ ॥

समीपगे विष्णुसमुद्रमध्ये
न दृश्यते या यदुदक्तटाके ।
दूरेऽप्यलं केशवगोपुरस्य
च्छाया चकास्तीति विचित्रमेतत् ॥ १२ ॥

अलं पल्लवितेन ॥ १३ ॥

जागर्ति यस्यां खलु चित्रचित्र
महोपलप्रोज्ज्वलपुत्रिकाढ्यम् ।
विचित्रशालाशतजातशोभं
समानहीनं विमलं विमानम् ॥ १४ ॥

यत्रास्ते महदन्तरं धुरि महाद्वारस्य चान्तर्गृह-
द्वारस्यापि तथान्तरालधरणावास्ते महन्मण्डपम् ।
एवं वाप्यपरद्वये सुघटितेऽप्यन्तर्गृहे दृश्यते
व्यत्यस्ता घनगोपुरस्य महती च्छायेति चित्रं न किम् ॥ १५ ॥

तादृग्भावास्सहृदयहृदावर्जनायत्तदीक्षा
यद्भित्तिस्थोपलशतलसद्रम्यपाञ्चालिकौघाः ।
द्रष्टॄन् मर्त्यान् विवशितहृदस्स्तम्भिताङ्गान् स्वतुल्यान्
पौनःपुन्यादिव विदधते हन्त नैषा मृषा वाक् ॥ १६ ॥

त्वष्टा प्रागमराधिनायकसभामेवं तथा निर्ममे
दिव्यामित्यनुवर्णयन्तु कतिचिल्लोके ध्रुवं वा न वा ।
मद्वाक्यं शृणुताखिला अपि जना निष्पक्षपातं ब्रवी-
म्येनादृग्भवनं हरेर्न भविता नैवास्तिनासीद्भुवि ॥ १७ ॥

त्यक्त्वासूयां वदत मनुजा नास्ति निर्माणकर्ता
भूम्यां यातो दिवमथ महासूययालं विमाने ।
अस्मिन् दिव्योपलकृतकनत्पुत्रिकास्वस्ति यद्य-
च्चित्रं ज्ञातं किमु तदखिलं तिष्ठतु प्रौढिरन्या ॥ १८ ॥

अन्यत्तिष्ठतु चित्रमद्भुतशिलास्तम्भेऽत्र कस्मिंश्चन-
प्रत्येकं शतकं विनिर्मितमभूदष्टोत्तरं श्रीपतेः ।
स्थानानामपि चान्यदस्ति चणकौपम्योपलान्ते वृषो
दन्ती च क्रमुकप्रमाण उपले क्लृप्तौ कथं शिल्पिना ॥ १९ ॥

किं बहुना ॥ २० ॥

परिपक्वमधूच्छिष्टैरपि वा शक्यं किमीदृशं रूपम् ।
कर्तुं यादृशमतनुत तत्रोपलपुत्रिकासु शिल्पीन्द्रः ॥ २१ ॥

अतुलघनविधाने तत्र दिव्ये विमाने
नवसरसिजलक्ष्मीगर्वसर्वङ्कषाक्षः ।
स्फुटयतुमिव लोके नैजसर्वोन्नतत्वं
जयति जनितहर्षः केशवोऽत्युन्नताङ्गः ॥ २२ ॥

चन्द्रद्रोणमहाचले चिरतरं देवैस्समाराधितं
सान्द्रश्रीः किल विष्णुवर्धनमहीपालस्सवेलापुरे ।
प्रत्यस्थापयदुत्सवाय जगतां दिव्ये विमाने च यं
सोऽयं केशव एधते भुवि चिरात्कामाभिरामाकृतिः ॥ २३ ॥

तत्ताहक्षैर्नृपालैर्बहुभिरिह समाराधिते देवदेवे-
पाथोधीभेन्द्रपृथ्वीधरधराणि (१७८४) मिते शालिवाहे शकेऽ-
दुन्दुभ्यब्देऽत्र हूणाधिपतिनियमनात् प्राप वेलाख्यपुर्या [स्मिन् ।
ऐश्वर्यं चिन्नकृष्णाभिधविभुतिलकश्शेवधिस्सद्गुणानाम् ॥ २५ ॥

स निखिलराज्यविचारं घनतरभक्त्या रमापतौ तस्मिन् ।
लोकेशे श्रीकेशवदेवेऽर्पयतीह चिन्नकृष्णविभुः ॥ २६ ॥

दर्पश्चेन्न दया दया यदि भवेन्नौदार्यमेतच्चचे-
न्नैव स्यात् सरसत्वमेतदपि चेद्भक्तिर्न देवे भवेत् ।
सर्वत्रापि जने समग्रसुगुणो नैतादृशः कश्चन
श्रीमान् दृष्टचरः कदाचिदपि वा नासत्यमेतद्वचः ॥ २७ ॥

किं बहुना ॥ २८ ॥

परिपालयत्यमुष्मिन् वेलापुरदेशं श्रीकेशवदेवानिरवधिकरुणावरुणालय-समुज्जृम्भिततुङ्गतरतरङ्गसन्दोहसन्देहसन्दायिमङ्गलतरापाङ्गपरम्पराप्रसर—पञ्जरणायिते श्रीमति निखिलविबुधजनश्लाघितचर्ये चिन्नकृष्णनायक-विभुवर्ये समुदयति घनतरोष्मयुवकामिनीकुचकनककलशपरिरम्भसमा-

त्तधैर्यतरुणसमुदये हेमन्तसमये स्वाधिकतरागस्त्यमहामुनिमहामहोभराव-धूततयेव मन्दीभूततेजसि—आश्रितदक्षिणायने तीक्ष्णभानौ शीतकरायमाणे धामनिधिमण्डलविधुरायां नितान्तरतान्तपरिश्रान्तिजनितघर्मजलनिर्मृष्टतिलकायामिव ललनायां दिशायां धनदगोपायितायां दुस्साधतरमानिनीमानमहापिशाचिकादूरोच्चाटनहेमन्तमान्त्रिकमन्दानिलफूत्कृतोद्दाङ्कितविभूतिभ्रमावहहिमानीसमानीतधूसरिमभारे दशदिशाभ्यन्तरे निर्भरविजृम्भमाणयौवनोष्मानिजस्तनयुगलाविरलाश्लेषदूरीकृतहिमोद्वेगसरागहृद-यतरुणकामुकनिकरसविशेषदष्टरदनवसनदलास्वपि प्रालेयशीकरानिकरस्फीतमारुतव्रणिताधराणां जनानां वचनीयतामनुपगतासु अजातनिर्मलहर्म्याग्रभागशयनमनुद्घाटितगवाक्षमघनसारचन्दनचर्चनमकुसुमहारोपहार-मलामज्जकतालवृन्तवीजनं केवलकस्तूरीचन्दनलेपमतिमात्रताम्बूलचर्वणं राङ्कवैकवसनं गाढालिङ्गनमात्रसारमनुभवन्तीषु सर्वरात्रं कामिनीषु कामुकैस्सह रतोत्सवं किंबहुना जागरूके धनुषि तिग्मरोचिषि देवस्य श्रीसौम्यकेशवस्य तन्मासप्राभातिकादिव्यार्चनेषु निरन्तरायं समेधमाने-ष्वाविंशतितमदिनं प्रादुरास श्रीपाञ्चरात्रागमनिगदितकुठारोत्सवाभिधानमहोत्सवसमयो मन्दमन्दम् ॥ २९ ॥

तथोत्सवं रचयितुमाप कौतुकं
रमापतेर्विभुरथ चिन्नकृष्णराट् ।
यथेदृशो न विरचितःकदाचने-
त्यलं जना भुवि निगदन्ति सर्वतः ॥ ३० ॥

अकारयत शिल्पिनस्स्वयमुपात्तहर्षस्स्थितो
विचित्रतरवस्तुभिस्सपदि चिन्नकृष्णप्रभुः ।
कुठारमिति संज्ञितं विशदकायमानं जना
विलोक्य यदिहापरं भुवि विलोकितुं नेहिरे ॥ ३१ ॥

चापमावसति तेजसां निधा-
वेकविंशतितमे दिने प्रभुः ।
केशवस्य समवाप्य सान्निधिं
साञ्जलिस्मितमुखं व्यजिज्ञपत् ॥ ३२ ॥

जय जय वृकचकितजगद्भयहरणचण प्रसन्नतरवदन ।
जय जय वियदयनानां जयद जगन्नाथ केशव नमस्ते ॥ ३३ ॥

देवाः पङ्कजभूमहेन्द्रधनदप्रष्ठा गरिष्ठा गुणै-
स्तत्तादृग्गुणविष्णुवर्धनमहीपालादयो भूमिपाः ।
त्वद्दिव्योत्सववैभवप्रसरणं कर्तुं न शक्ता वयं
क्षुद्राश्शक्नुम इत्ययं न कुरुते के वात्र वैहासिकम् ॥ ३४ ॥

भवत्कटाक्षौघसमेधितेन
त्वदीयभृत्येन दयापयोधे ।
सदा मयानेन महोत्सवान् स्वान्
मुदा हरे कारयासि त्वमेव ॥ ३५ ॥

अद्य यथाशक्ति मया हृद्यतमं कारितं कुठारमिमम् ।
वस्तुभिरिह शस्ततरं कौस्तुभभूषण परिष्कुर्याः ॥ ३६ ॥

इति भगवान् कृतप्रार्थनश्श्रीमता चिन्नकृष्णनायकविभुवरेण श्रीसौम्य-केशवो भस्मासुरशिरोदलनाविराचितादिव्यरूपं पश्यन्तु सर्वे जना इति कृपयेवावलम्बितमोहिनीवेषस्तत्क्षणोद्घाटितेनोत्तरद्वारेण निर्गत्यावतीर्य सोपानमार्गात् ताड्यमानभेरीकैर्नाद्यमानवीणैर्वाद्यमानवादित्रैश्चोद्यमान-नर्तनैरापाद्यमानहस्ततालैर्नुद्यमानोत्कम्पवसनैर्भिद्यमाननारिकेलैश्छाद्यमान-दिव्याम्बरैर्वद्यमानभगवद्गुणैस्तुद्यमानजडजनैर्विद्यमानफलकुसुमैर्गद्यमान-भगवन्नामधेयैरासाद्यमानानन्दैराह्लाद्यमानपरस्परैरद्यमानताम्बूलैराखिद्यमान-वदनैरुत्सार्यमाणसंवर्षैः प्रसार्यमाणोपहारैरुदीर्यमाणतानैर्विचार्यमाणशास्त्रा-

थैरुद्वीर्यमाणानन्दबाष्पैः प्रचार्यमाणनिगमघोषैरुच्चार्यमाणदिव्यप्रबन्धै-र्विष्फार्यमाणलोचनैरुद्धार्यमाणाञ्जलिपद्मैराकार्यमाणस्वस्वजनैरापूर्यमाणभ-क्तिभिरुत्प्रेर्यमाणकुसुमैरवार्यमाणपुलकैरास्मर्यमाणामृतविभजनकथैर्विस्ता-र्यमाणमार्गैः परिस्तिर्यमाणवसनैर्विकीर्यमाणलाजाञ्जलिभिस्त्वर्यमाणस्त्रीजनै-र्ध्रियमाणाभरणैः क्रियमाणप्रणामैराद्रियमाणभागवतैर्वीज्यमानचामरैस्त्य-ज्यमानान्यविचारैरनुभुज्यमानभगवद्दिव्यविग्रहसौन्दर्यसेवनैरज्यमानहृदयैः परिष्वज्यमानमित्रैस्सृज्यमानस्वस्वविद्याकौशलैरुत्तेज्यमानप्रदीपैर्विभज्यमा-नगोष्ठीकैस्सज्ज्यमानगन्धकयन्त्रैः प्रसज्ज्यमानपटवासकैस्तर्ज्यमानशब्द-नैर्गर्ज्यमाननीचजनैर्नीराज्यमानभगवच्चरणारविन्दैर्भ्राज्यमानाकाशबाणै-श्चानेकविधजानपदचातुर्वर्ण्यजनैस्सर्षपप्रवेशस्याप्यदत्तावकाशे निजदिव्य-भवनप्राकारान्तरे मन्दंमन्दं व्यालोलवनमालं कम्पितकर्णावतंसं चला-चलहेमचेलाञ्चलमतिहंसं विततान पदन्यासं किञ्चिदन्तरमनन्तरम् ॥३७॥

प्रभवादिषु वत्सरेषु सत्स्व-
ण्यभजद्वत्सरएव केशवोऽस्मिन् ।
इममुत्सवमत्र मत्सनाम्नी-
त्यथ हर्षादिव दुन्दुभिर्ननाद ॥ ३८ ॥

समतीत्य किञ्चिदन्तरं निरन्तरजनदन्तुरं प्रदक्षिणीकृत्यानिरु-द्धाख्यं विमानमुपेत्य दक्षिणेन ध्वजस्तम्भमग्रतश्श्रीमता चिन्नकृष्ण-नायकेन भक्तिपरवशेन कारितं विचित्रतरपुत्रिकाशतभावविलोकनविव-शितहृदयसहृदयजनजनितदरहासितकान्तिच्छुरितामिव क्वचिन्निबद्धतया शारदनीरदपारदच्छायैरच्छवसनैः क्वचित्क्वचिन्नीलतरवसनपरिकलित-तया कबलितमिव तत्र तत्र कटाक्षकान्तिभिः कान्तानां क्वचित्क्वचिदरुण-तरपटपटलघटिततया विष्णुपदासक्तमाप्याकालिकमभूदित्यात्मनोऽपयशः प्रमार्जनयावनितलेऽवतीर्यविष्णुपदासक्तं निरन्तरमखिलजनासेचनकतया

वर्तमानमिव गन्धर्वनगरं कायमानाग्रमहोत्सवे सवनागतदैवतकराकिसलयनिरन्तरपरिगलदसमकुसुमपुञ्जधारासारैरिव विचित्रतरचित्रचेलजालपरिवेष्टितैरनेकैस्स्तम्भैरभिगुम्भितं क्वचिन्ममैवाधिवसति मण्डलं भगवान् हिरण्मयवपुरिति निश्शङ्कमहङ्कृतिं भजति पङ्कजबान्धवे तदीयमाधिक्यमसहमानतया द्वादशात्मनस्ततोऽपि वैशिष्ट्याकाङ्क्षयानेकधावतीर्यान्तर्मण्डलं भगवन्तं स्वर्णवर्णं बिभ्राणेन परिपूर्णचन्द्रमण्डलेनेवान्तस्समुज्ज्वलत्प्रदीपकलिकेन स्फाटिकसमुद्गकसहस्रेण देदीप्यमानमन्तरान्तरानिबद्धपारदघटिकासहस्रतया समहाबुद्बुदसमुदयमिव सकम्बुशतसहस्रमिव सपृथुलमौक्तिकनिकरमिव सरस्वन्तं तत्रतत्र प्रतिमुक्तमहामुकुरनिकरविसरदशदशतरलरुचिनिचयथळथळिततया मोहिनीरूपमुपेयुषो भगवतो दिव्यविग्रहकटाक्षकान्तिपरिमोषणायागताभिस्संचरन्तीभिर्विद्युल्लताभिरिव समुणितं निजननान्दुः पतिरिह दिनदशके जगन्मोहनानि धत्ते रूपाणीति द्रष्टुमवतीर्णैस्तारकापुञ्जैरिव दीपप्रभाप्रतिफलनथळथळद्भिर्व्यालम्बमानैस्स्फाटिकमणिगुच्छैः कामपि श्रियमाश्रयन्तं तत्रतत्र सङ्घीभूतातानां लक्षणोरूणां धिक्कृतनिजश्रीभरं थळथळदतिस्निग्धरम्योरुलावण्यमुद्वीक्ष्य साध्वसात् कम्पमानैरिव मन्दानिलचलाचलपलाशैरम्भास्तम्भैः परिष्कृतदशदिशावकाशं सेवाकौतुकिना राजराजेन समर्पितमिव पुष्पकं मनसेव निर्मितमाश्चर्यमिव पुञ्जीभूतं कौशलमिव चित्रकृष्णाविभोर्मूर्तं न विश्वकर्मणा न मयेन नचान्येन केनाप्येवंविधं रचितमिति निखिलजनजेगीयमानमतिस्फारं कुठारं नाम कंचन कायमानविशेषं प्रविवेश भगवान् वेलापुराभरणायितः श्रीसौम्यकेशवो देवः ॥ ३९ ॥

असमानकायमानं लसमानं दिव्यमोहिनीवेषे ।
विशति देवे दृष्ट्वा विवशितमनसो बभूवुरथ सर्वे ॥ ४० ॥

तथाभूतामेतां नर्तनव्याजेन व्यत्यासितपदतया भस्मासुरवदत्युद्धतानां जनानां पदान्यपि व्यत्यस्तान्येव तनवानीतीव सूचयन्तीं नृत्तावसरत्रुटिताग्रलग्ननूपुरमौक्तिकरेखयेव नखरेखया कोरकितचरणयुगलां रमणीयतरगतिविजिततया पादयोर्निपत्य सावधानवचनानि वदता हंसमिथुनेनेव मौक्तिकमञ्जीरयुगलेन विराजमानां निजदिव्यदेहरुचिसाम्यपरीचिक्षिषयेव प्रस्फुरदूरुलावण्यसूक्ष्मचामीकराम्बरं वसानां मदनमहाराजराज्यभारदिव्यतररत्नाट्टालकेनेव नवमणिमेखलाकलापेनानुमेयमध्यभागामदसीयपाठलतरनखरूपस्य मामकीनचञ्चुपुटरूपस्य च साधर्म्यं घटते वा नवेति जिज्ञासयेवाहोस्वित् सौवर्णकङ्कणसमुज्ज्वलत्पद्मरागमणिगणे परिपक्वदाडिमफलबीजराजिभ्रमात् तद्भक्षणाय प्रत्यासन्नेनेवोताहो विहारकृते तुङ्गतरकुचयुगलगिरिदुर्गमधिरूढेन कुसुमशरमहाराजेन निजनेत्राधस्तादेव स्थापितेनेव तद्वाहनेन लीलाशुकेनाधिष्ठितकटिन्यस्तवामहस्तामहो सर्वेष्वपि वलयकङ्कणमञ्जीराद्याभरणेषु ममैवासदृशं भागधेयं यन्मम निखिलभुवनमोहनयोः कनकाम्बुजकुड्मलसच्छात्रयोर्घनयोरस्याः स्तनयोर्लब्धं स्थानमिति प्रहर्षान्नृत्यद्भिरिव डोलायमानैरुदारैर्मुक्ताहारैस्तारकितहृदयां हन्त हन्त महोन्नतावावां बध्नातीयमिति रुषा विदलयद्भ्यामिव दिव्यकञ्चुलीं स्तनाभ्यां विक्षोभ्यमाणनिखिलभुवनहृदयां रोहिण्येव प्रियतमा तवेति कुपिताश्चित्रास्वात्यादितारकास्समाश्वासयितुमङ्केदधानेनेव वज्रललन्तिकाधररुचिभरापाटलनासामौक्तिकमुखानेकमुक्तावलीर्दधानेन परिपूर्णवदनकुमुदिनीनायकेनानन्दयन्तीं त्रिलोकीं निजसख्यास्त्रिपथगायाश्श्रीकान्तचरणनलिनजाताहमिति गर्वातिशयं सोढुमसमर्थतया तस्या अप्याधिका भवामीति निश्चित्य मुखे जातामिव कालिन्दीं मृगमदतिलकरेखां दधानामनेनैव मोहिनीरूपेण चिच्छेदायं भगवान् पुरामामिति वैरनिर्यातनाय समयं प्रतीक्षमाणेन

पश्चान्निलीनेन अस्तदिनकरेणेव राहुणाम्बरमणिबिम्बाकृतिकनककुसुम—
विशेषपरिष्कृतमूलदिव्यवेणीभरेण पश्यतां जनानां हरन्तीं हृदयानि
मूर्तीभूतामिव मदनस्य मोहनशक्तिं यस्ययस्य स्पृशस्युत्तमाङ्गं तस्य
तस्य दलति मूर्धेति निजदत्तवरहस्तमनन्तरमात्मानमेव हन्तुमनुधावन्तं
भस्मासुरं वीक्ष्य भयाद्द्रवन्तमनन्यशरणं विक्रोशन्तमुमाकान्तं रक्षितु
मात्तकरुणतयान्तरा समागत्य तेनैव वरेण तस्यैवासुरस्य चूर्णीकर्तुमुत्त-
माङ्गं मोहयित्वानेनरूपेणाहमिव त्वमपि नृत्येत्यभिधायाभिनयव्याजेन
यथा पुरा निजशिरोऽस्प्राक्षीत् तथा तां लीलां प्रदर्शयितुं शिरसि दधानां
दक्षिणकरतलं दिव्याभरणकोरकिततनुलतां का गतिर्भगवानप्यधिगतलल-
नारूप इति चिन्तयेवोत तत्तादृशेनामुष्या लावण्यभरेण दूरीकृतः खल्वा-
वयोर्लावण्यमद इत्याश्चर्येणेव स्तब्धाभ्यां श्रीभूमीभ्यां परिष्कृतपार्श्व
देशामदनरूपेण निराबाधस्य मम बाधकं राहुं नाम कं चनासृज इति
निन्दितुं लम्भमानेन चन्द्रमण्डलेनेव श्वेतच्छत्रेण सनाथीकृतोत्तमाङ्गां
पुरा किल निखिलभुवननायिकाप्येषा मां वितरीतुं देवेभ्यस्स्वकरेण
जग्राहेति हर्षान्निरन्तरसेवनकृतोल्लासया सुधयाप्रेरितैरिव निजशीकर-
पुञ्जैश्चामरैर्वीज्यमानां प्रथमे प्रदक्षिणे शठारियतिराजानिगमान्तदेशिक-
परकालगुरुवराद्याचार्यपरम्परा अन्तरान्तरा यथामर्यादं बहुमानयन्तीं
प्रदक्षिणे द्वितीये सपदक्रमघनं निगमपारायणमातन्वद्भिर्जनैराभिष्टुतां
तृतीये प्रदक्षिणे दिव्यप्रबन्धबन्धुरस्वरनिशमनेन सानन्दं परिक्रमन्तीं
चतुर्थे मधुरतरवाराङ्गनागीतलोलतया मन्दंमन्दं कृतचङ्क्रमां दिव्य-
लावण्यां तां निखिलजगन्मोहनं कान्तारूपं दधानां केशवाभिधानां
देवतां निरीक्ष्य प्रणम्यप्रणम्य नैतादृशं कदाचिद्दृष्टं परिष्करणं
भगवत इति जल्पंजल्पं मुमुदिरे चिरेण चिन्नकृष्णप्रभुमुखा
निखिलमनुजाः ॥ ४१ ॥

आसीनः क्षणमथ मञ्जुमण्डपान्ते
स्वीकृत्यार्चकविहितां शुभां सपर्याम् ।
उद्धूतामृतरुचि दिव्यमन्नजातं
सापूपं हरिरनघं दृशा ददर्श ॥ ४२ ॥

तदनु मृदुतरनानाविधहिङ्गुमरीचिकाजीरकशर्करादिसंस्कृतादिव्यान्नदिव्यापूपविनियोगसमये यथामर्यादं दीयमानेषु सरसादनकबलेषु तत्क्षणं विमुक्तवेदपरायणालस्यमुत्सृष्टदिव्यप्रबन्धानुसन्धानायासं परित्यक्तसत्क्रियाव्यापारगौरवमुध्दूतशुचिताऽशुचिताविचारजाड्यं स्वीकृतभगवत्प्रसादैकमाहात्म्यं दूरीकृतदृष्टिदोषप्रचारमनालोचितसूदजनगुणागुणमचिन्तितजातिव्यवस्थाप्रसङ्गं मह्यं दीयतां कबलद्वयं मह्यं तावत् त्रयः कबला मह्यं पञ्च मह्यमष्टौ मह्यं दश मह्यमग्रे देयमेतस्मादपि कस्मान्नदत्तं न गृह्णामि तावदधुनास्तु विचारो भवतु विस्मृतं मया जाल्मेन गृहाणाद्य तावत्कृपया नैवं रचयामीतऊर्ध्वं सर्वथा न गृह्णाम्येव मम मर्यादैव नाशिता त्वया दुरात्मन् भो भोः किमेष कलकलस्समेधतेऽत्रचिन्नकृष्णविभुर्दत्ताचामुना प्रथममेव मा क्रियतां कोलाहल इति दुर्लङ्घ्यामहाज्ञा भवतु सर्वात्मना न श्रूयते मया यौष्माकं वचनमन्यत् ब्रूथ यूयं दासतया शृणोमि नेदृशं मर्षयामीत्यन्यत्र मह्यं नदत्तोऽनेनापूपशकललेशोऽपि गच्छामि चिन्नकृष्णविभोरग्र एवमेव रचयतेति युष्यभ्यं प्रदत्ता वा तेनाज्ञा मामा तथा कार्षीर्वदामि किञ्चिदहं श्रुत्वा यत् कर्तव्यं रोचते तत् कुरु नहि नहि निशमयामीत्युत्थाय प्राप्य विभुनिकटं कारयासि चिन्नकृष्णविभो त्वं दिव्योत्सवं किमसौ निजजनकेन वा निजपितामहेन वार्जितं ददाति कस्मान्मम कमपि न प्रयच्छत्ययं विचार्यतामिति यावन्निगदति स तावदेव मा तथा शङ्कतां महाविभो नाहं तथौद्धत्यं भजे तृष्णा जल्पत्येष दुराशया दत्तेष्वपि बहुषु कबलेष्वाक्षिप्तस्पन्दनात्

प्रागेव भक्षयित्वानायासं मुहुर्मुहुर्मां प्रतिबध्नातीत्यन्यत्र नैतादृशं दिव्या-न्नापूपं कदाचिदपि दृष्टचरं गच्छागच्छ गच्छाम्यागच्छामि गच्छत्यागं-च्छति देहि ब्रूहि किञ्च दीयते चिद्धान्नमभागधेयोसि किं प्रयोजनमि-दानीमेव विनियुक्तमासीच्छर्करामुद्गान्नमहह समय एव प्राप्ता वयं यद्ययं समयोऽत्यक्रामिष्यदभविष्यदस्माकं मनसि महान् पश्चात्तापो निवार्यतां कलकल इति बहुधा जग्धार्धकबलानामजग्धकबलानां किञ्चिज्जग्धकब-लानां भक्षितसर्वकबलानामपेक्ष्यमाणान्यकबलानां दीयमानकबलानां प्रदत्तकबलानामदत्तकबलानां तिष्ठतां निषण्णानां गच्छतामागच्छतां द्रवतां नहि नहि चिन्नकृष्णनायकविभुसदृशः प्रभुरिमामधिवसतिस्म वेलापुरीं कोवैवं श्रीकेशवस्य कुठारोत्सवं नाम दिव्योत्सवं कारयतिस्मे-दृशानि सरसादनापूपानि वा दापयतिस्म किं बहुना वचनगौरवेणेति मुहुर्मुहुर्नैकविधं जल्पतां च जनानां कोलाहलोऽस्पृशद्दिक्पालकनगरी-जनकर्णान्तिकम् ॥ ४२ ॥

अथ सजवसमर्पितारात्रिकश्चिन्नकृष्णप्रभौ
दृढतररचिताञ्जलौ प्रस्थितो मण्डपादद्भुतात् ।
चलदतिविमलोल्लसच्चामरद्वन्द्वसंवीजितो
जलरुहनयनो विमानं निशायां विवेशादरात् ॥ ४३ ॥

अन्येद्युर्निजतनुजसुग्रीवमित्रस्य कोदण्डधरस्य रघुनन्दनस्य गृहात् भगवानयं वेषमित्युपहारमर्पयितुममुष्मै विचित्रतररत्नमार्गणायेव निमज्जति जलजबन्धौ चरमसिन्धौ रघुनन्दनावतारे निर्वार्णितं लवण-सिन्धुवेलावैभवमेव न दृष्टं किल विष्णुसमुद्रवेलापुरवैभवमिति निशा-मयितुमतिकुतुकादिवोपात्तरामचन्द्रवेषः कस्मादस्मत्तातस्य नैतावदेव तवापि श्वशुरस्य रत्नाकरस्य सुशीतलहृदयस्यापि दशाननगतेन रोषेणैव पृथुलतरचलशरपातनेन क्षोभमजनयस्त्वामित्युपालब्धुमवतीर्णेन कुमुद-

॥ श्रीः ॥

श्रीमन्महाराजसंस्कृतमहापाठशालापत्रिका

# विषयसूचना

---

## सम्पादकीयसमितिः

---

१. श्रीमन्तः अर्थशास्त्रविशारदाः विद्यालङ्काराः महामहोपाध्याया डाक्टर् आर्. शामशास्त्रिणः, बि.ए., पिएच्.डि., एं.आर् ए.एस्., विश्रान्त मैसूरु प्राच्यकोशागाराध्यक्षाः शासन विमर्शशाखाध्यक्षाश्च

२. श्रीमन्तः प्रोफेसर् डि. श्रीनिवासाचार्याः, एं.ए., मैसूर महाराजाकालेज् संस्कृत प्रधानोपाध्यायाः

३. पण्डितरत्नं धर्माधिकारिणः ब्र. श्री. काशी शेषवेङ्कटाचल शास्त्रिणः

४. महामहोपाध्यायाः पण्डितरत्नं ब्र.श्री. लक्ष्मीपुरं श्रीनिवासा चार्याः, विश्रान्तमहापाठशालाविशिष्टाद्वैतवेदान्तप्रधानो पाध्यायाः

५. महाविद्वांसः ब्र. श्री. क. गोपालकृष्णशास्त्रिणः, महाराजा कालेज् संस्कृतपण्डिताः

६. महाविद्वांसः ब्र. श्री. करूरु शेषाचार्याः, महापाठशाल ज्यौतिषप्रधानोपाध्यायाः

७. विद्वांसः ब्र. श्री. एस्. वेङ्कटाचार्याः, महापाठशाला साहित्य प्रधानोपाध्यायाः

८. श्रीमन्तः एस्. बि. कृष्णमूर्तयः, एं.ए., महापाठशालाध्यक्षाः (सम्पादकाश्च)

## विज्ञप्तिः

भो भो महाशयाः ! सहृदयाः ! सप्रश्रयमिदमिदानीं विज्ञापयामः–संस्कृतविद्याभिमानिनः पुरुषप्रवराः यं कंचन विषयमधिकृत्य संस्कृतभाषामयं अनतिसंक्षिप्तविस्तरं उपक्रमोपसंहारपरिकर्मितं कस्याप्यनुद्वेगकरं अचर्चितपूर्वं कालदेशदशानुगुणं प्रपञ्चोपकारकरं धर्माद्यविरुद्धं "जीर्णमङ्गे सुभाषितम्" इति निर्वेदस्य "वीरा वाचैव केवलम्" इत्यपवादस्य वा प्रशामकरं प्रस्पष्टसुखविलासमुपन्यासं विलिख्य यदि प्रेषयेयुर्महान्तः, तेभ्यो महद्भ्यः समर्प्य अनन्तान् धन्यवादान् पत्रिकायामस्यां तमुपन्यासं पारयामः प्रकाशयितुम् ॥

यदीच्छति वशीकर्तुं जगदेकेन कर्मणा ।
परापवादसस्येभ्यो गाश्चरन्तीर्निवारयेत् ॥
न हीदृशं संवननं त्रिषु लोकेषु विद्यते ।
दया मैत्री च भूतेषु दानं च मधुरा च वाक् ॥

संपादकस्य

---

## मूल्यप्रकारः

१. अस्याः पत्रिकायाः वार्षिकम् अग्रिमं मूल्यं सार्धैकरूप्यकं प्रापणव्ययपृथक्कृतम्. (भारतमण्डले.)
२. विद्यार्थिनां पुनः एकरूप्यकम्. प्रापणव्ययपृथक्कृतम्.
३. विभिन्नदेशे सपादरूप्यद्वयम् (*3s.*) प्रापणभृतिः पृथक्

पत्रिकाप्राप्तिस्थानम्,

संपादकः,

श्रीमन्महाराजसंस्कृतमहापाठशाला, मैसूरु.

## सधन्यवादमस्माभिरङ्गीकृता एताः विनिमयरूपाः पत्रिकाः

1. संस्कृतसाहित्यपरिषत्पत्रिका, श्रीनगरम्.
2. संस्कृत साहित्यपरिषत्पत्रिका, कल्कत्ता.
3. उद्यानपत्रिका, तिरुवाडि.
4. सुप्रभातम्, काशी.
5. सूर्योदयः, काशी.
6. संस्कृतरत्नाकरः, जयपुरम्.
7. संस्कृतपद्यवाणी, कल्कत्ता.
8. मञ्जूषा, कल्कत्ता.
9. अच्युतः, काशी.
10. कल्याणम्, गोरखपुरम्.
11. मधुरवाणी, बेलगाम्.
12. देववाणी, कल्कत्ता.
13. The Mythic Society Journal, Bangalore.
14. Annals of the Bhandarkar Oriental Resea Institute, Poona.
15. Review of Philosophy and Religion, Poona.
16. Journal of Oriental Research, Madras.
17. The Law College Magazine, Madras.
18. Sunday Edition "The Hindu," Madras.
19. The Aryan Path, Bombay.
20. The Theosophical Movement, Bombay.
21. The Philosophical Quarterly, Calcutta.
22. Karnataka Historical Review, Dharwar.
23. Ardra, Ceylon.

24: "Yoga," Bulsar.
25. The Vaitarini, Chowdwar.
26. Poona Orientalist, Poona.
27. The Mimamsa Prakasa, Poona.
28. ಆಂಧ್ರ ಸಾಹಿತ್ಯಪರಿಷತ್ಪತ್ರಿಕಾ, ಕಾಕಿನಾಡ.
29. ಭಾರತೀ, ಮದ್ರಾಸು,
30. ಸನಾತನಮತಪ್ರಚಾರಿಣೀ, ಭಟ್ಟವಲ್ಲಿ.
31. ಜಯಕರ್ಣಾಟಕ, ಧಾರವಾಡ.
32. ಸದ್ಬೋಧಚಂದ್ರಿಕೆ, ಆನಂದವನ.
33. ವಿಶ್ವಕರ್ಣಾಟಕ, ಬೆಂಗಳೂರು.
34. ತಾಯಿನಾಡು, ಬೆಂಗಳೂರು.
35. ಅಧ್ಯಾತ್ಮಪ್ರಕಾಶ, ಬೆಂಗಳೂರು.
36. ರಂಗಭೂಮಿ, ಬೆಂಗಳೂರು.
37. ಕರ್ಣಾಟಕ ಸಾಹಿತ್ಯಪರಿಷತ್ಪತ್ರಿಕೆ, ಬೆಂಗಳೂರು.
38. ಕಾದಂಬರೀಸಂಗ್ರಹ, ಚಾಮರಾಜನಗರ.
39. ಪ್ರಬುದ್ಧಕರ್ಣಾಟಕ, ಮೈಸೂರು.
40. ವಿವೇಕಾಭ್ಯುದಯ, ಮೈಸೂರು.
41. ಪೂರ್ಣಬೋಧ, ಮೈಸೂರು.
42. ಸಾಧ್ವೀ, ಮೈಸೂರು.
43. ಗರಿಕೆ, ಮೈಸೂರು.

॥ श्रीः ॥

# श्रीमन्महाराजसंस्कृतमहापाठशालापत्रिका

प्रतिमासत्रयं प्रकटीक्रियमाणा

"कुर्वन्नेवेह कर्माणि जिजीविषेच्छतꣳ समाः"

(ईशोपनिषत्)

सम्पुटम् १२] अक्टोबर् १९३६ [सञ्चिका ३

## सुभाषितानि.

पततु नभसो गच्छत्वस्तं निमज्जतु वारिधौ
 व्रजतु वरुणागाराद्वारं प्रभाभिरनादृतः ।
तदपि तरणिर्दत्वा पादं शिरस्सु महीभृतां
 दलिततिमिरव्रातः प्रातः पुनः सकृदेष्यति ॥ १ ॥

क्षीणः क्षीणः समीपत्वं पूर्णः पूर्णोऽतिदूरताम् ।
उपैति मित्राद्यच्चन्द्रो युक्तं तन्मलिनात्मनः ॥ २ ॥

आश्रयः क्रियतामेष तरुः सन्मार्गमाश्रितः ।
पाथोद सिच्यतां काले नोपेक्ष्यो दूरभावतः ॥ ३ ॥

न वै ताडनात् तापनाद्वह्निमध्ये
 न वै विक्रयात् क्लिश्यमानोऽहमस्मि ।
सुवर्णस्य मे मुख्यमेतद्धि दुःखं
 यतो मां जना गुञ्जया तोलयन्ति ॥ ४ ॥

परिपीड्य करद्वयेन गाढं
 परपुंसा परिचुम्बिताननापि ।

मुरळी महनीयवंशजाता
मुहुराक्रन्दममन्दमातनोति ॥ ५ ॥

को हि तुलामधिरोहति शुचिना
दुग्धेन सहजमधुरेण ।
तप्तं विकृतं मथितं
तथापि यत्स्नेह उद्गिरति ॥ ६ ॥

णकार! गर्वं जहि वर्णवर्गे
मूर्धन्यमूर्धन्यपदं ममेति ।
नेत्याह कस्तत् स्वसहानुभूति-
रन्त्याऽर्णकेळौ किमु दूषणं ते ॥ ७ ॥

णवर्ण! मा दृप्य! लिपिक्रमे स्वं
मूर्धन्यमूर्धस्थमवेत्य भद्र ।
त्वां वर्णवर्गा न तथा विदन्ति
नो चेत्कुतः पञ्चदशोऽसि वर्गे ॥ ८ ॥

णकार! ते भूषणधारणक्रमं
विलक्षणं वीक्ष्य वयं हि विस्मिताः ।
दधाति लोकः किल कुण्डलद्वयं
धत्से त्वमेकः खलु कुण्डलत्रयम् ॥ ९ ॥

णकार! मूर्धन्यतमस्य मास्तु
तेऽन्त्याक्षरीकेळिरसस्य भङ्गः ।
प्रदीपभङ्गोऽपि शुभप्रसङ्गे
सह्यो न वर्णक्रमकेळिभङ्गः ॥ १० ॥

॥ श्रीमहागणपतयेनमः ॥

# ताम्बूलमीमांसा

विद्यां वाणीं प्रणम्यानवद्यां शिष्येण शंकृता ।
हृद्या ताम्बूलमीमांसाऽस्वाद्या हि क्रियते सताम् ॥

अस्मिन् भारतभूमण्डले ताम्बूलचर्वणपद्धतिर्निरूढा सनातनी वर्तते । एषा सदाचारवतां भूषा कथमासीदिति जिज्ञासा । बहवः पाश्चात्य-हूणजनानुयायिनः भारतवर्षीया अपि इदानीं 'किमेते मूर्खाः तिर्यग्ज-न्तव इव क्रमुकफलानि नागवल्लीदळानि च चूर्णं च चूर्णयन्ति तृणादि-वत् मुखविकारचेष्टाभिः; रुधिरवमनं कुर्वन्त इव रसाभासका रमन्ते' इति निन्दन्ति किल! वैदिकास्तु 'सनातनधर्मोऽयं भारतभूमेः ताम्बूल-प्रदानादिसत्कारः, आयुर्वेद्यविज्ञैश्चाभिनन्दितश्चिरकालादागतः, प्राचीनैः प्राज्ञैरनुष्ठितश्च' इत्येतावन्मात्रमुक्त्वा तन्निन्दनासहिष्णवः परिहसन्ति, अट्टहासं कुर्वन्ति च तत्त्वविचारेण दृढतरमूलं नोद्घाटयन्ति ज्ञात्वा वा ज्ञात्वा वा तन्मास्तु । तादृशखण्डनमण्डनकाराणां कलहकोलाहलनिवृत्तिः कथं भवतीति जिज्ञासामूलं कन्दुकमिव चित्तवृत्तिरङ्गे मम नर्तति । कपिनर्तनवत् व्यर्थं माभूत् गुणग्राहिणां गूढतत्त्वविचारपराणां आपरि-तोषादनुग्रहाच्च ॥ तथा हि—

आदौ पुरातनकाले पुराणपुरुषाणां महर्षीणां मध्ये दयारसार्चा चर्चा समजायत—'वर्णाश्रमधर्मरक्षणे सर्वेषामपि परस्परानुरागवृद्धिः कथमुपजायते? दैविकलौकिकशक्तिसमेतः खल्वयं सदाचारः? एत-

दर्थं रमणीयसरणिः का वा कल्पनीया?' इति । तदा किल बद्धादरं श्रद्धावाद्भिः स्पर्धावतां समाजे निर्धारितं निगमरहस्यविद्भिस्सद्भिस्सर्वज्ञैः ॥

'अचिन्त्यापरिमितशक्तेः परब्रह्मणः शासनादेव त्रिगुणावलम्बिनः त्रिमूर्तयः सृष्टिस्थितिसंहारकार्येषु जागरूकाः लोकरक्षणे नित्यकारुणिकास्सन्ति हि । तेषां गुणस्वरूपद्योतकानि भूमौ सृष्टानि बहूनि वस्तूनि प्रदृश्यन्ते च । जीवस्याधारभूतो देहश्च वातपित्तश्लेष्मात्मको दृश्यते । इदानीं देहद्वयानुरागवृद्धिर्लक्ष्या किल । वातात्मको ब्रह्मा स्रष्टा, तद्वातोल्बणकराणि नागवल्लीदळानि; पित्तात्मको रुद्रश्च हर्ता, तत्पित्तोल्बणकरं सुधाचूर्णं; श्लेष्मात्मको विष्णुर्भर्ता, तच्छ्लेष्मोल्बणकराणि क्रमुकफलानि च; इत्थं त्रिमूर्तिसाक्ष्यमाश्रित्य युष्मदस्मद्देहयोः परस्परप्रीतिर्वर्धतामिति क्रमुकनागवल्लीचूर्णात्मकं ताम्बूलं प्रदानादानाभ्यां सर्वेसु कर्मसु हव्यकव्येषु निरूढाचारस्थाने स्थापनीयम् । तत्ताम्बूलचर्वणेन रागोऽपि जायते । मुखविकासरक्तिमा च भवति । सुलभोपायेन लभ्यतेऽनुरक्तिः परस्परम् । वातपित्तश्लेष्मोल्बणे धातुसाम्येन देहस्य समाधानस्थितिरपि । न्यूनाधिकनानाहारस्वीकारजाताजीर्णदोषं च शमयति । इदमेवसाधु' इति ॥

तदादि त्रिभुवनेषु चलतीयं ताम्बूलप्रक्रिया सहेतुकेति पुराणगाथाभिः दरीदृश्यते । भारतभूमिषु चिरकालादागतं सुरुचिरं ताम्बूलव्यवहारं सुस्पष्टतरं परिपश्यामो वयम् । इदं निर्विवादं लांछनं वांछितार्थस्य । वैदिकेषु श्राद्धादिकव्येषु च, क्रतुहोमशान्त्यादिकहव्येषु च लौकिकेषु सर्वेषूत्सवेषु च, स्मार्तेषु कर्मसु च स्वयमनुसृत्य तन्निष्ठया वरिष्ठया तिष्ठामः । परैर्विमुखैरप्याचरिष्यामः । यत्र कुत्र वा गत्वा तत्रत्यैस्सत्कारावसरे प्रीत्या स्वीकरिष्यामः । नो चेत् 'द्वित्रि-

क्रमुकफलानि चतुःपञ्च नागवल्लीदळानि शून्यानि, चूर्णं चूर्णमासीत्, किं वा कर्म! न मे शर्म!' इति कुप्यन्तो दूषयामः। एतत्ताम्बूलपद्धतिः भारतभूमिषु भासते सर्वत्र—राजसभासु विद्वत्समाजेषु वैदिकपरिषत्सु लौकिकसङ्घेषु च समुपजनिताडम्बरताण्डवं करोति ताम्बूलम्। विदित-विषयोऽयं सर्वेषु विषयेषु चागोपालकमहाराजपर्यन्तम्। अस्मिन् विषये किं वा निन्दनमतत्त्वविदाम्?

आयुर्वेदविज्ञानवद्भिः रसरत्नाकरादिवैद्यग्रन्थेषु ताम्बूलसेवनं समभिवर्णितम्। तथा हि—

"ताम्बूलमुक्तं शीतोष्णं रोचनं तुवरं रसम्।
तिक्तं क्षारोषणं कामरक्तपित्तकरं लघु॥
वश्यं श्लेष्मास्यदौर्गन्ध्यमलवातश्रमापहम्।
मुखवैशद्यसौगन्ध्यकान्तिसौष्ठवकारकम्॥
हनुदन्तमलध्वंसि जिह्वेन्द्रियविशोधनम्।
मुखप्रसेकशमनं गळामयविनाशनम्" ॥ इति—

"नवं तदेव मधुरं कषायानुरसं गुरु।
बलासजननं प्रायः पत्रशाकगुणं स्मृतम्॥
वङ्गदेशोद्भवं पर्णं परं कटुरसं सरम्।
पाचनं पित्तजनकमुष्णं कफहरं मतम्॥ इति च—
पर्णं पुराणमकटु क्षुल्लकं तनुपाण्डुरम्।
विशेषाद्गुणवद्वेद्यमन्यद्धीनगुणं मतम्॥
पूगं गुरु हिमं रूक्षं कषायं कफपित्तनुत्।
मोहनं दीपनं रुच्यमास्यवैरस्यनाशनम्॥
पूगं स्याद्दृढमध्यं यद्भिन्नं चापि त्रिदोषनुत्।
सरसं गुर्वभिष्यन्दि तद्भृशं वह्निनाशनम्॥

खदिरः कफपित्तघ्नश्चूर्णं वातबलासनुत् ।
संयोगतस्त्रिदोषघ्नं सौमनस्यं करोति च ॥" इत्यपि—
"पूगाधिकं प्रभाते स्यात् मध्याह्ने खादिराधिकम् ।
चूर्णाधिकं निशायां तु ताम्बूलं भक्षयेत्सदा ॥
आयुरग्रे यशो मूले लक्ष्मीर्मध्ये व्यवस्थिता ।
तस्मादग्रं तथा मूलं मध्यं पर्णस्य वर्जयेत् ॥
पर्णमूले भवेद्व्याधिः पर्णाग्रे पापसम्भवः ।
चूर्णपत्रं हरत्यायुः सिराबुद्धिविनाशिनी ॥" इत्यादीनि ।

प्राचीनमहाकविभिः पुरस्कृतं ताम्बूलवर्णनं यथा—
"ताम्बूलं मुखरोगनाशिनिपुणं संवर्धनं तेजसो
नित्यं जाठरवह्निवृद्धिजननं दुर्गन्धदोषापहम् ।
वक्त्रालङ्करणं प्रहर्षजननं विद्वन्नृपाग्रे रणे ।
कामस्यायतनं समुद्भवकरं लक्ष्म्याः सुखस्यास्पदम् ॥
तम्बूलेन विना राजन् जडीभूता सरस्वती ।
न निस्सरेन्मुखाद्वाणी गृहात्कुलवधूरिव ॥
ताम्बूलरागोधरलोलुपो य-
यदञ्जनं लोचनचुम्बनोत्सुखम् ।
हारश्च कण्ठग्रहलालसो य-
स्त्वार्थः स तेषां न तु भूषणं ते ॥" इत्यादि ।

जगदाचार्यैरप्यादृता ताम्बूलसेवा पूजावसरेषु—
"मौक्तिकचूर्णसमेतैः मृगमदघनसारवासितैः पूगैः ।
पर्णैःस्वर्णसमानैः मृत्युञ्जय तेऽर्पयामि ताम्बूलम् ॥"
"ताम्बूलं विनिवेदयामि विलसत्कर्पूरकस्तूरिका
जातीपूगलवङ्गचूर्णखदिरैः भक्त्या समुल्लासितम्" ॥ इत्यादयः

एवमेव बह्वयस्सन्ति ताम्बूलविषयिण्यस्सूक्तयः । अलमेताव-देवदिक्प्रदर्शनम् । फलितार्थस्तु—एवमेवविदितशास्त्रवद्भिः विपश्चिद्भिः मन्तव्यं शांतचित्तवृत्तिभिः । 'कलिवशतः तत्तत्प्रारब्धकर्मवशतश्च इदानीं नवनागरिकैः भारतवर्षवासिभिः अस्मासु विद्यमानसनातनसदाचारपराः दूरीक्रियन्ते दूष्यन्ते च । सकारणनिरूपणसमाधानानि परिकल्प्य स्थाप-नीयास्ते हेतुवादपराः स्वस्वाचारेषु स्वानुष्ठानशक्त्यास्माभिः' इति ॥

पुण्ड्रशिखायज्ञोपवीतधारणमेव हि द्विजानां सर्वत्र लक्षणम् । इदानीं तु द्विजानां मध्ये स्वेच्छाचारपरा बहवस्समभिवृद्धिं गताः शून्य-ललाटाः कृत्तशिखिनः वस्त्राच्छादनेन संशयास्पदयज्ञोपवीतधारिणः संति दृष्टचराः । तेषां नियन्ता न राजा न गुरुः न बन्धुः न पिता न माता का वा गतिः? दन्तानामिव पतनमेव शरणं द्विजत्वात् । ततस्सनातन-धर्मपरा विद्वांसः स्वानुष्ठानस्वमतप्राशस्त्याहंभावं परित्यज्य सकारण-साधुबोधनैः भ्रष्टमार्गावलम्बिनां भारतीयानां समुद्धरणे प्रयत्नं कुर्व-न्त्विति प्रार्थना ॥

एतादृशप्रार्थनाकर्ताहं प्रार्थनाश्रोतारश्च श्रोत्रिया विद्वांसश्च किं कुर्मः? प्रसिद्धतरायाः इह परगतिसाधक्याः पूर्वोत्तरमीमांसायाः विचारमननेन स्वात्मनस्समुद्धरणं स्वस्वकर्मानुष्ठानादिकं च विस्मृत्य एतादृशोपनयनमीमांसा ग्रहणमीमांसा पुण्ड्रमीमांसा तांबूलमीमांसादि-रचनचतुरा वर्तामहे । किमेतेन स्वपाण्डित्याडम्बरेण वृथाकालविडम्ब नेन? अस्मद्गोत्रमूलपुरुषाणां महर्षीणां स्मरणेन तदीयपादपरागलेश-साम्यमप्यस्मादृशेषु नैव किल? ततः 'वयं सर्वेपि तपश्शक्तिं संपा-द्यैव धन्या भवाम' इति निश्चितवंतो निरहंभावास्तदनुकूलसामग्री-सम्पादने भगीरथपूर्वजा इव यतमानाः सनातनधर्मपरिपालकं धर्मात्मानं भगवन्तं प्रार्थयन्तः निजनिजकुलक्रमागतवैदिकधर्मान् परिरक्षन्तः

जीविनो भवामः । सदनुष्ठानपरत्वं सर्वसाधकं । मया दोषराशिनाल्प-धिया कालिककष्टासहमानेन सूचिताः विषयाः मास्त्वरुंतुदाः मान्य-धनानां महाविदुषां परमाणुसदृशाः परिलसन्तु ॥

'मनसि वचसि काये पुण्यपीयूषपूर्णाः
त्रिभुवनमुपकारश्रेणिभिः पूरयन्तः ।
परगुणपरमाणून् पर्वतीकृत्य नित्यं
निजहृदि विकसन्तः सन्ति सन्तः कियन्तः' ॥

इति श्रीहरिकविसूक्तिरिव क्षमावन्तः सन्तः सच्चरणशरणं मामनुगृह्णन्तु । तेभ्यः सद्भ्यो महद्भ्यो नमः । शम्भूयात् ॥

श्रीकुमारस्वामिशैले तद्भक्ताशिवशङ्करः ।
एवं ताम्बूलमीमांसामतनोत्साधुतुष्टये ॥

महामहोपाध्याय सिद्धान्ति शिवशङ्करशास्त्री,
श्रीमन्महीशूरसंस्थानास्थानमहाविद्वान्.

॥ श्रीमते हयग्रीवायनमः ॥

# साहित्यतत्त्वम्.

---

इतरेतरयोगोज्ज्वलमुभयपदार्थप्रधानतामधुरम् ।
भगवद्रूपं द्वन्द्वं भजामहेऽनन्तगिरिकृ[1]तोत्कर्षम् ॥

## साहित्यस्य व्युत्पत्तिः तस्य शास्त्रत्वञ्च.

गुणवचनब्राह्मणादिभ्यः कर्मणि चेति सूत्रेण सहितशब्दात् ष्यञ्प्रत्यये सहितानां भाव इति सहितस्य कर्म इति वा व्युत्पत्तिभेदेन निष्पन्नः साहित्यशब्दः,

अङ्गानि वेदाश्चत्वारो मीमांसा न्यायविस्तरः ।
पुराणं धर्मशास्त्रं च विद्याह्येताश्चतुर्दश ॥

इत्यत्र पठितानां चतुर्दशानां विद्यानाम्, आयुर्वेद, धनुर्वेद, गन्धर्ववेद, शस्त्रतन्त्रात्मिकानां चतसृणामुपविद्यानां च सम्मेलनात्मकं शास्त्रमिति, एतादृशाऽष्टादशविद्याविशिष्टकवेः कर्मरूपं काव्यादिकमिति वा अर्थं बोधयति । प्रवृत्तिनिवृत्त्यात्मकप्रवर्तनारूपशासनप्रधानेभ्यः शब्दप्रधानेभ्यः प्रभुसम्मितवेदशास्त्रेभ्यः, इष्टानिष्टबोधनमात्रपरेभ्यः अर्थप्रधानेभ्यः सुहृत्सम्मितेभ्यः पुराणेतिहासेभ्यश्च, शब्दार्थयोरप्रधानेन शृङ्गारादिरसोपायभूतव्यञ्जनाव्यापारतत्परतया विलक्षणेन साहित्येनापि कान्तासम्मितेन (सम्मितं-तुल्यम्) रामादिवद्वर्तितव्यम्, न रावणादिवदिति हितकर्तव्यत्वाहिताकर्तव्यत्वयोरुपदेशस्य क्रियमाणत्वात्साहित्यस्यापि शासकत्वरूपधर्मावच्छिन्नत्वाच्छास्त्रपदेन व्यवहारः सुकरः ।

---

[1]अनन्तगिरिकृतोत्कर्षम्–शेषाचल लब्धोत्कर्षम्; अनन्तगिरि–फणिपतिफणितौ भगवतो वासुदेवस्य गिरि गीतारूपायां वाचिवेत्यप्यर्थः.

कान्ता यथा प्रियं गुरुमित्राद्यधीनमपि इतरजनवैलक्षण्येन कटाक्षभुजविक्षेपादिना सरसतापादनेन स्वाभिमुखं कृत्वा स्वस्मिन् प्रवर्तयति तथा साहित्यमपि सुकुमारमतीन् सुखिस्वभावान् नीतिशास्त्रविमुखान् राजकुमारादीनपि ललितपदकदम्बकोपदर्शितशृङ्गारादिरसेन मधुरपानादिना कटुकषायौषधपराङ्मुखान् बालकानिव सदुपदेशरूपस्वार्थे प्रवर्तयति ॥

यदुक्तम्—

स्वादुकाव्यरसोन्मिश्रं वाक्यार्थमुपभुञ्जते ।
प्रथमालीढमधवः पिबन्ति कटुभेषजम् ॥ इति ।

यद्यपि व्याकरणादीनामिवास्य ऋषिप्रणीतसूत्रमूलकत्वाभावाच्छास्त्रपदव्यवहार्यत्वमसाम्प्रतमिति प्रतिभाति तथाप्यस्य आर्षसूत्रमूलकनिखिलशास्त्राङ्गकत्वादनिर्वचनीयमाहात्म्यगाम्भीर्यशालित्वाच्च शास्त्रत्वेन व्यवहारे न कोपि दोषलेशस्यावकाशः । अस्य माहात्म्यगाम्भीर्ये च तत्र तत्र कविभिः प्रतिपादिते ॥

यथा—

न स शब्दो न तद्वाच्यं न स न्यायो न सा कला ।
जायते यन्न काव्याङ्गमहो भारो महान् कवेः ॥

स्वस्वाभिलाषादिव यत्र सर्वे
विद्याविलासा मिलिता लुठन्ति ।
तल्लोकवैदग्ध्यविधानयन्त्रं
साहित्यतन्त्रं कलयन्ति कल्याः ॥

देवीं वाचमुपासते हि बहवः सारं तु सारस्वतं
जानीते नितरामसौ गुरुकुलक्लिष्टो मुरारिः कविः ।
अब्धिर्लङ्घित एव वानरभटैः किं त्वस्य गम्भीरता
मापाताल निमग्न पीवरतनुर्जानाति मन्थाचलः ॥ इत्यादि ।

## साहित्यस्य उत्पत्तिः.

विदितमेवैतत्सर्वेषामिह जगति यन्नराः वानराः पशुपक्ष्यादयश्च प्रायेण आहारविहारादिषु सर्वत्र सङ्घीभूयैव प्रवर्तन्ते न तु प्रत्येकं जीवितुं शक्नुवन्तीति । इत्थं सङ्घजीविनो मानवाः परस्परं स्वाशयबोधनार्थं यत्किञ्चित्समानानुपूर्वीविशेषविशिष्टान् तत्तदाशयबोधनकुशलान् स्वानुकूलान् ध्वनिविशेषान् कल्पयित्वा तान् शब्द्यते बोध्यतेऽर्थोऽनेनेति व्युत्पादितशब्दपदेन व्यपदिदिशुः । तत्तच्छब्देन तत्तदर्थानामेव सर्वत्र बोधसंभवार्थं प्राचीनैः शब्दार्थयोर्नियतं संबन्धमभ्युपेत्य अनेकेषामेतादृशानां शब्दानां योजनेन वाक्यं तादृशवाक्यजालेन प्रबन्धविशेषाश्च सम्पत्स्यन्त इति व्यवस्था अङ्गीकृता सर्वत्र जागर्ति । प्रज्ञाविशेषशालिनो धीरधिषणाः विवेकविभूषिताश्च मानवाः स्वप्रयुज्यमानेषु शब्देषु सुबन्ततिङन्तसमस्ताद्यवान्तरभेदं पदानां परस्परमैत्रीं वाक्येषु पदविन्यासवैचित्र्यं च परिकल्प्य तत्तद्वाक्येषु माधुर्यगाम्भीर्यादिद्योतनार्थं वाक्यरचनाचातुरीं यं कञ्चन नियममनुसृत्य पदविन्यासक्रमविशेषं च ऊरीकृत्य गद्यग्रन्थान् पद्यग्रन्थांश्च क्रमेण रचयितुं प्रावर्तन्त ॥

## तस्य परिपुष्टिः.

एवमभीप्सितार्थबोधनतात्पर्येण नानाविधपदसम्मेलनरूपे साहित्ये प्रवर्धमाने ग्रन्थनिर्माणनिपुणाः प्रथमतः शब्दशास्त्रसंस्कृतं ततो गुणालङ्कारादिविभूषितं, ततश्च रसभरितं काव्यं क्रमेण रचयितुमारभन्त । शब्दार्थसमुदायात्मककाव्ये क्रमशः सोपानारोहणन्यायेन शब्दसंस्कारगुणालङ्काररसानां तत्तत्कालिकैः कविभिः संयोजने अभीप्सितेऽपि आधुनिकैः रसस्यैव प्राधान्येन प्रवेशनात्प्रायशः सर्वेऽपि कवय इदानीं रसभरितमेव काव्यं स्तुवन्ति कुर्वन्ति च । एवंरीत्या

साहित्यं क्रमशः परिपुष्टं सत्सर्वत्र विराजते । अत एव प्राचीनपण्डितप्रकाण्डैरुक्तम् । "काव्यस्य शब्दार्थौ शरीरम्, रसश्चात्मा, गुणाः शौर्यादिवत्, दोषाः काणत्वादिवत्, रीतयोऽवयवसंस्थानविशेषवत्, अलङ्काराः कटककुण्डलादिवत् ' इति । एतेन निर्दुष्टरीतिगुणालङ्काररसपरिपूर्णशब्दार्थसमुदाय एवोत्तमं काव्यम्, उत्तमं साहित्यमिति च सर्वैरभ्युपगतं भवति ॥

## साहित्यसंग्राह्याः.

शब्दानां पर्यायपरिवृत्त्यसहत्वेन शब्दप्रधानकानां वेदानां प्राधान्येन रसप्रतिपादनोद्देश्यकत्वाभावेन अपौरुषेयत्वेन च न साहित्यसंग्राह्यता । एवमेव शब्दमात्रप्रधानकव्याकरणादिशास्त्राणाम्, अर्थमात्रप्रधानकपुराणादीनां च । परं तु रामायणमहाभारतप्रबन्धौ तु प्राधान्येन बहुषु स्थलेषु रसप्रतिपादनोद्देश्येनापि प्रवृत्ताविति तत्रान्तर्भवत एव । किं बहुना । 'अङ्गानि वेदा' इत्यष्टादशाङ्गकत्वेन साहित्यस्याङ्गिनः तदतिरिक्तानामेवान्तर्भाव उचितः । कुवलयानन्दकाव्यप्रकाशाद्यलङ्कारलक्षणग्रन्थानां तु उदाहरणद्वारा रसभरितकाव्यभूयिष्ठत्वेन, अष्टादशविद्यातिरिक्तत्वेन, साहित्योपकारकत्वेन च तदन्तर्भाव आवश्यक इति प्रायशः काव्यालङ्कारलक्षणग्रन्था एव संग्राह्याः ॥

## तत्स्थिरीकरणम्.

तत्र तावद्भगवान् महाभाष्यकारः व्याकरणस्य किं प्रयोजनमित्याशङ्क्य 'रक्षोहागमलघ्वसन्देहाः प्रयोजनम्' 'रक्षार्थं वेदानामध्येयं व्याकरणम्' इत्यादिना व्याकरणशास्त्रस्य प्राधान्येन वेदोपकारकत्वमेवोपपाद्य मुखरूपवेदाङ्गत्वमस्य व्यवास्थापयत् । एवमेव सकलान्यपि शास्त्राणि प्रायशो वेदानुपकुर्वन्तीति निर्विवादम् । तथाचापौरुषे-

याणामनादीनां च वेदानां सर्वतः प्राधान्ये सर्वैरभ्युपगते सति यथा लोकास्सर्वेऽपि प्रायशः स्वस्वप्राशस्त्यसंपादनार्थं तत्तद्विषयेषु परिनिष्ठितान् प्रख्यातान् मूलपुरुषानेवानुकुर्वन्ति, तथा साहित्यप्रवर्तका अपि प्राचीनाः कवयः वेदोक्तार्थांस्तत्र तत्र आधारतया स्वीकृत्य तत्र दृष्टान्येव गायत्र्यादिच्छन्दांसि अत्रापि सलक्षणान्युररीकृत्य काव्यानामुक्तात्युक्तादिच्छन्दोबद्धानामेव श्रैष्ठ्यमापादयन् । इत्थं साहित्यशास्त्रं व्याकरणादिनियमैः छन्दोरूपबन्धविशेषैः श्लेषादिगुणैः अनुप्रासोपमाद्यलङ्कारैः शृङ्गारादिरसैश्च तत्र तत्र दृढसंबद्धं सत् प्राप्तदिग्बन्धना स्थिरा उपकार्येव प्रभञ्जनविरहितं समुज्जृम्भते ॥

### तस्याङ्गिशास्त्रत्वप्रतिपादनम्.

साहितीकृतिनः स्वकीयवर्णनायां यथा लौकिकाननेकान् विषयान् मूलाधारत्वेन परिगृह्य प्रबन्धान् विरचयन्ति, तथैव वेदेभ्योऽपि दृश्यश्रव्यादिप्रबन्धेषु प्रतिपिपादयिषितानां विवेकादिसन्मार्गबोधकानामितरेषां च विषयाणां स्वीकाराद्वेदानपि तस्या मूलकारणतया अभ्युपयन्तीति निर्विवादम् । अत एव माघाद्युद्दामपण्डिताः श्रुतिबोधितानेव बहून् विषयान्,

शिशुपालवधे प्रत्यूषवर्णनप्रस्तावे—

> प्रतिशरणमशीर्णज्योतिरग्न्याहितानां
> विधिविहितविरिब्धैः सामिधेनीरधीत्य ।
> कृतगुरुदुरितौघध्वंसमध्वर्युवर्यै-
> र्हुतमयमुपलीढे साधु सान्नाय्यमग्निः ॥ (११–४१)

तत्रैव क्रतुवर्णनावसरे—

> तस्य सांख्यपुरुषेण तुल्यतां
> बिभ्रतः स्वयमकुर्वतः क्रियाः ।

कर्तृता तदुपलम्भतोऽभव-
द्वृत्तिभाजि करणे यथर्त्विजि ॥ (१४–१९)

शब्दितामनपशब्दमुच्चकै-
र्वाक्यलक्षणविदोऽनुवाक्यया ।
याज्यया यजनकर्मिणोऽत्यज-
न्द्रव्यजातमपदिश्य देवताम् ॥ (१४–२०)

सप्तभेदकरकल्पितस्वरं
साम सामविदसङ्गमुज्जगौ ।
तत्र सूनृतगिरश्च सूरयः
पुण्यमृग्यजुषमध्यगीयत ॥ (१४–२१)

तथा नैषधमहाकाव्ये—

अवामा वामार्धे सकलमुभयाकारघटना-
द्विधाभूतं रूपं भगवदभिधेयं भवति यत् ।
तदन्तर्मन्त्रं मे स्मरहरमयं सेन्दुममलं
निराकारं शश्वज्जप नरपते सिध्यतु स ते ॥ (१४–८८)

तथा वेदान्तसूरिविरचितायां भूस्तुतौ—

अस्येशाना जगत इति या श्रूयते विष्णुपत्नी
तस्याः स्तोत्रं विरचितमिदं वेङ्कटेशेन भक्त्या ।
श्रद्धाभक्तिप्रचयगुरुणा चेतसा संस्तुवानो
यद्यत्कामं सपदि लभते तत्र तत्र प्रतिष्ठाम् ॥

तथा वरदराजस्तवे—

आश्रित्य नूनममृतद्युतयः पदं ते
देहक्षयोपनतदिव्यपदाभिमुख्याः ।

लावण्यपुण्यनिचये सुहृदि त्वदास्ये
विन्यस्य यान्ति मिहिरं प्रतिमासभिन्नाः ॥

इत्येवमादिषु स्वस्वग्रन्थेषु समगृह्णन् । किंबहुना । नाट्यशास्त्रस्योपयुक्ता अपि बहवो विषया वेदेभ्य एव संगृहीताः । तथाचोक्तं भरतमुनिना—

जग्राह पाठ्यमृग्वेदात्सामभ्यो गीतमेव च ।
यजुर्वेदादभिनयान् रसानाथर्वणादपि ॥

इति । अतो वेदास्साहित्यस्योपकारकाः ॥

शब्दार्थयोः शब्दस्य रसात्मकवाक्यस्य वा काव्यत्ववादिभिस्सर्वैरपि शब्दस्य काव्यप्रधानशरीरत्वाभ्युपगमात् निर्दुष्टानां विवक्षितार्थप्रतिपादनशक्तानां सर्वेषामपि शब्दानां व्युत्पादनं व्याक्रियन्ते शब्दा व्युत्पाद्यन्ते अनेनेति व्युत्पत्तिविशिष्टव्याकरणशास्त्रमन्तरा न संभवति । व्याकरणविरुद्धस्यैकस्यापि वा पदस्य काव्यवृत्तित्वे तादृशकाव्यस्य गुणालङ्कारभूयिष्ठत्वेऽपि सर्वाङ्गसुन्दर्यास्तरुण्या एकदेशस्थश्वित्रेण दूष्यत्ववत् सकलकलापरिपूर्णस्यापि चन्द्रमस एकेन कलङ्केन कलङ्कित्ववच्च "स्याद्वपुस्सुन्दरमपि श्वित्रेणैकेन दुर्भगम्" इतिरीत्या दुर्ग्राह्यत्वं प्रसज्येतेति निर्दुष्टस्य प्रशंसनीयस्य च साहित्यस्योत्थितौ व्याकरणं मूलकारणमिति तदपि साहित्याङ्गम् ॥

वर्णसंघटनाप्रयोज्यश्लेषप्रसादादिगुणगणानां वैदर्भ्यादिरीतीनां च संदर्भानुगुण्येन काव्येष्वप्रवेशने विवक्षितरसप्रतीतिर्न भवेत् प्रत्युत क्वचित् रसप्रतीतिनिरोधश्च भवेदिति तत्र तत्रालङ्कारिकैरुद्घोषणात् शकारसकारादिविषये उच्चारणवैगुण्ये शकृत्सकृदादि पदेष्वपार्थप्रतीत्यापत्तेश्च शिक्षा वर्णोत्पत्तिस्थानबोधनद्वारा तस्य साहायक मातनोति । अतएव वैदर्भ्यादिरीति समाक्रान्तशरीरं काव्यं प्रस्तौति बिल्हणः—

अनङ्गवृष्टिः श्रवणामृतस्य
सरस्वतीविभ्रमजन्मभूमिः ।
वैदर्भरीतिः कृतिना मुदेति
सौभाग्यलाभप्रतिभूः पदानाम् ॥

जयन्ति ते पञ्चमनादमित्र-
चित्रोक्तिसन्दर्भविभूषणेषु ।
सरस्वती यद्वदनेषु नित्य-
माभाति वीणामिव वादयन्ती ॥ इति ।

एवमेवेतराण्यङ्गानि उपाङ्गानि च यथायोग्यमुपकुर्वन्तीत्येवं सर्वाङ्गोपाङ्गोपेतस्य सरसस्य गुणालङ्कारालङ्कृतस्य च साहित्यस्य अङ्गि-(प्रधान) शास्त्रत्वमपि संपत्स्यते ॥

## साहित्यव्याकरणयोर्मैत्री.

तत्र तावन्महाकविशिरोमणिः कालिदासः रघुवंशाख्यं प्रबन्धमारिरचयिषुः काव्यशरीरभूतयोः शब्दार्थयोः शब्दस्यैव प्राधान्यं तयोः सम्बन्धस्य नैयत्यं च ॥

वागर्थाविव संपृक्तौ वागर्थप्रतिपत्तये ।
जगतः पितरौ वन्दे पार्वतीपरमेश्वरौ ॥

इति मङ्गलपद्ये प्रदर्शितवान् । तत्रैव 'वागर्थप्रतिपत्तये' इत्युक्त्या समुचितार्थबोधकशब्दस्य शब्दबोध्यस्यानुरूपस्यार्थस्य च परिज्ञानं ग्रन्थरचनायामत्यावश्यकं यच्च व्याकरणशास्त्राध्ययनैकगम्यमिति प्रतिपादयति च । शब्दार्थयोश्च संबन्धः 'शक्त्याख्योऽर्थस्य शब्दगतः शब्दस्यार्थगतो वा संबन्धविशेषोऽभिधा' इति रसगङ्गाधरसूत्रपर्यालोचनया शक्तिरूप इत्यवगम्यते । शक्यविषयस्याप्यर्थस्य शाब्दबोधविषयत्वे

इति आरभ्यते । एवञ्चेत् स्वाध्यायरतिः परमो धर्मः स्फुटितः । कथम्? यत्कारणं स्वाध्यायनिरतत्वात् वाग्विदां वरता, तदनु तद्धेतुकी मुनिपुङ्गवतेति चाह ॥

नन्वत्रैवर्णिकोऽपि कुतुकात् स्वाध्याये नितरां रमेत तत्किं तस्यापि तद्धेतुकी वाग्विदां वरता मुनिपुङ्गवता चाभिमता? नेति ब्रूमः । यत्कारणं न शुद्धमिह स्वाध्यायनिरतत्वं गृह्णाति, अपि तर्हि तपस्सहितं । कम्पुनरर्थमभिधत्ते तप इति शब्दः? तदाह भगवानापस्तम्बः 'नियमेषु तपश्शब्द' इति । ये ये हि अनध्यायादिधर्माः ये चानुष्ठेयाः ब्राह्ममुहूर्तोत्थानेश्वरचिन्ताशरीरशोधनस्नानादयः येचापि गुरुशुश्रूषाभिक्षाटनादयः तत्तदृषिप्रदिष्टाः नियमाः ते सर्व इह तपःशब्दवाच्याः । तत्साकल्यानुष्ठानादृषिर्भवति । स च सर्वं कर्तुमर्हति । यथाह भगवान् आपस्तम्बः 'ईदृशस्स्वाध्यायशीलः यच्चक्षुषा पश्यति वाचा वदति हस्तेन स्पृशति मनसा वा ध्यायति, तत्तदिष्टं सिध्यति' इति वैपरीत्ये चानृषितामाह–'तस्मादृषयोऽवरेषु न जायन्ते नियमातिक्रमात्' इति ॥

नन्वत्रैवर्णिको नितान्तं रमेत स्वाध्याये नियमांश्चानुरुन्धीत, कुतोऽस्मै क्रुध्यसि? यत एनं च्यावयसि अधिकारितायाः । नास्मै क्रुध्यामः, यत्कारणं त्रैवर्णिकाधिकारिकमेवाध्ययनं वेदानां विदधात्याम्नायः 'वसन्ते ब्राह्मणमुपनयीत' 'तमध्यापयीत' इत्येवमादिः (सोधीयीत इति यावदुक्तं भवति तावदुक्तं भवति मध्यापयीतेति इति मीमांसकमर्यादा) यत्कारणञ्च—

तपोविशेषैर्विविधैर्व्रतैश्च श्रुतिचोदितैः ।
वेदः कृत्स्नोऽधिगन्तव्यः सरहस्यो द्विजन्मना ॥

इति तदर्थानेव नियमान् स्मरन्ति स्मर्तारः । नातः क्रोधनिबन्धनैषा च्यावनेति ॥

अनभ्रवृष्टिः श्रवणामृतस्य
सरस्वतीविभ्रमजन्मभूमिः ।
वैदर्भरीतिः कृतिना मुदेति
सौभाग्यलाभप्रतिभूः पदानाम् ॥

जयन्ति ते पञ्चमनादमित्र-
चित्रोक्तिसन्दर्भविभूषणेषु ।
सरस्वती यद्वदनेषु नित्य-
माभाति वीणामिव वादयन्ती ॥ इति ।

एवमेवेतराण्यङ्गानि उपाङ्गानि च यथायोग्यमुपकुर्वन्तीत्येवं सर्वाङ्गोपाङ्गोपेतस्य सरसस्य गुणालङ्कारालङ्कृतस्य च साहित्यस्य अङ्गि-(प्रधान) शास्त्रत्वमपि संपत्स्यते ॥

## साहित्यव्याकरणयोर्मैत्री.

तत्र तावन्महाकविशिरोमणिः कालिदासः रघुवंशाख्यं प्रबन्धमारिरचयिषुः काव्यशरीरभूतयोः शब्दार्थयोः शब्दस्यैव प्राधान्यं तयोः सम्बन्धस्य नैयत्यं च ॥

वागर्थाविव संपृक्तौ वागर्थप्रतिपत्तये ।
जगतः पितरौ वन्दे पार्वतीपरमेश्वरौ ॥

इति मङ्गलपद्ये प्रदर्शितवान् । तत्रैव 'वागर्थप्रतिपत्तये' इत्युक्त्या समुचितार्थबोधकशब्दस्य शब्दबोध्यस्यानुरूपस्यार्थस्य च परिज्ञानं ग्रन्थरचनायामत्यावश्यकं यच्च व्याकरणशास्त्राध्ययनैकगम्यमिति प्रतिपादयति च । शब्दार्थयोश्च संबन्धः 'शक्त्याख्योऽर्थस्य शब्दगतः शब्दस्यार्थगतो वा संबन्धविशेषोऽभिधा' इति रसगङ्गाधरसूत्रपर्यालोचनया शक्तिरूप इत्यवगम्यते । शक्त्याविषयस्याप्यर्थस्य शाब्दबोधविषयत्वे

इति आरभ्यते। एवञ्चेत् स्वाध्यायरतिः परमो धर्मः स्फुटितः। कथम्? यत्कारणं स्वाध्यायनिरतत्वात् वाग्विदां वरता, तदनु तद्धेतुकी मुनिपुङ्गवतेति चाह॥

नन्वत्रैवर्णिकोऽपि कुतुकात् स्वाध्याये नितरां रमेत तर्त्कि तस्यापि तद्धेतुकी वाग्विदां वरता मुनिपुङ्गवता चाभिमता? नेति ब्रूमः। यत्कारणं न शुद्धमिह स्वाध्यायनिरतत्वं गृह्णाति, अपि तर्हि तपस्साहितं। कम्पुनरर्थमभिधत्ते तप इति शब्दः? तदाह भगवानापस्तम्बः 'नियमेषु तपश्शब्द' इति। ये ये हि अनध्यायादिधर्माः ये चानुष्ठेयाः ब्राह्ममुहूर्तोत्थानेश्वरचिन्ताशरीरशोधनस्नानादयः येचापि गुरुशुश्रूषाभिक्षाटनादयः तत्तदृषिप्रदिष्टाः नियमाः ते सर्व इह तपःशब्दवाच्याः। तत्साकल्यानुष्ठानादृषिर्भवति। स च सर्वं कर्तुमर्हति। यथाह भगवान् आपस्तम्बः 'ईदृशस्स्वाध्यायशीलः यच्चक्षुषा पश्यति वाचा वदति हस्तेन स्पृशति मनसा वा ध्यायति, तत्तदिष्टं सिध्यति' इति वैपरीत्ये चानृषितामाह–'तस्मादृषयोऽवरेषु न जायन्ते नियमातिक्रमात्' इति॥

नन्वत्रैवर्णिको नितान्तं रमेत स्वाध्याये नियमांश्चानुरुन्धीत, कुतोऽस्मै क्रुध्यसि? यत एनं च्यावयसि अधिकारितायाः। नास्मै क्रुध्यामः, यत्कारणं त्रैवर्णिकाधिकारिकमेवाध्ययनं वेदानां विदधात्याम्नायः 'वसन्ते ब्राह्मणमुपनयीत' 'तमध्यापयीत' इत्येवमादिः (सोऽधीयीत इति यावदुक्तं भवति तावदुक्तं भवति मध्यापयीतेति इति मीमांसकमर्यादा) यत्कारणञ्च—

तपोविशेषैर्विविधैर्व्रतैश्च श्रुतिचोदितैः।
वेदः कृत्स्नोऽधिगन्तव्यः सरहस्यो द्विजन्मना॥

इति तदर्थानेव नियमान् स्मरन्ति स्मर्तारः। नातः क्रोधनिबन्धनैषा च्यावनेति॥

ननु स्मर्तारोऽपि ब्रुवन्त्यत्रैवर्णिकाय, यत एनं परिसञ्चक्षते तादर्थ्यमाचक्षाणाः । नेति ब्रूमः वेदवादात् । 'पच्छु हवा एत-च्छमशानं यच्छूद्रः तस्माच्छूद्रसमीपे नाध्येतव्यम्' इत्यादिमधीयते स्मर्तारो वेदं । तमेव वदन्ति 'द्विजन्मने' त्यादिब्रुवाणाः । तस्मात् सिद्धा स्मर्तृषु अद्रोहिता । अध्येतृसामीप्यस्याप्यनीशानाः कथन्नु नाम साक्षादध्येतुमीशीरन्निति दण्डापूपिकया सुदूरनिरस्ताध्ययनवार्तेति ॥

नन्वेवं तर्हि साक्षादेव निरस्तवेदाधिकारोऽत्रैवर्णिकः सिध्यति, किमर्थेयमन्तर्गडुः 'तपस्स्वाध्यायनिरत' मिति तपस्सहिते स्वाध्याये निरततोक्तिः? सामर्थ्यार्थेति ब्रूमः। तथाहि मानवी शासना—

यद्दुस्तरं यद्दुरापं यद्दुर्गं यच्च दुष्करम् ।
तत्सर्वं तपसा साध्यं तपो हि दुरतिक्रमम् ॥ इति ।

नायमर्थः तपस्सहिते स्वाध्याये निरत इति । कस्तर्हि? तपोनिरतः स्वाध्यायनिरतश्चेति । यत्कारणञ्च तपोनिरतः ततो दुस्तराद्यर्थप्राप्ति-समर्थो नारदो महर्षिरित्युक्तं भवति ॥

**असम्भव इति चेन्नाभेदव्यपदेशात्—**

नैवं सम्भवति तपोनिरतः स्वाध्यायनिरतश्चेति । किं कारणम्? उभयथा च दोषात् । यो हि यदेकतानमना अजस्रमासीत, तमेव तन्निरतमाचक्षीरन् । तद्यदि तपोनिरतः, न तर्हि स्वाध्यायनिरतः, अथ स्वाध्यायनिरतः, न तपोनिरतः । अतोऽसम्भव एवमर्थस्येति चेन्न, अभेदव्यपदेशात् । येन हि दुस्तरास्तीर्येरन्, दुरापा आप्येरन् दुर्गा अपि वा गम्येरन्, दुष्कराश्च क्रियेरन्, यश्च दुरतिक्रमः केना-प्यन्येन, तमिह तपश्शब्दोऽभिधत्ते, इति मानवी शासना प्रादर्शि । तच्च प्रस्मर्तव्यम् । तादृक्प्रपञ्चविषश्च वेदादन्यः कः सम्भवति । वदन्ति हि—

यो योऽत्र वाञ्छितो ह्यर्थः चेतनेन स सर्वथा ।

सम्यक्प्रयुक्तात् सर्वेण पौरुषात् समवाप्यते ॥ इति ।
उच्छास्त्रं शास्त्रितं चेति पौरुषं द्विविधं स्मृतम् ।
तत्रोच्छास्त्रमनर्थाय परमार्थाय शास्त्रितम् ॥ इति ।
स्वार्थप्रापककार्यैकप्रमाणपरता बुधैः ।
उक्ता पौरुषशब्देन सा सिध्यै शास्त्रयन्त्रिता ॥ इति ।
यो यमर्थं प्रार्थयते तदर्थं यतते तथा ।
सोऽवश्यं तदवाप्नोति न चेदर्धान्निवर्तते ॥ इति च ॥

शास्त्रतन्त्रः सर्वेष्टभागीति । शासनात् शास्त्रं वेद इति नात्रार्थान्तरेऽभिनिवेष्टव्यम् ॥

तदिह तपसोऽभेदं स्वाध्याये व्यपदिशतीति नासम्भव उद्भावनार्हः । नातोऽत्र द्वन्द्वान्ते श्रूयमाणं निरतपदं तपसि स्वाध्याये च पृथगनुषञ्जयन्तः क्लिश्नीमः ॥

कालभेदात्तूभयथारती, रत्यन्तराभावे च तात्पर्यवद्वचनं, शास्त्रीय इति नोभान्वयो दुष्यतीति तत्वमिदमत्रावधेयम् ॥

ननु तपोमहिमवर्णकं मानवं वचनं यद्दुस्तरमित्युपक्रमकं तपश्शब्दार्थाख्यानपरं व्याचक्षाणो भवान् कथमिव प्राह्यवचा भवेत् परीक्षकाणामिति असम्भव एवोक्तस्यार्थस्येति चेत् ॥

**न अभेदव्यपदेशात्—**

अथ भवानेवैवं पृष्टो व्याचष्टां, कः पदार्थः? तप इति । ननु ध्यानमाचरन्तमाचक्षते लोकाः तपश्चरतीति ध्यानमेव पदार्थस्तप इति चेत्, तत्रोच्यते—एवमर्थायैवन्ध्यातव्यमित्यचोद्यमानोऽनभिलषन् वा फलं ध्यायतीति नैतत्सम्भवति, नतरां च तत्तदर्थतां ध्यानस्य स्वत एवावगच्छन् ध्यायतीति, अननुभवादेवञ्जातीयकानामर्थानां लौकिकैः प्रमाणैः । तदवश्यं वेदैर्वा तन्मूलकैः स्मृत्यादिभिर्वा तादर्थ्यं ध्यान-

स्यावगच्छन् ध्यायतीत्यास्थेयम् । एवमेव, ध्यानं नामैवंविधमिति च । तदनया प्रणाल्या ध्यानं वेदार्थ इति फलितम् ॥

तदिह स्वाध्यायार्थभूतं ध्यानं स्वाध्यायशब्देन व्यपदिशति शब्दार्थयोरभेदारोपेणेति सिद्धमभेदव्यपदेशात् नासम्भव इति ॥

अथवा स्वाध्याय एव तप इत्यभेदं व्यपदिशति आम्नायः 'स्वाध्यायप्रवचने एवेति नाको मौद्गल्यः । तद्धि तपस्तद्धि तपः' इत्येवञ्जातीयकः । योन्तेनुवाकस्य पक्षान्तरनिरसनेन निर्णयरूपेण गृह्यतामिति अवबोधयति । वीप्सया चादरम् ॥

तदेवं सर्वार्थसाधनसमर्थे नारदे वाग्विदां वरता मुनिपुङ्गवता च कैमुतिकसिद्धापि कीर्त्यते कथं हि प्रकृते उपयुज्येति । तद्यथा— 'तथा तथैष उपदिशेत्, यत्सकृदनुशिष्ट एव विधेयोनुशासकबोधं बुध्येत्, निर्मले आदर्शे प्रतिबिम्बवत् गुरुवरोपदिष्टाः अर्थाः शिष्येऽसङ्कुचितं संक्रमेरन्निति' यथाच—'ध्यायं ध्यायमतीन्द्रियानप्यर्थानाचक्षीत, यान् यान्हि प्रष्टा जिज्ञासेतेति' च । कथमन्यथैते उभे आचार्यस्य विशेषणे साफल्यमश्नुवीयातामिति ॥

एतेन शिष्यस्य विशेषणं तपस्वित्वं व्याख्यातम् । ननु नैवं वक्तुं युक्तं, शिष्योऽपि गुरुविशेषणवानिति । न वयमेवं वदामः, यतो नाधीमः 'तपस्स्वाध्यायनिरतं तादृशो वाग्विदां वरम्' इति पारमर्षस्य वचनस्य, यन्निबन्धनं न्यूनाधिकभावो महर्ष्योर्व्यावर्तेत, तदनु शैष्योपाध्यायिका च । अपि तर्हि—तपस्वी वाग्विदां वरमिति अधीमः । स्वाध्यायजपपरः प्रवचनपरश्च वाल्मीकिरिति तदर्थः, न पुना रतो नितान्तं नारदवत् । अतस्तथाभूतं तं प्रति प्रश्नोऽवकाशते । यत्कारणं 'तपस्स्वाध्यायानिरतं वनगो वाग्विदां वरम्' इति नाचष्टे, अपि तर्हि 'तपस्वी वाग्विदां वरमिति' ततो मन्यामहेऽतिसुलभं बोध्यतैष

महर्षिः इति, यतः स्वाध्यायप्रवचनपर इति क्षपितकल्मषत्वमाह । यद्येष वनग एव केवलं स्यात्, स्यादेष कृच्छ्रेण बोधनीय इति ॥
परिपप्रच्छेति—परिचर्यादिनिखिलशिष्यानुष्ठेयधर्माननुतिष्ठन् पप्रच्छेति बोधनाय । वाल्मीकिरिति—ध्यानरतस्य संभवद्वल्मीकिभावमप्यजानतो महर्षेः कृणुनामकस्य सुतोऽसाविति अतिसुलभाधेयध्यानशक्तिरिति बोधनाय । तदिहाधेया शिष्यसम्पत्, स्वाभाविकी च प्रकटिता, यन्निबन्धना सुलभा स्याद्विद्या ॥

तस्मात् सुष्ठूक्तं स्वध्यायरतिः परमो धर्म इति । स्यादेतत् । धर्म इति पुनः कः पदार्थः? श्रेयस्कर इति ब्रूमः । किम्पुनः श्रेयः? पुरुषप्रीतिः । के पुनस्तां कुर्वन्ति? द्रव्यं, गुणः, कर्म च । किम्पुनरत्र प्रमाणम्? चोदनेति ब्रूमः । का पुनरसौ? विधिरेव । यथाहुराचार्याः—

श्रेयो हि पुरुषप्रीतिः सा द्रव्यगुणकर्मभिः ।
चोदना लक्षणैर्ग्राह्या तस्मात्तेष्वेव धर्मता ॥ इति ।
चोदना चोपदेशश्च विधिश्चैकार्थवाचिनः । इति च ।

किन्निबन्धनमस्य पुनः परमत्वं? सर्वेषामपि श्रेयसां साधननिबन्धनम् । तदिदञ्चास्य स्वाध्यायस्य जप्यमानस्य प्रदर्शितं 'यद्दुस्तरं यद्दुरापं . . . तपो हि दुरतिक्रममि 'ति मानवीं शासनामुदाहरद्भिः । स्मरन्ति च—

जप्येनैव तु संसिध्येत् ब्राह्मणो नात्र संशयः ।
कुर्यादन्यत् न वा कुर्यात् मैत्रो ब्राह्मण उच्यते ॥ इत्यादि ।

अयमभिसन्धिः—पापिनां पापापहत्या अग्नौ प्रवेशं शास्ति शास्त्रम् । बहुभिरेवमहरहराचरद्भिः अग्निः पापैकनिधिरास, अतिमलिनानेकभाण्डादिनिर्णेजिन्य इवाल्पा आपः । एवमेव शोध्यमालिन्यं शोधके सङ्क्रामतीत्यभिदधान आम्नायः शोधकपरम्परामाचष्ट आहुतयः, यज्ञः, दक्षिणाः, ग्रहीता

ब्राह्मणः, ब्राह्मणैरधीयमानमन्त्रगतच्छन्दांसि, तदधीयमानस्वाध्याय-श्चेति आस्वाध्यायम् ॥

स यथा 'अग्निं वै जातं पाप्मा जग्राह तं देवा आहुतीभिः पाप्मानमाघ्नन् आहुतीनां यज्ञेन, यज्ञस्य दक्षिणाभिः, दक्षिणानां ब्राह्मणेन, ब्राह्मणस्य छन्दोभिः, छन्दसां स्वाध्यायेन' इति ॥

स्वाध्यायस्य पुनः सर्वान्त्यस्य शोधकस्य शुद्धिर्नान्यस्मिन् शोधके आयतते। अपि तु स्वतः शुद्धः यतो देवत्वादिकमपि प्रापयति अध्येतारम्। इति च तदन्वाचष्ट। यथा—

'स्वाध्यायो देवपवित्र' इति 'अपहतपाप्मा स्वाध्याय' इति। एवम्महिमानमपि यस्त्यजति स्वाध्यायं, सोऽतिसुलभनिखिलफलम्भकात् वाग्विषयभाग्यात् मुक्तः, तदनु आमुष्मिकेभ्योऽपि नैकभेदेभ्यो भाग्येभ्यो मुक्तः, करतलगतचिन्तामणिपरित्यागी सम्पद्यते। इति च प्रवृत्त आम्नायः ॥

'तं योनूत्सृजत्यभागो वाचि भवत्यभागो नाके' इति। तदियता जप्येन फलसिद्धिः सामान्यतः प्रदर्शिता। विशेषतः तत्तत्क्रत्वनुष्ठानजां फलसन्ततिं कीर्तयत्यपर आम्नायः तत्तत्क्रतुभागमधीयानस्य। अपि चाग्निवाय्वादित्यात्मतावाप्तिम् ॥

'अरण्ये ग्रामे वा यावत्तरसं स्वाध्यायमधीते सर्वान् लोकान् जयति' इति, 'यं यं क्रतुमधीते तेन तेनास्येष्टं भवति, अग्नेर्वायो-रादित्यस्य सायुज्यं गच्छति' इति च ॥

नचैवं मन्तव्यं, अनपाकृतर्णत्रयो वर्णी कथं हि आमुष्मिकानि फलान्यश्नुवीतेति, यत एनमध्येतारं अनृणं शास्त्याम्नायः 'योधीते स सर्वान् लोकाननृणोऽनुसञ्चरति' इति ब्रह्मयज्ञाध्ययनात् ऋषीणामृणं तावदपोदितम्। देवानां पितॄणां कार्यं च वर्णिना निर्वर्तनीयमध्य-

यनेनैव निर्वर्तितं बोधयत्याम्नाय इत्यनृणीति विवक्षितोऽर्थः । अस्ति चार्थं विवृण्वती प्रदर्शितं, अधीयानानामृषीणां सूक्तिरूपा ऋगप्यत्र । सा यथा—

'अनृणा अस्मिन्ननृणाः परस्मिंस्तृतीये लोके अनृणाः स्याम ।
ये देवयानाः उत पितृयाणाः सर्वान् पथो अनृणा आक्षीयेम ॥

इति ॥

अतोऽवगता एवमादिभिः फलविशेषाः सर्वे अधीयानानाम् ॥

यः पुनः काव्यनाटकादिव्यसनेन निखिलार्थसम्पन्नमात्मानं मन्यते, तदभिमानमपाकरोति अपर आम्नायः योऽध्येतुः सर्वेष्टसिद्धिं व्यतिरेकमुखेन गमयति ॥ स यथा—

यस्तित्याज सखिविदं सखायं न तस्य वाच्यपि भागो अस्ति ।
यदीं शृणोत्यलकं शृणोति न हि प्रवेद सुकृतस्य पन्थाम् ॥

इति ॥

यो हि दीर्घकालं निरन्तरं सत्कारेणासेवते वेदं, वाङ्मात्रनिर्वर्त्यमध्ययनं करोति, तमेतं वेदः सखायं वेत्ति । सखायं हि सखान्योऽतिस्नेहेन पालयेत् । तथा कुर्वन्तमेनं सखायं वेत्तीति साम्प्रतम् । सखिविदत एष वेदः । सखा च । अखिलमपि पापजालं अपघ्नन् मोक्षपर्यन्तानर्थानस्मा अधीयानाय सम्पाद्यार्पयतीति । तस्यागी भाग्यहीन इति सुगमोऽर्थः । यदीं=यद्यपि शृणोति । कदाचित् विद्वत्सभायामुपविश्य बहूनि शास्त्रादीनि विवादविषयीभूतानि इति, तथाभूतस्यापि वेदस्य त्यागीति च शेषः । तदनुगुणं समाधत्ते इति चोपलक्षणीयम् । शृणोति । तथापि इत्यध्याहारः । अलकं=अलीकं, अनृतमिति यावत् । शृणोति समाधत्ते च । नह्येते श्रुतिसमाहिती पुरुषार्थायामुष्मिकाय कल्पेते इत्यलीकतावादः । तत्र हेतुः आमुष्मिकभोगमोक्षयोः मार्ग-

मेष यतो नजानातीति । एतेन "जप्येनैव" इत्यवधारणाव्याख्याता ॥

नन्वसङ्ख्येयान्यवश्यानुष्ठेयानि कर्माण्यवगच्छामः । अष्टकाः- अन्वष्टकाः, युगादयः, मन्वादयः, महालयः, नित्यं, नैमित्तिकम्, दार्शम् इत्येवमादीनि, यान्यननुतिष्ठन्नवश्यं प्रत्यवेयात्, तस्मा न्नैषा वधारणा साध्वी जप्येनैवेति चेत् न । सर्वोपसङ्ग्रहात् । उपसंगृह्णन्ति हि सर्वमेवानुष्ठेयजातं जप्येनैवर्षयः । तथाहि—

एभिर्व्युभिर्जपेन्मन्त्रं शतवारं दिने दिने ।
अन्वष्टका यदा न्यूना सम्पूर्णा याति सर्वदा ॥
समिद्राराय मन्त्रं तु वर्षे वर्षे जपेच्छतम् ।
आग्रयणं यदा न्यूनं तदा सम्पूर्णमेव तत् ॥
त्वं भुवः प्रजपेन्मन्त्रं दशवारं जले यदा ।
मन्वादयो यदा न्यूनाः तदा पापात् प्रमुच्यते ॥
न यस्यद्यावो मन्त्रं च शतवारं तदा जपेत् ।
युगादयो यदा न्यूनाः कुरुते वै न संशयः ॥
आर्चन्नत्र जपेन्मन्त्रं शतवारं जले बुधः ।
नित्यश्राद्धं यदा न्यूनं कुरुते नात्र संशयः ॥
न्यूषुवाचं जपेन्मन्त्रं शतवारन्तु तद्दिने ।
अमाश्राद्धं यदा नास्ति तदा सम्पूर्णमेव तत् ॥
दुरो अश्वस्य मन्त्रं च शतवारं द्विमासिके ।
महालयो यदा न्यूनं तदा सम्पूर्णमेव तत ॥

मित्रेणेव धवलातपत्रेण सच्छात्रितशिरोभागः प्रदत्ता त्वया कपिराज्य-
संपत्तिरस्मत्तनुजाय सुग्रीवाय मदीयकुलभूषणं चास्तीति हेतुद्वयेन
मूर्धानमुपजिघ्रता भानुमालिनेव हेममौलिना शोभमानो मणिमुकुटे
निजजनकभ्रमात्तदङ्कभुवि शिशुभावेन चलन्त्या भानुसुतयेव मृगमद-
तिलकरेखया प्रस्फुरितललाटफलको मकरकुण्डलग्रैवेयकाद्यपरिमितदिव्या-
भरणभव्याकृतिर्निजविग्रहसमुज्ज्वलद्वीररसतरुशिफासंशयवदावदेन दिव्य-
कोदण्डेन परिमण्डितवामकरसरसिजतलो दधानश्च दिव्यतरं कं चन बाणं
दक्षिणेन करेण सोयं समयसमुन्मीलदिन्दीवरबृन्दसुन्दराङ्गः पुनरपि मा
बधान मामिति भीत्या प्रथममेव रत्नाकरेणोपहारीकृताभ्यामिवानर्घमौक्तिक-
हारपुञ्जाभ्यां चामराभ्यां तरङ्गितपक्षभागो दिव्योत्सववैभवविलोकन-
कृते समवतीर्य नभस्तलादत्यद्भुतं चिन्नकृष्णप्रभुप्रार्थनानुगुणं भगवतो
दिव्यवेषं दर्शंदर्शं दर्शयितुं व्योमाग्रमासेदुषामात्मीयानां सश्लाघावचन-
मतिजवान्निजनिजस्थानमुत्पतत्सु तारकानिकरेष्विव सश्रीङ्कारं गगनाग्र-
मारोहत्सु यान्त्रिकजनदीपितनानाविधाकाशगन्धकयन्त्रेषु विमुञ्चत मार्गं
भगवानागच्छतीति शिरःकम्पेन सूचयत्स्विव सङ्घीभूतानां जनानां
पवमानतरलशिखेषु प्रज्वलत्सु प्रदीपेष्वन्तरान्तरानल्पशिल्पिजनकल्पित-
भूनिहितप्रदीपितगन्धकयन्त्रसन्ततिनिरन्तरसमुत्पतदग्निकुसुमपरिपतनादेव
कथं कथमपि प्रदत्तसञ्चरणावकाशेन जनसङ्घेन निबिडितं प्रदक्षिणी-
कृत्यानिरुद्धविमानं प्रविश्य यथापूर्वदिनं कायमानं परिक्रमन् यथापूर्वं
बहुमानयन् गुरुपरम्परामभिशृण्वन् निगमवचनान्यनुदितस्वरवर्णव्यत्यय-
दोषलश ।ठ्यमानानि नैगमिकैरश्शृण्वन् सतारस्वरं दिव्यप्रबन्धं लालयन्
सारोहावरोहक्रमं वाद्यमानां वीणां मा प्रदीयतां प्रहारः कस्यापि केना-
पीति दयालुतरहृदयेन धर्मात्मना चिन्नकृष्णनायकविभुवरेण दत्ताज्ञै-
रप्युन्मस्तककोलाहलनिर्धूननायत्नादेवातिक्रान्ततदीयशासनभटैर्निर्दयं ता-

ज्यमानेष्वप्युत्तमाङ्गेष्वलक्षीकृत्यैव प्रहारान् पुनःपुनरुद्घुष्यत्स्वन्तरा-समुज्जृम्भितवाराङ्गनाजननर्तनोपक्रममृदङ्गधिंधिं शब्दनिशमनाव्यवहितो-त्तरक्षणमेव स्वयमेव मूकीभूतेषु जनेषु सस्मितवदनेन चिन्नकृष्ण-विभुवरेण निर्निमेषमासेव्यमानो मन्दंमन्दं निषण्णः क्षणं तत्र मण्डपे समाराधितो दिव्योपचारैः प्रदद्य प्रथमं श्रीमत्परमहंसपरिव्राजकाचार्य-वर्याणां परकालगुरुवराणामनन्तरं पृथ्वीमण्डलमण्डनायितकर्णाटदेश-समुल्लसन्महीशूरनगरीसिंहासनसाम्राज्यवैभवसमेधमानस्य श्रीकृष्णराज-सार्वभौमस्य समर्यादं मालिकायुग्मादिप्रसादं निर्वर्तितेषु निखिलविचारेषु समर्पितानीराजनो भगवान् श्रीसौम्यकेशवः प्रविवेश विमानाभ्यन्तरमन-न्तरम् ॥ ४४ ॥

किं बहुना अन्येद्युः ॥ ४५ ॥

मदनाभिषेकहेतोर्दिनश्रिया जलजिघृक्षया जलधौ ।
मुक्तो रश्मिनिबद्धः कलशो हैम इव रविरथ ममज्ज ॥ ४६ ॥

नाकेशमुख्यामरनित्यसेव्यं
भूकेकिनीनीलघनायमानम् ।
राकेन्दुवक्रं दिवसावसाने
लोकेशमानर्चुरथार्चकौघाः ॥ ४७ ॥

चिरदृष्टश्रुतपूर्वं ददाति नृभ्यो न विस्मयमितीव ।
अपि धृतनृसिंहरूपस्त्रिविक्रमनृसिंहतां दधौ देवः ॥ ४८ ॥

ते मध्यस्वरवृद्ध्या मनुजाः कोणैर्घनैरभिघ्नन्तः ।
आनकमानाकमथो ख्यातं चक्रुर्महोत्सवारम्भे ॥ ४९ ॥

भगवानप्यात्मनो विचित्रशक्तिमत्तां प्रचिकटयिषुरिव पुरस्ता-दुद्धृतजम्भालम्भनमणिस्तम्भसम्भावनाप्रियं भावुकदक्षिणपादारविन्दतया मन्दाकिनीसख्याय कालिन्दीमिवोत्प्रेरयन्तं भगवतश्चरणनलिनमारिराधयि-

षुणा चतुर्मुखेनोर्ध्वभागसज्जीकृतेन स्फाटिककमण्डलुनेव धवलातपत्रेण परिष्कृतोत्तमाङ्गममुष्य किलामुष्मिन्नेव त्रिविक्रमावतारे मम प्रशस्तिर्जगत्यामासीदिति हर्षात्सेवितुं गङ्गया प्रेरिताभ्यामात्मीयाभ्यामुत्तुङ्गाभ्यामिव तरङ्गाभ्यां चामराभ्यामभिवीज्यमानमखिलजनासेचनकमाश्रितस्त्रैविक्रमं वेषं पश्चाद्द्विजराजतामात्मनस्स्फुटीकर्तुं वदनभागे द्वेधा जायमानेन बालचन्द्रेणेवातसीकोरकसच्छात्रेण दंष्ट्रायुगलेन कोरकित करालवदनं निरन्तरविजृम्भमाणप्रतापार्णवमध्यपरिभ्रमद्भ्यां सतरङ्गाभ्यामावर्तगर्ताभ्यामिव भ्रूकुटीभ्यामतिवर्तुलापाटलाभ्यां नयनाभ्यां रिपुजनहृदयक्षेत्रेष्वङ्कूरयन्तं साध्वसबीजानि विनताखिलजनतानां शिक्षयितुमिव योगमवलम्बितयोगपट्टं निषण्णमुभयतोविसृमरदंष्ट्रावज्रशकलद्वयमरीचिपुञ्जाभ्यामिव चन्द्रांशुवर्णकाभ्यां प्रकीर्णकाभ्यां तरङ्गितपक्षभागं नृसिंहरूपं दधानः प्रविश्य यथापुरं कायमानं तत्रतत्र किं ब्रवीमि सखि भगवतोऽवतारद्वयदर्शनमेकस्मिन्नेव दिव्यविग्रहे जातमधुना कियदिवास्माकीनभागधेयं चिरमधितिष्ठत्विमामेव वेलापुरीं चिन्नकृष्णविभुर्य ईदृशं कदाप्यत्र पुर्यामनुन्मिषितं दिव्योत्सवं कारयति मान्यत्र द्राक्षीस्सखि पश्यामुं भगवद्वदनाम्बुजमाध्वीझरीमापिबद्भ्यां भ्रमराभ्यामिव भक्तिविष्फारिताभ्यां नयनाभ्यां विस्मृतपक्ष्मचलनाभ्यामासेवते निश्चलं साञ्जलिबन्धं सपुलकं सगद्गदं सहर्षं भगवन्तं सौम्यनायिकाकान्तं धन्यः खल्वयं चिन्नकृष्णविभुरित्यन्यत्र किं ते प्रियसखि पतिः कारयति स्म भूषणं हळा किं ब्रवीमीदं दिव्यरत्नताटङ्कयुगलमिदं स्वर्णकाञ्चीदामेदमङ्गुलीयकं च दृष्टचरमेव त्वयामुं पश्य नक्षत्रमालाख्यं मौक्तिकहारं नृत्यति कुचकनककलशान्तराले सखि मास्त्वधुनास्य विचारस्त्वयि प्रदर्शनायास्य हारस्य किञ्चिद्विगलच्चेलाञ्चलायां पीडयन्निव चक्षुर्भ्यामेव वक्षोजकुम्भावविज्ञातमन्येषां पश्यति शृङ्गारशेखरः कश्चन तज्जवेन स्थगय-

माद्राक्षीस्त्वं यदि विलोकयासि स्वास्मिन् सरागां जानातीत्यन्यत्र साखि यत्रयत्र मिलन्ति ललनास्त्रिचतुरा अपि तत्रतत्र सज्जते खल्वाभरणविचार एव नासां तथा केशवसेवनेन चोत्सववैभवनिर्वर्णने चासक्तिर्यथा विभूषणेषु धिग्धिगमूर्ललना इतीतरत्र बाले किं कथयामि परब्रह्मश्रीकान्तस्य दृष्ट्वा तादृशं जगन्मोहनं कान्तारूपं विस्मितमासीन्ममहृदयमचिन्तयं च तदा स्त्रीणां मोहमुत्पादयित्री कं पुरुषं न मोहयेदेषेत्यपरत्र किमत्र गृहकृत्यविवादायागता वोत भगवत्सेवनाय वेत्युच्चैरुच्चावचवचनेषु ललनानां सङ्घेसङ्घे प्रवर्तमानेषु भिन्नभिन्नं धर्मात्मना चिन्नकृष्णविभुना दत्ताङ्गैर्भटैः पृथक्पृथग्विभज्यमानेष्वपि स्त्रीपुंससङ्घेषु निजनिजप्रियवस्तु तेषुतेषु सभयं ससंकोचं कुत्रापि दत्तदृष्टिष्विव विलोकमानेषु तदुचितजनेषु समर्यादाधिगतसाङ्गवेदत्रितयैर्मूर्तिमद्भिरिव निगमवचनैर्निजविग्रहान्तरमानाद्बहिर्निर्गतेन ब्रह्मवर्चसेनेव वेदाध्वन्यमूर्धन्यत्वसूचकेन कनकघण्टाञ्चितेन काञ्चनबिरुदवीरकङ्कणेन विभूषितहस्तैश्शस्तैः पठद्भिर्निगमं विप्रैस्स्तूयमानो यथामर्यादमुदग्रतरकायमानाग्रपताकाविधूनितजलदबृन्दविगलिताभिस्सौदामिनीभिरिव निखिलमपि भुवनं मोहयितुं सज्जीकृताभिरिव मदनेनानर्घरागमालिकाकाञ्चनपेटिकाभिस्सचेटिकाभिर्वारवधूटिकाभिरभिनयव्याजेन सहस्तधूननं सशिरःकम्पं तिरस्कुर्वतीभिरिव शुकपिकाङ्गनास्वररामणीयकं पदेपदे सगानं नृत्यन्तीभिरभिष्टूयमानो निरवधिकोत्सवः प्रविवेश दिव्यमन्दिरं मन्दमन्दम् ॥

अपरेद्युः ॥ ५१ ॥

अस्मत्तनूभवरिपोर्भगवान् दधाति
पाण्डोस्सुतस्य वररूपमिदं न शक्य
द्रष्टुं मयेत्यसहनादिव भानुमाली
पाश्चात्यसागरतरङ्गचये ममज्ज ॥ ५२ ॥

स्वांशभवः फल्गुन इति जगतां सूचयितुमिव दिने तस्मिन् ।
द्रुपदसुतावरणकृतं तद्रूपं केशवो दधौ देवः ॥ ५३ ॥

दधौ कान्तारूपं प्रथमदिवसे कञ्जनयन-
स्तदा सर्वे हृष्टा अहमपि तु पुंरूपमधुना ।
भजामीमे पश्यन्त्विति जनितकौतूहलतया
दधौ धृष्टद्युम्नाकृतिमवनिदेवी तदुचिताम् ॥ ५४ ॥

विध्यन्तमूर्ध्वगतमद्भुतलक्ष्यमत्स्यं
वेषेण पाण्डुतनयस्य पयोजनेत्रम् ।
दृष्ट्वा दधौ तदुचितामथ सिन्धुजापि
तत्तादृशीं द्रुपदजाकृतिमेव लक्ष्मीः ॥ ५५ ॥

निर्जितेन्दुप्रभैरर्जुनैश्चामरै-
रार्जितोद्वीजनस्सोऽर्जुनाकारभाक् ।
निर्जगामालयान्निर्जरौघाद्विष-
त्तर्जने दुन्दुभौ गर्जति श्रीपतिः ॥ ५६ ॥

अस्मत्कुलनृपनिवहे विक्रान्तस्त्वमिति फल्गुनाकारम् ।
देवं मूर्धनि जिघ्रन्विधुरिव रेजे सितच्छत्रम् ॥ ५७ ॥

मत्पतिशन्तनुवंश्यार्जुनरूपधरोऽद्य देव इति हर्षात् ।
नृत्यन्ती गङ्गेव प्रबभौ चामरपरम्परा लोला ॥ ५८ ॥

आगच्छति मन्दमन्दं मन्दिरस्यान्तादिन्दिराकान्ते ॥ ५९ ॥

अनुजोऽस्मदाधिभुवः प्रागिन्द्रस्य प्रापदस्य सुतरूपम् ।
हरिरिति हर्षान्मिलितास्त्रिदशा इव विबभुरनिमिषा मनुजाः ॥

तव तनुभवरूपः केशवोऽद्येति वक्तुं
सपदि शतमखाय श्रींकृतिप्रौढनादम् ।
अभिदिवमिव गच्छन् यन्त्रजालार्पिताग्निः
कुसुमितमिव चक्रे द्योतलारण्यभागम् ॥ ६१ ॥

अथ यथाक्रमजातमहोत्सवः
पृथुलसम्मदतुन्दिलमानसः ।
हरिरवाप सपाण्डुसुताकृति-
र्धुरि कुठारमनर्घतरं तदा ॥ ६२ ॥

आदावाचार्यगोष्ठीं निरवधिविभवान्मानयन् ज्ञानवद्भि-
र्मोदात् पापठ्यमानान्यकृतकवचनान्येष शृण्वन् द्विजेन्द्रैः ।
मन्दंमन्दं प्रबन्धैर्नुतनिजचरितस्फीतवीणानिनादं
गायद्वाराङ्गनाभिः कृतमतिमधुरं साधु शुश्राव गानम् ॥ ६३

नीराजितोऽथ देवैस्स्फारारात्रिकपरम्पराभिरयम् ।
प्रविवेश दिव्यभवनं दिविजेशसुताकृतिः प्रमदात् ॥ ६४॥

अन्येद्युरस्तङ्गते भगवति भानुमत्यवलम्बितशारदारूपां सरस्वतीयं मम प्रियसखीति हर्षेण परिरम्भमाणया यमुनयेवाहो पुरतस्थितनासाचम्पकसौरभीचकिततया पश्चादाधावन्त्या मधुकररेखयेवाताहो निखिलजनमनस्तुरङ्गसंयमनशृङ्खलयेवाथवा निजकरकिसलयकलितविपाञ्चिकोदञ्चितपञ्चमाञ्चितनिजकण्ठोदीर्णवर्णगीतनिशमनचकिततया निजाङ्गभूसमुन्मीलद्यौवनाराममध्यात्पलायमानया परभृतमालिकयेव वेणीलतया परिष्कृतां त्रिभुवनजिगीषया कुसुमायुधेन भ्रूलताचापसमारोपितनासाबाणाग्रफलकेनेव कस्तूरीतिलकेन कलङ्कितफालबालचन्द्रामखिलभूषणसान्द्रां सखीसौहार्देनाश्लिषन्त्या गङ्गयेव दिव्यदुकूलवल्यापरिवीतां तनुरुचिझरीमध्यनिरर्गलविनिर्गलद्बुद्बुदमालिकाभिरिव मौक्तिकमालिकाभिः कोरकितवक्षस्स्थलां शरीरलावण्यमन्दाकिनीमध्यनिमग्नयौवनैरावतकुम्भद्वयेनोत्तुङ्गतरेण कुचद्वयेन प्रकटितोत्तमस्त्रीलक्षणां वामकरकिसलयगृहीततया निजगीतमाधुर्येण पल्लवितामिव दक्षिणकराङ्गुलिपल्लवनादिततन्त्रीगणतया श्लाघमानामिव कुचतटपरिरम्भसौख्यं वीणां

बिभ्राणां शोणाधरां कुत्र गतावास्मत्प्रियसखी सरस्वती विचार्यतामिति ब्रह्मणाज्ञप्तया परिमार्गितुमागतैः कैश्चिदासनीभूतकमलकुलीनैस्सहस्र-पत्रैरिवापाटलातपत्रैर्मसृणितमकुटाग्रभागां चिरपरिपोषणवात्सल्यादागत्य पार्श्वयोस्सानन्दं वल्गद्भ्यां चतुराननवाहनहंसशावकाभ्यामिव चमरी-वालाभ्यामतिविमलाभ्यां विधूनितश्रमां विचित्रतरकायमानमध्ये परि-भ्रमन्तीमम्बुदबृन्दान्तर इव विद्युल्लतां यथामर्यादं प्रवृत्तदिव्योत्सवां केशवाभिधां देवतां दर्शंदर्शमानन्दाम्बुधिमध्यसलिलमनुजायमनहृदया अभूवन् चिन्नकृष्णनायकप्रमुखा निखिलमनुजाः ॥ ६५॥

परेद्यवि खगाधिपे बहुतरेण हर्षेण तं
स्थिरेन्दुविमलानने गुरुतरे निषण्णं हरिम् ।
चिरेण मिलिता जना मुमुदिरे विलोक्यादरात्
सुरेश्वरवरप्रदं जलधरेडितश्रीधरम् ॥ ६६ ॥

श्रिया साकं हर्षाल्ललिततरमारुह्य गरुडं
कुठारेऽतिस्फारे मदकलभलीलागतिजुषम् ।
महागानैस्तानैर्युवतिभिरनूनैस्स्तुतगुणं
हरिं दर्शंदर्शं क इव सुहितात्मा समभवत् ॥ ६७ ॥

अन्येद्युरवलम्बितयदुनन्दनाकृतिश्श्रीसौम्यकेशवः कियद्वा कदाचन क्षण-मात्रं गोवर्धनाचलकोद्धरणे देवस्य साहसमित्यपहसन्त्यो रुक्मिणी-सत्यभामयोरात्मना समालिङ्गितयोरनारतव्यूढगुरुतरकुचकनकगिरियुगला-भ्यामावाभ्यामपि प्रत्ययमुत्पादयितुमिव कुचगिरिचतुष्टयं हस्तद्वयेनैव लीलया वहन्तं सरभसतदालिङ्गनसमयहर्षप्ररूढनिदाघकणगणरेखयेवोर-स्सूत्रिकया मदकलभमिव कक्ष्यया मनोहरवक्षस्थलं गतागतसमयव्यालो-लतया नैजतरलतामिव प्रकटयन्तं वक्षस्थलेनोद्वहन्तं नायकमणिं निज-वदनकुमुदिनीनायकलावण्यविलुलोकयिषयेव सत्यभामाकपोलमुकुर-

फलकं चुम्बनाय पश्यन्तं समाश्लिष्टसुन्दरीमणेरात्मनो मदनोद्दीपनविभावायोपर्युपरि मकुटं प्रकाशमानेनेव पूर्णरोहिणीरमणेन सितातपवारणेन निवारितहिमानीसंस्पर्शखेदं गाढालिङ्गनरभसत्रुटितविकीर्णौ कुचयुगललोलन्मौक्तिकहारपुञ्जौ ताभ्यामेव भैष्मीभामाभ्यामर्पयन्तीभ्यामिवोद्वल्गच्चामरहस्ताभ्यां काभ्यांचिल्ललनामणिभ्यां निरन्तरितपार्श्वभागं गुरुतरकुचकनकगिरियुगलकान्तामणिद्वयवहनभारेणेव विलासेन मन्दमन्दं सञ्चरमाणं तत्रतत्र सङ्गीभूय सखि पश्यामुं गोपवधूक्षौमस्तोमपश्यतोहरं ललनासहस्रसक्तमप्यनयोरिव कान्तयोर्निरन्तरासक्तमिव वितन्वन्तं लीलां सन्तु भगवतो दिव्यावतारसहस्राणीदृशलीलाविवशितकरभोरूसहस्रं नैकमपि श्रृणुमोऽवतारं नापि पश्यामः किं बहुना वल्लभस्य लोके सहधर्मिणीष्वेवमेव यद्यनुरागोत्कर्षस्तदा किं तासां त्रैलोक्यराज्यलक्ष्म्यापि धन्ये खलु रुक्मिणीसत्यभामे एव ललनासहस्रे यदीदृशं वल्लभं विक्रीय गुणेन स्वकिङ्करं कुर्वाते सखि त्वमेवमेव पत्या निरन्तरमनुरञ्जितास्यत एवं बहुविधमालपासि मम तु किं ब्रवीमि वृत्तमेकस्मिन्नहन्येकवारमपि विलोक्य कान्तं कान्तमुखचन्द्रं न लेभे नेत्रोत्सवं हन्त हतभागधेयाहं नहि किमपि मत्तकाशिनीनामितोपि चित्तवैक्लब्यकारणं यत् प्रियतमेन जातुचिदप्यलालितत्वं स्वप्नेप्यननुभूतसरसकान्तलीलत्वं बाले मा विनिन्द वल्लभं श्रूयते बहुशश्शास्त्रेषु दैवतं हि पतिस्स्त्रीणामित्यतोऽभिधीयसे मैवं निजनिलयविचारमन्यत्र वाचः प्रकटितो हि तवैव कल्पेत लाघवाय प्रायेण स्त्रियो दुर्हृदयाः परच्छिद्रान्वेषिण्यश्श्रृण्वन्ति सख्य इव त्वदीयवृत्तान्तमशेषमपि शोचनीयेषु त्वत्तोऽपि विशेषतश्शोचन्ति हर्षवचनेषु तु सावहित्थं हृष्यन्ति पृच्छन्ति च तूष्णीं स्थितामपि त्वां पुनःपुनर्वृत्तान्तशेषमन्तरेव हसन्त्यचिरादेव भवतीमपि प्रवेशयन्ति वीथीमतो मौनमवलम्ब्य कुरु कल्याणान्येवाङ्गीकुरु पत्यौ

॥ श्रीशारदांबायै नमः ॥

# वृन्दावनम्.

---

आप्याययन्ती भूतानि पावयन्ती कृताप्लवान् ।
ह्लादयन्ती जगत्कृत्स्नं कावेरी दिशताच्छ्रियम् ॥ १ ॥
अस्ति वृन्दावनं नाम कमलालास्यमन्दिरम् ।
नैसर्गरुचिरं लोकमनोनयननन्दनम् ॥ २ ॥
प्रशान्तपावनं रम्यं लोचनासेचनाकृति ।
वृन्दावनमलङ्कर्तुं कृष्णादन्यस्तु कः प्रभुः ॥ ३ ॥
एकान्तत्वाद्योगिहृद्यं पावनत्वात्प्रशान्तिदम् ।
समृद्धत्वाज्जनाजीव्यं रम्यत्वान्नयनोत्सवम् ॥ ४ ॥
सत्यानुरक्तहृदयो धर्मरक्षाविचक्षणः ।
साधुवृन्दावनं कुर्वन् जीयाच्छ्रीकृष्णराट् चिरम् ॥ ५ ॥
यत्र श्रीकृष्णराजेन्द्रकृतबन्धेन सेतुना ।
मन्दं मन्दं स्यन्दमाना सुधासारा कवेरजा ॥ ६ ॥
उपशल्यप्रक्लृप्तानि शालिक्षेत्राणि सर्वदा ।
आप्याययन्ती कुल्याभिः सार्थयत्युर्वराभिधाम् ॥ ७ ॥
तत्र श्रीकृष्णराजेन्द्रः प्राच्यविद्याकलादरः ।
भारतीयमहाविद्वत्संमेळनकृतागमान् ॥ ८ ॥
आह्वापयत्पण्डिताग्र्यान् सभाजयितुमादरात् ।
मिळितस्तैरुपदशस्सोहमागान्निरीक्षितुम् ॥ ९ ॥
तत्र दृष्टानुभूतार्थानासेचनकसुन्दरान् ।
उत्साहितश्चापलेन वर्णयामि कुतूहलात् ॥ १० ॥

अस्ति कर्णाटेषु क्रियावतां कल्पभूरुहकल्पेषु कृतसंविभागसम्मुदितनिखिळजनेषु कलाविदग्रजनसम्माननीयेषु महीशूरपुरीनाम विख्यातनगरी सौभाग्यनिर्जितामरपुरी । तत्र च करदीकृतपञ्चमहाभूतगुणगणः, कुलक्रमागतदिव्यरत्नसिंहासनाधीश्वरः श्रीमान्नाल्वडीत्युपपदाङ्कितः श्रीकृष्णराजेन्द्रो नाम भूमिपालः पालिताशेषधर्ममर्यादः । स हि महानुभावो राजा प्रभुशक्तिसंपदाऽनितरसुलभपुरुषकारेण च दैवोपपादितानुपपल्लवानवग्रहादीन्निरकालयत्स्वराज्यात् । निर्ममे च निरवधिकगुणसंपदा प्रत्यादेशमिव चतुरम्बुधीनां श्रीकृष्णसागरं नाम सर्वसम्पदागारम् । तमप्यक्षय्यमूलसह्यशैलप्रसृतवारिधारां पुण्यतीर्थक्षेत्रपावनोभयप्रतीरां कांक्षिताखिलसम्पदगारां वैद्युतानलजनकसलिलासारां सकलसस्यावळिसंजीवनसुधापूरां सम्पादितनिखिललोकमहोपकारां कवेरमुनिकुलालङ्कारां सेतुबन्धेन प्रतीसारयन्नपूरयत् । तेन च संवृतशताधिकयोजनमहीभागेन प्रावर्तयत्फलोपगानि कृषिकर्माणि, दुदोह च धरणीमभीप्सितार्थान् । स धीरः कलाविदामग्रणीः विप्रतीसारितप्रवाहायाः मृदुप्रकृतेरपि शिलाकूटविदारिण्याः प्रसन्नहृदयाया अपि बहुळपङ्कपूरितान्तरायाः निम्नगामिन्या अपि समुद्धृतसमग्रलोकायाः भङ्गभ्रमचपलाया अपि स्थिरगम्भीरमधुराकृतेः कावेर्यास्तटभुवि मनोविनोदाय वृन्दावनं नाम मनोनयनानन्दनं नन्दनवनकल्पमनल्पशिल्पसुन्दरं भुवनाकल्पमकल्पयत् ॥

सिन्धौ सेतुनिबन्धेन साधर्म्यं रामकृष्णयोः ।<br>
किन्त्वेकः स्वार्थपरमः परः परहितादरः ॥ ११ ॥<br>
या नद्यो ये च गिरयः यद्वनं ये च निर्झराः ।<br>
या नगर्यः पुराप्यासन् सम्प्रत्यपि त एव ते ॥ १२ ॥<br>
अभिज्ञे कृष्णराजेन्द्रे नृपेषून्नतकन्धरे ।<br>
प्रसाधयति राजन्ते प्रत्यग्रोन्मिषिता इव ॥ १३ ॥

प्रकीर्णकुसुमारम्यशाड्वलास्निग्धकुट्टिमाः ।
सुसम्मृष्टा विराजन्ते कृत्रिमा वनराजयः ॥ १४ ॥
शिलाविभङ्गैस्सुदृढैश्चतुरश्रैस्समोन्नतैः ।
उत्तानादवरोहिण्यः क्लृप्तास्सोपानपङ्क्तयः ॥ १५ ॥
विचित्रकुसुमापीडाः स्निग्धपाटलपल्लवाः ।
लतावितानसंश्लिष्टा विराजन्ते तरुव्रजाः ॥ १६ ॥
पुष्पासवमदाध्मातभ्रमद्भ्रमरपङ्क्तयः ।
शोभन्ते कुसुमारामाः स्थगितार्कमरीचयः ॥ १७ ॥
सितोपलसमुत्कीर्णा कुट्टिमान्तरवीथिका ।
वनान्तलक्ष्मीसीमन्तरेखेव धृतमौक्तिका ॥ १८ ॥
अभिवृद्धतृणाङ्कूरश्यामले कुट्टिमस्थले ।
विभाति पन्थास्संमृष्टः छायापथ इवाम्बरे ॥ १९ ॥
लतावितानैस्तरुभिः पुष्पोपगफलोपगैः ।
सरोभिर्जलपुष्पाढ्यैर्विभात्युपवनं महत् ॥ २० ॥
वल्लर्यः कुसुमोत्तंसाः पल्लवांशुकसंवृताः ।
अभिरूपद्रुमा श्लेषनिर्वृता भान्ति सर्वतः ॥ २१ ॥
परीवाहतटोपान्तसंरूढयवसांकुराः ।
शिखाग्रलग्नकणिका भूषिता इव मौक्तिकैः ॥ २२ ॥
सीकरा मरुदुत्कीर्णाः पर्यस्ता धरणीतळे ।
विलीयमाना दृश्यन्ते हिमानीकरका इव ॥ २३ ॥
यन्त्रोपकरणैश्चित्रैः स्फुरत्कान्तिविसारिभिः ।
प्रवाहाः स्फुरितच्छाया राजन्ते रोहितोपमाः ॥ २४ ॥
स्फाटिकक्षोदसङ्काशाः पद्मरागमणिप्रभाः ।
माहेन्द्रनीलरुचिरा विद्रुतस्वर्णपिञ्जराः ॥ २५ ॥

विकीर्णमल्लिकाकाराः कर्णिकारसुमोज्वलाः ।
पाटलीगुच्छसच्छायाः फुल्लहल्लकरोचिषः ॥ २६ ॥
उद्वेल्लद्बुद्बुदावर्ताः क्वथदिक्षुरसोपमाः ।
जलोच्छ्वासा विराजन्ते शबलैर्दीपकोरकैः ॥ २७ ॥
नलिकामुखनिष्ठ्यूता बिसकाण्डोपमा झराः ।
दुग्धकोशलिकाकाराः मानसं मदयन्ति हि ॥ २८ ॥
हीररत्नसमुत्कीर्णा वैडूर्यस्तम्भराजयः ।
उद्गता इव शोभन्ते भित्त्वेव वसुधातलम् ॥ २९ ॥
सेतुसंरोधसामर्षा समुद्विग्ना कवेरजा ।
मन्दोष्णबाष्पधाराभिर्निश्वसन्तीव भाव्यते ॥ ३० ॥
उत्पतद्भिर्निपतितैस्सीकरैर्बद्धमण्डलैः ।
आश्लिष्येते रोदसीव समानप्रेमसङ्गते ॥ ३१ ॥
ग्रीष्मसूर्यांशुसन्तप्तजनतानिर्वृतिक्षमम् ।
किन्नु धारागृहं क्लप्तं तुहिनोद्गारिसीकरैः ॥ ३२ ॥
वैद्युतानलनिष्टप्तास्सरसीजलराशयः ।
उत्सिच्यन्त इवोद्भ्रान्ता क्वथन्त इव फेनिलाः ॥ ३३ ॥
क्रौञ्चरन्ध्रसमुड्डीनाश्चञ्चुलग्नबिसाङ्कुराः ।
मराळा इव राजन्ते सीकराबद्धमण्डलाः ॥ ३४ ॥
यन्त्रोद्भ्रान्ताः पयोधाराः प्रदीपतरळत्विषः ।
अभितः पातुका भान्ति विकीर्णमणिसन्निभाः ॥ ३५ ॥
जलान्तराळविस्फूर्जज्ज्वालास्फटिकसंपुटैः ।
विद्योतन्ते परीवाहास्संवृतौर्वानला इव ॥ ३६ ॥
सेतुः सागरसौन्दर्यं सर्वाङ्गीणविलोचनैः ।
प्रदीपमालाव्याजेन पश्यतीव निशामुखे ॥ ३७ ॥

स्कन्धान्तराळसंश्लिष्टैः हरितच्छदसंवृतैः ।
निशि दीपैः प्रकाशन्ते द्रुमाः कोरकिता इव ॥ ३८ ॥
नागराजफणारत्नकान्तिसंवळितेव या ।
दीपमण्टपिका भाति जलान्तःप्रतिबिंबिता ॥ ३९ ॥
द्रुमाग्रे वल्लरीकुञ्जे शैलेषु सरसीषु च ।
अन्विष्यान्विष्य बाधन्ते प्रदीपास्तिमिरोच्चयम् ॥ ४० ॥
अगाधसलिलागारे सागरे प्रतिबिंबिताः ।
दीपव्रजा विराजन्ते बाडबाग्निशिखा इव ॥ ४१ ॥
अभिन्धनमहाज्वालासंप्लोषचकिता इव ।
कुल्यामुखेन निर्यान्ति चोरमार्गगता इव ॥ ४२ ॥
लताप्रतानसंछन्ना दिनच्छाया तमस्विनी ।
ज्योतिष्मतीव रजनी दीपमालापरीवृता ॥ ४३ ॥
नैवाकृतिरपामस्तीत्याहुर्वैशेषिका बुधाः ।
मृषोद्यन्तत्प्रथयितुं कावेरीसंश्रिताकृतिम् ॥ ४४ ॥
स्पन्दसे जलरूपेण भ्राजसे वह्निरूपतः ।
दुर्विभाव्यं तवैश्वर्यं व्यक्ताव्यक्तेतरासि च ॥ ४५ ॥
उपलब्धिफलं चक्षुर्मनः प्राप्तार्थनिर्वृतम् ।
सैषोक्तिर्हि तव श्लाघा फल्गुरन्यो गुणस्तवः ॥ ४६ ॥
सुन्दरः शोणशैलेन्द्रो रुचिरा सा शरावती ।
वृन्दावनस्य सौन्दर्यमतितद्द्वयमीर्यते ॥ ४७ ॥
ते त्रयः कविसर्वस्वं निर्झरारण्यभूभृतः ।
प्रायः कवीनां व्याहारास्तद्गुणस्तव निर्वृताः ॥ ४८ ॥
इन्दीवरोत्खचितशोणसरोजनद्ध
चांपेयसंवलितपल्लवमालिकाभाः ।

किम्मीरदीपकलिकास्फुरदंतराळाः
रींगत्तरङ्गकुटिलाः कृतकाः प्रवाहाः ॥ ४९ ॥
अभिमुखनळिका स्स्यादुज्जिहानास्समन्ता-
द्भ्रमणरयविकीर्णास्सीकरा सारवर्षाः ।
स्थगितरविकरौघाः स्थूलमुक्ताफलाभाः
सितपटभवनानां भ्रान्तिमापादयन्ति ॥ ५० ॥
करांजलिकमंडुलुक्षारितवारिधारोच्चल-
त्सुधामधुरसीकरैर्निखिललोकरक्षाकरैः ।
प्रवर्तयति याधुनीं कलुषवृन्दविध्वंसिनीं
कवेरतनुसंभवा दिशतु भूरिभद्राणि नः ॥ ५१ ॥
घटीमुखविसृत्वरप्रसृतदुग्धधारा किमु
प्रसन्नहृदयांबुजस्स्रुतमरंदधाराथवा ।
दयावतिदयासुधांबुधितरंगमालानुतिं
मृदुस्मितकरम्भितप्रचुरवारिधारा ननु ॥ ५२ ॥
अवग्रहविनिग्रहे विधृतविग्रहानुग्रहा
सुधामधुरिमाधरीकरणकारिणा वारिणा ।
धुनोतु निखिळापदं भुवि तनोतु चेतोमुदं
श्रियं दिशतु भूयसीं सुकृतिलोकसाधीयसीं ॥ ५३ ॥
सकलभुवनरक्षादीक्षिता नेक्षसे मां
व्यवहितनिकटस्था न प्रलापं शृणोषि ।
मयि ननु कुलदासे यद्युपेक्षां कृषीष्ठाः
भवतु मम हि चेतस्त्वत्स्मृतिं नैव जह्यात् ॥ ५५ ॥
अधीतिस्साहिती यस्य विनेता श्रीजगद्गुरुः ।
सुब्रह्मण्यस्य कृतिषु जीयाद्वृन्दावनं चिरम् ॥ ५५ ॥

# योगवादः

## नव्यन्यायचरितं च

आस्थानविद्वान् काशी प्राणेशाचार्यः,
श्रीमन्महाराज संस्कृतमहापाठशाला, मैसूरु.



मैसूरुः
राजकीय शाखामुद्रालये समुद्रात
१९३७

# योगवादस्य विषयानुक्रमणिका.

# योगवादे निर्दिष्टाः

## आकरग्रन्थाः

---

# योगवादस्य शुद्धाशुद्धपत्रिका

| पृष्टे | पङ्क्तौ | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| १ | २० | मव | मेव |
| २ | ११ | शास्त्र | शास्त्रे |
| ९ | १ | ञर्या | मञ्जर्या |
| ११ | १४ | प्यव | प्येव |
| ,, | २० | न्धनो | न्धनः |
| १२ | ४ | वयं | वयवं |
| ,, | १० | प्रत्यक्षं | प्रत्यक्षे |
| ,, | १९ | वर्स्थित | वस्थित |
| १५ | ८ | यस्म त्सा | यस्मात्स |
| ,, | १३ | न्नत्र स | न्न त्रस |
|  | १४ | सृत्यवै | सृत्यैव |
| १६ | २ | पक्षायीः | पक्षीयाः |
| ,, | १३ | मुररीरी | मुररी |
| ,, | १८ | घ्वणुक | द्व्यणुक |
| १७ | १८ | त्येकवचनं | त्येकं वच |
| १९ | २ | प्रतिभेदो | व्यतिभेदं |
| २१ | १७ | स्सता | स्सत्ता |

| पुटे | पङ्क्तौ | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| २७ | १८ | तस्मत्प्रो | तस्मात्प्रो |
| २८ | १० | वेलया | वेलाया |
| ३० | २८ | कनेवं | कनेनैवं |
| ३१ | ७ | नोक्त | येनोक्त |
| ३७ | १५ | प्रामाणेन | प्रमाणेन |
| ३८ | ३ | तद्दारा | तद्द्वारा |
| ३९ | ६ | तात्सर्यण | तात्पर्येण |
| ,, | १३ | श्चरितश्च | श्चरिताश्च |
| ,, | २४ | र्धावीभूमा | द्यावाभूमी |
| ४१ | १६ | श्चैव | श्चैवं |
| ४३ | ३ | सम्प्रातिनः | सम्प्रातितनः |
| ५० | ७ | अवधीरिता | अवधारिता |
| ५२ | ८ | ानरा | निरा |
| ५३ | ९ | तेऽपि थागो | ते पिथागो |
| [illegible] | १२ | 1606-1541 B.C. | 1541-1606 A.D. |
| ,, | १३ | 1637-1572 B.C. | 1572-1637 A.D. |
| ,, | १४ | 1645-1574 B.C. | 1574-1646 A.D. |

वि. सू.—१६ तमेपुटे १४ तमपङ्क्तौ " परमाणुशब्दो निपातितः " इत्यधिकम्."

# समालोचना

## १. पूना ओरियेण्टलिस्ट्.

**वार्षिकं मूल्यं : भारतमण्डले—षड्रूप्यकाणि.**

अहो ! भारतेयानामयं महान् शुभोदर्कः, यत्पूनाभिधपुण्यनगरे प्राच्यविज्ञाननाम्नी (Orientalist) काचित्त्रैमासिकपत्रिका पण्डिताग्रगण्यैर्विद्यासुधाकर डाक्टर् हरदत्तशर्ममहोदारैः प्रकाश्यमाना विराजत इति । तत्पात्रिकायाः प्रथमसञ्चिकावलोकनेनैव अनेके प्राचीनापूर्वविषया विदिता भवन्ति । अस्याः पत्रिकायाः प्रकाशनसमारम्भे एते सदुद्देशाः सम्पादकमहाशयैर्निर्दिष्टाः—

१. प्राच्यविज्ञानविषयाणां कूलङ्कषविचारः ॥
२. अलभ्यमानानां मुद्रितामुद्रितग्रन्थानां मुद्रणमुखेन तेषां प्रचारः ॥
३. दुर्गमविषयोपेतानां प्राचीनग्रन्थानां आङ्गलभाषया सुविशदं परिवर्तनम् ॥
४. पाश्चात्यप्राच्यपण्डितैः प्राच्यविषयानधिकृत्य लिखितग्रन्थानां सूचीपट्टिकाप्रकाशनम् । इति ॥

सर्व एते समुद्देशाः प्रथमसञ्चिकायामेव प्रगल्भमारब्धाः । एतादृशपत्रिकाप्रदर्शनमन्तरेण एतादृशमहाविषयाः सामान्यपाठकानां दुरवगाहा भवेयुः ॥

सारनाथक्षेत्रे उपलभ्यमानं बौद्ध "धर्मचक्रप्रवर्तन" व्यञ्जकशिल्पं, चतुर्द्वारयुतं, षोडशदलोपेतं, मानससरोवरकमलाकारशिल्पं, इत्यादीनां शिल्पाकूतविचारः सर्वत्र सुविमर्शसह इति प्रतिभाति । गौडपादकारिकासु आगमप्रकरणस्थानाद्यविंशतिश्लोकान् श्रुतित्वेनाङ्गीकर्तुं साधकबाधकहेतुनिर्देशः निपुणतरं निरूपितः । "उपचार"

शब्दार्थनिर्धारणाय, गोतमवात्स्यायनानन्दवर्धनाभिनवगुप्तमण्डनकुन्तकमहिमभट्टमुकुलभट्टमम्मटविश्वनाथविद्याधरादिशास्त्रकारैः कृता लक्षणपरिष्कारा ईदृशा इति निरूपणेन तेषां ग्रन्थानामवलोकनं विना, 'उपचार' शब्दार्थनिर्णयः झटित्यल्पायासेन पाठकानां बुद्धिमवगाहते। कौटिल्यस्यार्थशास्त्रे विद्यमानानां केषाञ्चिद्विषयाणामैतिह्यविमर्शप्रकरणे, दण्डस्य वृत्तान्तोऽतिकुतूहलं जनयति। जयदेवपीताम्बरसूरिणोः कालनिर्णयः सोपपत्तिकमुपपादितः। अमरव्याख्याकर्तृक्षीरस्वामिवृत्तान्तविमर्शश्च विस्तरेणात्र व्याकृतः। अधुनातनपण्डितानां ग्रन्थविमर्शात्मकबुद्धिकृषेः फलभूतानां नूतनग्रन्थानां विषयसङ्ग्रहपूर्वकं प्रकाशिता सूचीपट्टिका बहूपकारकारका भवति। सभाष्यन्यायशास्त्रस्य मुद्रणेन साकं तस्य यावद्ग्रन्थस्य आङ्ग्लभाषया साक्षरपरिवर्तनविवरणादिप्रकारः महामहोपाध्याय डाक्टर् गङ्गानाथ झाभिधमहाशयानां संस्कृतपाण्डित्यं, आङ्ग्लभाषाप्रागल्भ्यं लोकोपकारकमनोवृत्तिं च सम्यक् प्रथयति। एवमादिविज्ञानप्रकटनेनेयं प्राच्यविज्ञानपत्रिका सर्वसमादृता सती सर्वमान्या भवति। अतः सर्वजनोपकारकमहाकार्यारम्भकृतां एतत्पत्रिकाप्रकाशकमहाशयानां श्रीमतां विद्यासुधाकर डाक्टर् हरदत्तशर्मणां सर्वे जनाः कृतज्ञा भवन्तीति सप्रमोदं स्वाशयमाविष्कुर्महे॥

## २. मीमांसाप्रकाशः.

**वार्षिकं मूल्यम्: भारतमण्डले पञ्चरूप्यकाणि; विभिन्नदेशे सप्तरूप्यकाणि.**

पूनानामकपुण्यनगरे श्रीमद्भिर्विद्वद्भिः मि. सि. किञ्जवडेकरित्युपाध्यलङ्कृतवामनशास्त्रिमहाशयैः प्रतिष्ठापितया मीमांसाग्रन्थप्रकाशकसमित्या प्रकाश्यमानायाः मीमांसाप्रकाशाख्यमासिकपत्रिकायाः प्रथमसम्पुटस्य प्रथमा सञ्चिका सावधानमवलोकितास्माभिः। तत्र सूचितानां विषयाणां सदुद्देशानां च विमर्शेन परमानन्दस्सञ्जातः॥

मीमांसा हि सकलपुरुषार्थहेतुः, सर्वविद्यासञ्जीवननिदानमिति सर्वे आस्तिकास्सम्यग्जानन्ति । तथाचोक्तम् भट्टकुमारिलपादैः "मीमांसाऽस्यातु विधेयं सर्वविद्यान्तराश्रिता" । अतोऽस्याः पत्रिकाया उपादेयतां प्रति न कस्यापि विचिकित्सा प्रादुर्भवेत् । परन्तु अस्यास्सञ्चिकाया द्वितीयपुटे प्रदर्शितानां गृहनिर्माणशास्त्रादिद्वादशशास्त्राणां मूर्धन्यभावमापन्नस्य मीमांसाशास्त्रस्य सर्वत्र सर्वथात्यादरेण पुरस्कारो भवतीति, तत्प्रकाशहेतुभूताया एतत्पत्रिकाया उपादेयताऽवश्यंभाविनीत्याकलयामहे ॥

"धर्म एव हतो हन्ति धर्मो रक्षति रक्षितः" ।

"आचारः प्रथमो धर्मः" इत्याद्यभिजनोक्तिमाद्रियमाणानामास्तिकानां मीमांसाशास्त्रमेव शरणम् । येन दर्पणे प्रतिबिम्बवत् सत्त्वप्रचुरान्तःकरणे, यागादिकर्मोपकारक–समाजोपकारक–देवतोपासनोपकारकादिसर्वविषयेष्वितिकर्तव्यता सुविशदं परिस्फुरति । इतिकर्तव्यताशास्त्रप्रचारविषये समुद्दिष्टेषूपायेषु, "शास्त्रप्रयोगसाहित्येन मीमांसाशास्त्राध्ययनाध्यापने" इत्ययं विषयः मुख्यतमः ॥

अन्येऽप्युपाया अत्यन्तमपेक्षणीया एव । तत्र प्रथमोपायस्सर्वथाप्यप्रतिमो भाव्यः । द्वितीयोऽप्यद्वितीयस्सन्प्रथममेवापेक्षते । तृतीयस्य विस्तृतिस्सर्वप्रयत्नैस्साधनीया । चतुर्थोऽप्यार्यधर्मानुवर्ती भवेदित्याशास्यते । पञ्चमो वञ्चितो माभूदिति प्रार्थ्यते । षष्ठोऽखिलानामिष्टतमः । सप्तमोऽद्य सिद्धप्रायोऽपि तत्प्रवृद्धौ श्रद्धामपेक्षते । अष्टमः कनिष्ठ इति न कोऽपि जानाति । नवमो न भवत्यवमः । एवं सङ्ग्रहेण स्वाशयं निरूप्य, अस्याः पत्रिकायाः स्थायित्वं दृढप्रयत्ननिर्वाह्यत्वं लोकोपकारकारित्वञ्चाशास्य ग्रन्थप्रकाशकसमितिमभिनन्द्य, तत्सभ्यान्सम्पादकांश्च धन्यवादैस्सम्भावयामः ॥

# वादभूमिः.

## काचन विचिकित्सा.

श्रीमद्गोतमोपज्ञन्यायदर्शने तृतीयाध्यायद्वितीयाह्निके ६८ तमे सूत्रे [1] भगवता भाष्यकारेण वात्स्यायनमुनिना अदृष्टस्य परमाणुगुणत्व वादिनो मतं [2] सविस्तरमनूद्य निराकारि । तत्र न्यायवार्तिकतात्पर्यटीकायां टीकाकारा एतच्च मतं [3] जैनानामिति स्पुटमभ्यधुः । श्रीविश्वनाथपंचाननोऽपि तत्सूत्रवृत्तौ तथैवागादीत् ॥

परन्तु अधुना प्रचलितेषु जैनप्रबन्धेषु न क्वापि अदृष्टस्य परमाणु गुणता प्रत्यपादि । प्रत्युतात्मगुणतैवेति तन्निबन्धसन्दर्भोदाहरणपूर्वकं निरूपयिष्यामः ॥

१. जैनदार्शनिकः श्रीनेमिचन्द्रः 'द्रव्यसंग्रहे' प्राकृतप्रबन्धे आत्मैव पुद्गलकर्मफलसुखदुःखभोक्ता, तस्मात्स एवादृष्टाश्रयः [4] इत्यभिप्रैति ॥

२. जैनदर्शने परमप्रामाणिकतयाभ्युगते प्रमाणनयतत्त्वालोकालङ्काराख्यनिबन्धे 'अदृष्टवांश्चात्मे [5] ति विस्पष्टमेवावेदितम् । तद्ग्रन्थ व्याख्याता च रत्नप्रभाचार्यः 'अदृष्टमात्मानं बध्नाति, तदेवात्मनः पारतन्त्र्यस्य बद्धताया वा निमित्तं । तच्च पौद्गलिकं । यच्च तथाविधं तदेवान्यबद्धतायां शृङ्खलमिव निदानतामश्नुते । अदृष्टमपि शृङ्खलमिवात्मानं बध्नाति । अत एवादृष्टं पौद्गलिकमित्यादियुक्तिजालैरात्मगुणतामेवाभिप्रैति ॥

---

1 "तददृष्टकारितामितिचेत् पुनस्तत्प्रसङ्गोऽपवर्गे" न्या. सू ३ अ. २. आ. ६८ सू. 2 "कस्यचिद्दर्शनमदृष्टं नाम परमाणूनां गुणविशेषः क्रियाहेतुः"–न्या. भा. ३–२–६८. 3 "अपरे त्वार्हताः अदृष्टं परमाणुगुणं वर्णयन्ति" न्या. ता. टी. ३–२–६८ 4 "सुहदुक्खं पुग्गलकम्मफलं पभुं जेदि" द्रव्यसंग्रहः ९. 5 "चैतन्यस्वरूपः परिणामी कर्ता साक्षाद्भोक्ता स्वदेहपरिणामः प्रतिक्षेत्रं भिन्नः पौद्गलिकादृष्टवंश्चायम्" प्रमाणनये. ५६ सू.

३. अकलङ्कभट्टोऽपि तत्त्वार्थराजवार्तिके[1] सुखदुःखहेतुरदृष्टनामात्मधर्मः गतिस्थितिकरणमिति न वक्तव्यं, पुद्गलेषु तस्याभावात् । पुद्गलपदार्थो ह्यचेतन इत्यादियुक्तिजातैरदृष्टातिरिक्तधर्माधर्मयोरेव गतिस्थितिकारणतां व्यवस्थाप्यादृष्टस्यात्मगुणतामेवाङ्गीकरोति । किंबहुना, सोऽपि "अदृष्टो नामात्मगुणोऽस्ति" इति स्पष्टमाचष्टे । एवमेव अदृष्टस्य मनोगुणतापि जैननयसिद्धा न भवतीति ज्ञातव्यम् । किंच जैनमते परमाणवः मनश्च पुद्गल[2]पदार्थः । किन्तु तात्पर्यटीकायां मिश्रमहोदयः पुद्गलशब्देनात्मानमभिप्रैति[3] ॥

तस्माद्विचिकित्साद्वयमेवं सम्मुखीभवति—

१. आर्हतमते अदृष्टस्य परमाण्वादिवृत्तिता प्राचीनप्रबन्धेषु यत्र कुत्र वा समसाधि?

२. तन्मते पुद्गलशब्द आत्मवाचकत्वेन यत्र कुत्र वा प्रायोजि प्रतनप्रबन्धेषु? इति ॥

प्रोक्तविशयद्वयं सदयं परिहरेयुः दर्शनविचाररसिकाः पंडितप्रवराः इति सविनयमभ्यर्थयते ॥

**काशी प्राणेशाचार्यः.**

---

1 "अदृष्टहतुके गतिस्थिती इति चेन्न पुद्गलेषु तस्याभावात्" तत्त्वार्थराजवार्तिकं ५ अ. ३७ सू. 2 "पूरणाद्गलनाद्देहे पुद्गलाः परमाणवः" इति विष्णुपुराणम्. 3 "तच्च स्वकादेवादृष्टात्पुद्गलस्य सुखदुःखोपभोगं साधयाति । न तु पुद्गलस्य धर्मोऽदृष्टमिति सांख्यवत्तेषामपि पुनस्तत्प्रसंगोऽपवर्गे." ता. टी. ४११.

**सामान्यतः जैनमतपरिदर्शक चित्रमेतत्**



॥ श्रीः ॥

श्रीमन्महाराजसंस्कृतमहापाठशालापत्रिका

# विषयसूचना

## सम्पादकीयसमितिः

---

१. श्रीमन्तः अर्थशास्त्रविशारदाः विद्यालङ्काराः महामहोपाध्यायाः डाक्टर् आर्. शामशास्त्रिणः, बि.ए., पिएच्.डि., एं.आर्.ए.एस्., विश्रान्त मैसूरु प्राच्यकोशागाराध्यक्षाः शासनविमर्शशाखाध्यक्षाश्च

२. श्रीमन्तः प्रोफेसर् डि. श्रीनिवासाचार्याः, एं.ए., मैसूरु महाराजाकालेज् संस्कृत प्रधानोपाध्यायाः

३. पण्डितरत्नं धर्माधिकारिणः ब्र. श्री. काशी शेषवेङ्कटाचलशास्त्रिणः

४. महामहोपाध्यायाः पण्डितरत्नं ब्र.श्री. लक्ष्मीपुरं श्रीनिवासाचार्याः, विश्रान्तमहापाठशालाविशिष्टाद्वैतवेदान्तप्रधानोपाध्यायाः

५. महाविद्वांसः ब्र. श्री. क. गोपालकृष्णशास्त्रिणः, महाराजाकालेज् संस्कृतपण्डिताः

६. महाविद्वांसः ब्र. श्री. करूरु शेषाचार्याः, महापाठशाला ज्यौतिषप्रधानोपाध्यायाः

७. विद्वांसः ब्र. श्री. एस्. वेङ्कटाचार्याः, महापाठशाला साहित्यप्रधानोपाध्यायाः

८. श्रीमन्तः एस्. बि. कृष्णमूर्तयः, एं.ए., महापाठशालाध्यक्षाः (सम्पादकाश्च)

## विज्ञप्तिः

भो भो महाशयाः! सहृदयाः! सप्रश्रयमिदमिदानीं विज्ञापयामः–संस्कृतविद्याभिमानिनः पुरुषप्रवराः यं कंचन विषयमधिकृत्य संस्कृतभाषामयं अनतिसंक्षिप्तविस्तरं उपक्रमोपसंहारपरिकर्मितं कस्याप्यनुद्वेगकरं अचर्चितपूर्वं कालदेशदशानुगुणं प्रपञ्चोपकारकरं धर्माद्यविरुद्धं "जीर्णमङ्गे सुभाषितम्" इति निर्वेदस्य "वीरा वाचैव केवलम्" इत्यपवादस्य वा प्रशमकरं प्रस्पष्टमुख विलासमुपन्यासं विलिख्य यदि प्रेषयेयुर्महान्तः, तेभ्यो महद्भ्यः समर्प्य अनन्तान् धन्यवादान् पत्रिकायामस्यां तमुपन्यासं पारयामः प्रकाशयितुम् ॥

यदीच्छति वशीकर्तुं जगदेकेन कर्मणा ।
परापवादसस्येभ्यो गाश्चरन्तीर्निवारयेत् ॥
न हीदृशं संवननं त्रिषु लोकेषु विद्यते ।
दया मैत्री च भूतेषु दानं च मधुरा च वाक् ॥

संपादकस्य.

---

## मूल्यप्रकारः

१. अस्याः पत्रिकायाः वार्षिकम् अग्रिमं मूल्यं सार्धैकरूप्यकं प्रापणव्ययपृथक्कृतम्. (भारतमण्डले.)
२. विद्यार्थिनां पुनः एकरूप्यकम्. प्रापणव्ययपृथक्कृतम्.
३. विभिन्नदेशे सपादरूप्यद्वयम् (3s.) प्रापणभृतिः पृथक्.

पत्रिकाप्राप्तिस्थानम्,

**संपादकः,**

श्रीमन्महाराजसंस्कृतमहापाठशाला, मैसूरु.

## सधन्यवादमस्माभिरङ्गीकृता एताः विनिमयरूपाः पत्रिकाः

---

1. संस्कृतसाहित्यपरिषत्पत्रिका, श्रीनगरम्.
2. संस्कृत साहित्यपरिषत्पत्रिका, कल्कत्ता
3. उद्यानपत्रिका, तिरुवाडि.
4. सुप्रभातम्, काशी.
5. सूर्योदयः, काशी.
6. संस्कृतरत्नाकरः, जयपुरम्.
7. संस्कृतपद्यवाणी, कल्कत्ता.
8. मञ्जूषा, कल्कत्ता.
9. अच्युतः, काशी.
10. कल्याणम्, गोरखपुरम्.
11. मधुरवाणी, बेलगाम्.
12. देववाणी, कल्कत्ता.
13. The Mythic Society Journal, Bangalore.
14. Annals of the Bhandarkar Oriental Research Institute, Poona.
15. Review of Philosophy and Religion, Poona.
16. Journal of Oriental Research, Madras.
17. The Law College Magazine, Madras.
18. Sunday Edition "The Hindu," Madras.
19. The Aryan Path, Bombay.
20. The Theosophical Movement, Bombay.
21. The Philosophical Quarterly, Calcutta.
22. Karnataka Historical Review, Dharwar.
23. Ardra, Ceylon.

24. "Yoga," Bulsar.
25. The Vaitarini, Chowdwar.
26. Poona Orientalist, Poona.
27. The Mimansa Prakasa, Poona.
28. Brahmavidya, Adyar, Madras.
29. ಆಂಧ್ರ ಸಾಹಿತ್ಯಪರಿಷತ್ಪತ್ರಿಕಾ, ಕಾಕಿನಾಡ.
30. ಭಾರತೀ, ಮದ್ರಾಸು,
31. ಸನಾತನಮತಪ್ರಚಾರಿಣೀ, ಭಟ್ನವಲ್ಲಿ.
32. ಜಯಕರ್ಣಾಟಕ, ಧಾರವಾಡ.
33. ಸದ್ಬೋಧಚಂದ್ರಿಕೆ, ಆನಂದವನ.
34. ವಿಶ್ವಕರ್ಣಾಟಕ, ಬೆಂಗಳೂರು.
35. ತಾಯಿನಾಡು, ಬೆಂಗಳೂರು.
36. ಅಧ್ಯಾತ್ಮಪ್ರಕಾಶ, ಬೆಂಗಳೂರು.
37. ರಂಗಭೂಮಿ, ಬೆಂಗಳೂರು.
38. ಕರ್ಣಾಟಕ ಸಾಹಿತ್ಯಪರಿಷತ್ಪತ್ರಿಕೆ, ಬೆಂಗಳೂರು.
39. ಕಾದಂಬರೀಸಂಗ್ರಹ, ಚಾಮರಾಜನಗರ.
40. ಪ್ರಬುದ್ಧಕರ್ಣಾಟಕ, ಮೈಸೂರು.
41. ವಿವೇಕಾಭ್ಯುದಯ, ಮೈಸೂರು.
42. ಪೂರ್ಣಬೋಧ, ಮೈಸೂರು.
43. ಸಾಧ್ವೀ, ಮೈಸೂರು.
44. ಗರಿಕೆ, ಮೈಸೂರು.

॥ श्रीः ॥

# न्महाराजसंस्कृतमहापाठशालापत्रिका

प्रतिमासत्रयं प्रकटीक्रियमाणा

"कुर्वन्नेवेह कर्माणि जिजीविषेच्छतं समाः"

(ईशोपनिषत्)


.२] १९३६ [सञ्चिका ४


## वर्णोपदेशः.

! त्वं प्रकृष्टोऽसि न संशयोऽत्र
प्रकृष्टिपत्राहर एष तेऽहम् ।
याहि वर्णक्रमकेळिभङ्गा-
पराधिनस्ते निगळः किलायम् ॥ १ ॥

यान्तमादौ प्रणवसुघटितं यो "न मोपेतनारा-
र्गान्मध्ये वहन्तं जपति मनुवरं न्यासचिन्तार्चनाद्यैः ।
ति श्रियं स्वप्रियतममखिलं विन्दते चित्तशुद्धिं
चाऽन्ते तदन्ते भजति हरिपदं मध्यनाडी प्रणाळ्या ॥२॥

कार ! ढक्काधरशब्दसूत्रे
निरर्थके माऽस्तु तव प्रवेशः ।
ामग्निमीळे इति पूर्ववेदः
स्वपूर्वमन्त्रे शिरसैव धत्ते ॥ ३ ॥

ळकार! शम्भोर्ढक्का मां
नाशंसदिति मा शुच ।
चन्द्रमौळिः करे ढक्कां
धत्ते त्वां तु स्वमस्तके ॥ ४ ॥

ळवर्ण! मा भजोद्वेगं
नास्मीति शिवसूत्रगः ।
"अग्निमीळे" इतीशेन
गीतासि हरिपूजने ॥ ५ ॥

ङकार! कर्णाटलिपिस्वरूपे
त्वामेकनेत्रं परिभाव्य धीराः ।
बलीन्द्रयागापहृतैकनेत्रं
शुक्रं न के वृत्तविदः स्मरन्ति? ॥ ६ ॥

ङकार! कण्ठेऽपि च नासिकायां
"[1]ङ" वार्जितानामासि तद्गतां च ।
किंतु त्वमब्दोषगृहीतघोणान्
नस्यप्रियांश्चापि कुतो जहासि ॥ ७ ॥

ङ! त्वं मूर्धनि लोचनानि भजसे कर्णाटवर्णाङ्कके
तत्रैकं भजसे पराक् तदितरे धत्से प्रतीची ध्रुवम् ।
तेष्वेकं स्फुटतारकं यदपरे निस्तारके ध्यानतः
तत्त्वां योगरतं जगद्धितपरं संभावये शङ्करम् ॥ ८ ॥

---

1 "ङः–विषयस्पृहा" इति मेदिनी.

घटपदाद्यथाकथंचिदुपस्थितस्य गगनादरपि शाब्दबोधविषयत्वापत्त्या शक्तिर्नियतमभ्युपेयैव । तादृशशक्तेर्ग्राहकाणां शिरोमणिर्व्याकरण-मेवेति—

शक्तिग्रहं व्याकरणोपमान-
कोशाप्तवाक्याद्व्यवहारतश्च ।
वाक्यस्य शेषाद्विवृते र्वदन्ति
सान्निध्यत स्सिद्धपदस्य वृद्धाः ॥

इत्यभियुक्तोक्त्या लभ्यते । वाक्यार्थज्ञानजनकपदार्थज्ञाने प्रकृति-प्रत्ययविभागपरिशीलनमेव निदानमिति तदपि व्याकरणाधीनमेव ॥

तथा रघुवंशकाव्यादीन् गुरुमुखतोऽधीतवद्भिरेव समुचित-साहित्यज्ञानैः बुभुत्सुभिर्व्याकरणशास्त्राध्ययनमारभ्यत इति व्याकरणा-ध्ययनौपयिकत्वं साहित्याध्ययनस्यापि । आपणे क्रय्यत्वेन विन्यस्त वस्तुनः क्रेत्रा क्रयणानन्तर मुपयोगे कृत एव यथा साफल्यं तथैव व्याकरणनिष्पादितानां शब्दानामपि साहित्यपण्डितवर्यैः कविभिरुपयुक्तत्व एव साफल्यं भवति । अतो व्याकरणशास्त्रसाफल्य-मपि साहित्यद्वारैवेति साहित्यस्य व्याकरणोपकारकत्वाच्च परस्परोपकारके इति तयोर्मैत्री सर्वसम्प्रतिपन्ना ॥ अतएव च भर्तृहरिः—

केयूराणि न भूषयन्ति पुरुषं हारा न चन्द्रोज्ज्वलाः
न स्नानं न विलेपनं न कुसुमं नालङ्कृता मूर्धजाः ।
वाण्येका समलङ्करोति पुरुषं या संस्कृता धार्यते
क्षीयन्तेऽखिलभूषणानि सततं वाग्भूषणं भूषणम् ॥

इत्यनेन व्याकरणसंस्कृतवाण्या एव सर्वालङ्कारकत्वं प्रतिपादितवान् । तत्रैव—

'वाण्येका समलं करोति पुरुषं या असंस्कृता धार्यते' ।

इत्यर्थान्तरस्यापि प्रतिपादकेन तेनैव वाक्येन व्याकरणासंस्कृतवाण्या पुरुषस्य निन्द्यत्वमप्यभिप्रैति ॥

तथैव भोजसंसदि महाकवि र्माघोपि—

नागो भाति मदेन खं जलधरैः पूर्णेन्दुना शर्वरी
शीलेन प्रमदा जवेन तुरगो नित्योत्सवै र्मन्दिरम् ।
वाणी व्याकरणेन हंसमिथुनै र्नद्य स्सभा पण्डितैः
सत्पुत्रेण कुलं त्वया च वसुधा लोकत्रयं विष्णुना ॥

इति भोजप्रशंसकपद्ये वाण्याः व्याकरणेनैव उल्लासं प्रतिपादितवान् । एतादृश शब्दशास्त्रमर्यादानुसारिसाहित्यस्य सारोपि वैयाकरणै स्साहितीविद्वद्भिः भट्टमुरार्यादिभिरेव विज्ञायत इत्यपि निर्विवादम् ॥

तदुक्तम्—

देवीं वाच मुपासते हि बहव स्सारं तु सारस्वतं
जानीते नितरामसौ गुरुकुलक्लिष्टो मुरारिःकविः । इत्यादि ॥

तथा शब्दचित्रयमकादिकाव्येषु पदतदेकदेशादिभिरपि व्यज्यमानव्यङ्ग्यार्थप्रतिपादकेषु च काव्येषु व्याकरणस्यैव परम उपकारः आद्रियते सर्वैरपीति साहित्यस्य इतरशास्त्रापेक्षया व्याकरणशास्त्रेणैव साकं मैत्री परमेति निष्पन्नम् ॥

## तस्य व्याकरणमेव जीवातुः

अथ चैवं शब्दशास्त्रनियमानुसारिशब्दगुम्भगम्भीरस्यैव पूर्वोक्तलक्षणाक्रान्तस्य साहित्यस्याप्यङ्गिशास्त्रत्वे सिद्धे तस्य व्याकरणमेव जीवातुरित्यपि प्रतिभाति । तथाहि—

प्रायशो वैयाकरणा एव माघमुरारिमम्मटभीमसेनादयः पण्डितप्रकाण्डाः आत्मीयव्याकरणपाण्डित्यप्रकाशनद्वारा बहून् साहित्यग्रन्थान् विरचय्य जगत्यस्मिन्नतिपूज्यपदवीमारोपिताः । काव्यप्रकाश-

व्याख्यासुधासागरात्मकग्रन्थकर्त्रा व्याकरणशास्त्रविशारदेन भीमसेन-पण्डितेन वाग्देवताऽपरावतारत्वेन वर्णितः नागेशादिभिर्वैयाकरणोद्दाम-पण्डितैः स्वकीयसिद्धान्तविषये प्रमाणीक्रियमाणश्च मम्मटमहाकविः स्वकृते काव्यप्रकाशाख्यग्रन्थे—

इदमुत्तममतिशयिनि व्यङ्ग्ये वाच्याद्ध्वनिर्बुधैः कथितः ।

इति सूत्रव्याख्यानावसरे 'बुधैर्वैयाकरणैः प्रधानभूतस्फोटरूपव्यङ्ग्य-व्यञ्जकस्य शब्दस्य ध्वनिरिति व्यवहारः कृतः । ततस्तन्मतानुसारिभि-रन्यैरपि (आलङ्कारिकैरिति व्याख्या) न्यग्भावितवाच्यव्यङ्ग्यव्यञ्जन-क्षमस्य शब्दार्थयुगलस्य ध्वनिरिति व्यवहारः कृतः इति वैयाकरणान् श्लाघित्वा तदभ्युगतस्फोटवादमङ्गीकृत्य साहित्यस्यात्मभूत ध्वनिं ताननु-सृत्यैवाङ्गीकुर्मः इत्युद्घोषितवान् ॥

तत्रैव च द्वितीयोल्लासे—

संकेतितश्चतुर्भेदो जात्यादिर्जातिरेव वा ।

इति सूत्रे तद्वृत्तौ च वैयाकरणानां सम्मतश्चतुष्टयीपक्ष एवालङ्कारिक-सम्मत इति स्पष्टमुपपाद्य मीमांसकसम्मतं 'जातिरिति' पक्षमनास्था-सूचकवापदपुरस्कारेणोपन्यास्थत् । अयमेव चांशो व्याख्याकृद्भिः तत्रैव विशदीकृतः ॥

किञ्च तत्कृते शब्दव्यापारविचाराख्ये ग्रन्थेपि वैयाकरणसिद्धा-न्तसम्मत 'जात्यादिः' इति पक्षस्यैव स्वाभिमतत्वप्रदर्शनपुरस्सरं मीमां-सकाङ्गीकृतं 'जातिः' इति पक्षं निराकरोत् । एतेन मम्मटस्य वैयाक-रणत्वं वैयाकरणसम्मतस्यैवालङ्कारिकसम्मतत्वं च निर्धारयितुं शक्यते ॥

तथा काव्यप्रकाशे परिसंख्यालङ्कारप्रकरणे "प्रमाणान्तरावगत-मपि वस्तु शब्देन प्रतिपादितं प्रयोजनान्तराभावात् सदृशवस्त्वन्तर-परिच्छेदाय यत् पर्यवस्यति सा परिसंख्या" इति परिसंख्यालङ्कार-

विवरणवाक्यस्थपरिसंख्यापदमुपादाय वैयाकरणशिरोमणिः व्याकरण-दर्शनस्थापकश्च नागेशभट्टः परिशब्दोऽत्र वर्जनार्थकः, परेर्वर्जने इति पाणिनिस्मृतेः सङ्ख्या बुद्धिः ‘यत्सांख्यैः प्राप्यते स्थानं तद्योगैरपि गम्यते’ इति श्रीमद्भगवद्गीतावचनात् तेन वर्जनबुद्धिः परिसंख्या इत्यन्वर्थेयं संज्ञा ‘नियमोऽप्यत्र दर्शने (अलङ्कारशास्त्रे) उक्तलक्षणाक्रान्तत्वात्परिसंख्यैव’ इत्याभिधाय नियमपरिसंख्ययोर्वैषम्यमङ्गीकर्तॄणां मीमांसकानां मतमुपेक्ष्य आलङ्कारिका नियमपरिसंख्ययोरवैषम्यमङ्गीकुर्वतो वैयाकरणानेव प्रायशोऽनुसरन्तीति सूचितवान् ॥

तथैव पण्डितराजो जगन्नाथोऽपि तत्रैव प्रकरणे “सामान्यतः प्राप्तस्यार्थस्य कस्माच्चिद्विशेषाद्व्यावृत्तिः परिसंख्या” इति लक्षण मभिधाय “नियमोऽप्यत्र दर्शने निरुक्तलक्षणाक्रान्तत्वात्परिसंख्यैव पाक्षिकप्राप्तियुगपत्प्राप्तिरूपस्यावान्तरविशेषस्याविवक्षणात् अत एव वैयाकरणानां मते परिसंख्या नियमशब्देनोच्यते । तथाहि—कृत्तद्धित समासाश्चेत्यत्र समास ग्रहणं नियमार्थमिति हि तेषां सिद्धान्तः। तत्र हि समासे पाक्षिक्याः प्रातिपदिकसंज्ञायाः प्राप्तेरभावात्कथं नाम पराभिमतो नियम उपपद्यते । युगपद्धि समाससमासेतरपदसंघातयोरर्थवत्सूत्रं प्राप्तमिति परिसंख्या भवितु मर्हति. पूर्वतन्त्रे (मीमांसादर्शने) तु नियमपरिसंख्ययोर्भेदेन परिभाषणम् । यदाहुः—

विधि रत्यन्त मप्राप्तौ नियमः पाक्षिके सति ।
तत्र चान्यत्र च प्राप्तौ परिसंख्येति गीयते ॥ इति ॥

इत्यादिना तन्मतं विस्तरेणोपपाद्य आलङ्कारिकाणां वैयाकरणमतानुयायित्वमेव स्थापितवान् ॥

तथा तत्रैव तुल्ययोगितालङ्कारप्रकरणे अतएवालङ्कारिकाणामपि (अपिना वैयाकरणानाम्) सादृश्यं पदार्थान्तरं न तु साधारणधर्म

रूपमिति विज्ञायते। अन्यथा औपम्यस्य गम्यत्वोक्तेरनुपपत्तेरित्युक्तिरपि नैयायिकप्रत्यार्थत्वप्रतिपादनपुरस्सरं तदेव द्रढयति ॥

तथा तुल्ययोगितालङ्कारप्रसङ्गे अलङ्कारचन्द्रिकायां कुवलयानन्दव्याख्यायां वैद्यनाथेनापि 'एवमप्यभावस्य कथं गुणबहिर्भावः जातिक्रियाद्रव्यातिरिक्तस्यैव चतुष्टयी शब्दानां प्रवृत्तिरिति वदद्भिः वैयाकरणैः तदनुसारिभि श्चालंकारिकै र्गुणत्वाङ्गीकारात् इत्यवादीत्। किं बहुना, प्रायश स्सर्वेप्यालंकारिकाः मम्मटभट्टादयः "लिम्पतीव तमोऽङ्गानि वर्षतीवाञ्जनं नभः" इत्युत्प्रेक्षोदाहरणे व्यापनादि लेपनादिरूपतया संभावितमित्यभिधाय लेपनकर्तृतादात्म्योत्प्रेक्षा वर्षणकर्तृतादात्म्योत्प्रेक्षा इति मतं निराकृत्य क्रियास्वरूपेत्प्रेक्षा इति मतं सिद्धान्तयन्तः भावप्रधानमाख्यातमिति वैयाकरणमतमेवानुसृत्य लेपनकर्तृ तादात्म्योत्प्रेक्षेति मतनिराकरणेन प्रथमान्तस्यैव मुख्य विशेष्यतावादि नैयायिकपरिपन्थिन इत्यपि द्योत्यते। एतत्सर्वं कुवलयानन्दादिष्वपि स्फुटम् ॥

एवमेव आलङ्कारिका अपि मञ्जूषायां नागेशभट्टेन 'मुख्यार्थग्रहनिरपेक्षबोधजनकः मुख्यार्थसंबद्धासंबद्धसाधारणः प्रसिद्धाप्रसिद्धार्थविषयकः वक्त्रादिवैशिष्ट्यज्ञानप्रतिभाद्युद्बुद्धः संस्कारविशेषो व्यञ्जना' इत्युपवर्णितादिशा व्यञ्जनावृत्तिं संस्थाप्य निपातानां द्योतकत्वं स्फोटस्य व्यङ्ग्यत्वं चाभिप्रयन्तः—

भद्रात्मनो दुरधिरोहतनो विंशाल
वंशोन्नतेः कृतशिलीमुखसंग्रहस्य।
यस्यानुपप्लुतगतेः परवारणस्य
दानाम्बुसेकसुभगः सततं करोऽभूत् ॥

इत्यादि पद्येषु 'धर्मिकल्पनातो वरं धर्मकल्पना' इति न्यायेन भिन्न-

शब्दकल्पनापेक्षया व्यञ्जनाख्यामपरां वृत्ति मूरीकुर्वन्ति इत्येतादृशा भियुक्तोपदर्शितादिशा अलङ्कारशास्त्रं व्याकरणशास्त्रस्यैव पुच्छभूतं न तु मीमांसादीनाम् । अन्यथा न्यायशास्त्रनिरस्तायाः मीमांसादिषु नामतोऽप्यगृहीतायाः व्यञ्जनाया अङ्गीकारः असंबद्धःस्यात्. स्याच्च वाचकलाक्षणिकव्यञ्जकशब्दानां वाच्यलक्ष्यव्यङ्ग्यार्थानां अभिधा-लक्षणाव्यञ्जनात्मिकानां वृत्तीनां च निरूपणस्याप्यनौचित्यम्, एव मादिविमर्शेन बह्वीषु रीतिषु साहित्यशास्त्रं व्याकरणशास्त्र मेवाश्रयतीति साहित्यस्य व्याकरणशास्त्रमेव जीवातुरीति निर्धारयितुं पार्यते ॥

## साहित्याभ्यास एव परमः.

प्रजास्तावन्न काश्चिदपि जन्मनैव युक्ताऽयुक्तादिविवेककुशलाः, न वा ऊहापोहनिपुणाः प्रभवन्ति । अतः प्राचीनैर्लोकशासनोत्साहिभि-र्महर्षिभिर्जगच्छासनोद्देशेन प्रभुसम्मितानि, मित्रसम्मितानि, कान्ता-सम्मितानि च शास्त्राण्यसंख्याकानि निरमायिषत । तथाच भगवान् वाल्मीकिमहर्षिः आदिकाव्ये श्रीमद्रामायणे रावणवधानन्तरं मन्दो-दरी प्रलापवर्णनावसरे—

अत्युत्कटैः पुण्यपापैरिहैव फलमश्नुते ।

इति लोकोक्तिं सत्यापयन्—

अवश्यमेव लभते फलं पापस्य कर्मणः ।
घोरं पर्यागते काले कर्ता नास्त्यत्र संशयः ।
शुभकृच्छुभमाप्नोति पापकृत्पापमश्नुते ।
विभीषणस्सुखं प्राप्तः त्वं प्राप्तः पाप मीदृशम् ॥

इत्युपपादनेन लोकानकृत्यकरणान्निवर्त्य सत्कृत्यकरण एव प्रवर्तयति । एतादृशमित्रसम्मितमहाकाव्यादिना युक्तायुक्तविवेकपरिज्ञानचिन्तनासक्ता

# व्युत्पत्तिवादस्य अनन्ताचार्यकृतटिप्पणी.

---

ननु घटवद्भूतलमित्यादिप्रत्यक्षे घटभूतलयोस्संयोगस्य चक्षुस्संयुक्तसमवायादिरूपसन्निकर्षबलात् भानस्य, अनुमितौ व्यापकत्वघटकतया परामर्शविषयताया एव सन्निकर्षभाननियामकत्वात् पर्वतो वह्निमानित्याद्यनुमितौ संयोगादिभानस्य चोपपत्तावपि नीलो घट इत्यादिशाब्दबोधे तादात्म्यादिसम्बन्धभाने नियामकाभावः। यद्यपि प्राभाकरमते संसर्गांशेऽपि शक्तिस्वीकाराच्छाब्दबोधे तद्भानमुपपद्येत, तथापि नैयायिकमते तदस्वीकारादनुपपत्तिर्दुर्वारैवेत्यत आह * शाब्दबोधे चेति * अत्र चकारस्त्वर्थे। स च प्रत्यक्षादिवैलक्षण्यम्। "तुस्स्याद्भेदेऽवधारणे" इति कोशात्। कोशस्थभेदशब्दस्य वैलक्षण्यपरत्वात् प्रत्यक्षादिवैलक्षण्यञ्च विशेषणविशेष्यभासकसामग्रीसजातीयसंसर्गभासकसामग्रीविशिष्टान्यत्वम्। तस्याश्रयतासम्बन्धेन शाब्दबोधेऽन्वयः। चकारस्य नामत्वेऽपि निपातत्वेन तदर्थस्य भेदसम्बन्धेनान्वयसम्भवात्। न च विशेषणविशेष्यभासकयोग्यताज्ञानतात्पर्यज्ञानादेरेव संसर्गभासकतया तथाविधसामग्रीविशिष्टान्यत्वं शाब्दबोधे न सम्भवतीति वाच्यम्। तत्तदर्थविषयकशाब्दबोधे तत्तदर्थविशेष्यकवृत्तिज्ञानजन्योपस्थितेर्हेतुत्वे संसर्गांशे व्यभिचारेण संसर्गताभिन्नतत्तदर्थनिष्ठविषयताशालिशाब्दबोधं प्रत्येवोक्तोपस्थितेर्हेतुत्वेन शाब्दबोधे विशेषणविशेष्यभाने उपस्थितिघटितसामग्र्याः, संसर्गांशभाने च तदघटितसामग्र्याः नियामकत्वेन सजातीयसामग्रीविशिष्टान्यत्वाक्षतेः। न च प्रत्यक्षेप्युक्तविशिष्टान्यत्वं सम्भवति विशेषणभासकसामग्रीशरीरे विशेषणज्ञानस्य घटकत्वात्। संसर्गभासकसामग्रीशरीरे च तस्याप्रवेशादिति वाच्यम्। तथापि विशेषणविशेष्योभयभासक-

सामग्र्यां विशेषणज्ञानस्याप्रवेशेन तद्घटितसामग्र्या एवोपादेयत्वेन तत्सजातीयसंसर्गभासकसामग्रीविशिष्टत्वेन प्रत्यक्षस्य तदन्यत्वाभावात् ॥

शब्दादागतश्शाब्दः शब्दजन्य इति यावत् । सचासौ बोधश्चेति विग्रहः । शाब्द पदं योगरूढम् । अन्यथा शब्दजन्यश्रावणप्रत्यक्षतल्लिङ्गकानुमित्योरपि शाब्दबोधपदार्थतापत्त्या तन्निरूपितविषयतायाः समभिव्याहारप्रयोज्यत्वाभावेनासङ्गत्यापत्तेः । संसर्गस्य मर्यादा समभिव्याहारज्ञानप्रयोज्यसांसर्गिकविषयता । प्रकृत्या सुंदर इत्यादाविव, तृतीयार्थोऽभेदः भासधात्वर्थविषयतायामन्वेति । शाब्दबोधपदोत्तरसप्तम्यर्थनिरूपितत्वस्यापि तत्रैवान्वयः । एकपदार्थ इति सप्तम्यर्थः विशेष्यत्वम् । अपरपदार्थस्येति षष्ठ्याः प्रकारत्वमर्थः । तयोस्संसर्गमर्यादापदार्थे संसर्गतायामन्वयः । तथाच एकपदार्थनिष्ठविशेष्यतानिरूपिता अपरपदार्थनिष्ठप्रकारतानिरूपिता या विशेषणविशेष्यभासकसामग्रीसजातीयसंसर्गभासकसामग्रीविशिष्टान्यशाब्दबोधनिरूपिता समभिव्याहारज्ञानप्रयोज्यसंसर्गता तदभिन्नविषयताश्रयत्ववान्संसर्ग इति बोधः । एवं च समभिव्याहाररूपाकांक्षाबलादेव संसर्गभानसम्भवात् न शाब्दबोधे संसर्गभानानुपपत्तिरिति भावः । एवं च सति किंकिं संसर्गभानस्य काका कांक्षा इत्याशङ्कायां तत्तदाकांक्षाया उत्तरत्र प्रदर्शनमुपपद्यते ॥

ननु संसर्गतायां प्रकारताविशेष्यतानिरूपितत्वयोः अव्यावर्तकतया किमर्थं तदुक्तिरिति चेत्, शाब्दबोधे पदानुपस्थाप्यस्य संसर्गस्य समभिव्याहारप्रयोज्यतयापि भानं किमर्थं स्वीकर्तव्यं तद्भानास्वीकारेऽपि क्षतिविरहात् इति शङ्कानिरासाय तदुक्तौ प्रकारत्वविशेष्यत्वयोस्संसर्गतानिरूपितत्वनियमेन शाब्दबोधे संसर्गाभाने प्रकारताविशेष्यतानिरूपितत्वानुपपात्तिरिति युक्तिसूचनेन तत्र संसर्गभानावश्यकत्वसूचनात् । एतेन नीलो घट इत्यादिवाक्यजन्यबोधे अभेदसम्बन्धो न भासते अभेदस्यैकमात्रनिष्ठत्वेन

सम्बन्धत्वाभावात्। द्विनिष्ठस्यैव सम्बन्धत्वात् किन्तु नीलनिष्ठ-सम्बन्धानवच्छिन्नप्रकारतानिरूपितघटनिष्ठविशेष्यता कबोध एव जायते, अतो न तत्र समभिव्याहारज्ञानापेक्षा। राज्ञः पुरुषः इत्यादावपि विभक्त्यर्थस्यैव सम्बन्धस्य संसर्गतया भानाङ्गीकारात् विभक्त्यैव सम्बन्धभाननिर्वाहात् न तत्रापि समभिव्याहारापेक्षा इति प्रातिपदिकार्थसूत्रे मञ्जूषोक्तं निरस्तम्। नीलो घट इत्यादौ अभेदस्याभाने तद्वाक्यजन्यबोधानन्तरं घटो नीलाभिन्नो नवेति संशयप्रसङ्गात्। राज्ञः पुरुष इत्यादौ संसर्गतया भासमानस्यापि षष्ठ्यर्थत्वे घटो नेत्यादावपि षष्ठ्यापत्तेश्च। किञ्च समभिव्याहार-ज्ञानस्य शाब्दबोधाहेतुत्वे घटः कर्मत्वं आनयनं कृतिरित्यादावपि शाब्दबोधप्रसङ्गः। न च यादृशसमभिव्याहारे यादृशान्वयबोध-जन्यजनकत्वग्रहो यस्य पुरुषस्य वर्तते तस्य तादृशसमभिव्याहा-रात् तादृशान्वयबोधो भवति। अत एव घटः कर्मत्वम् आनयनं कृतिरित्यतः विपरीतव्युत्पन्नस्य बोधो भवति सद्व्युत्पन्नस्य च अबोध उपपद्यते। सद्व्युत्पन्नत्वं च व्याकरणशास्त्रोक्तप्रकृति-प्रत्ययविभागतदर्थविभागतत्तदन्वयबोधविषयज्ञानवत्वं इति मञ्जू-षायामेवाकांक्षाविचार उक्तत्वात् नोक्तस्थले शाब्दबोधापत्तिरिति वाच्यम्, तथा सति पूर्वोत्तराविरोधापत्तेरिति दिक्॥

एकवस्तुन्यपरवस्तुन इत्युनुक्त्वा एकपदार्थे अपरपदार्थस्ये-त्युक्तिः संसर्गस्य पदानुपस्थाप्यत्वात्कथं शाब्दबोधे भानमित्या शङ्कासूचनाय। विशेषणविशेष्ययोः पदशक्तिमत्वरूपपदार्थत्व-कथनेन संसर्गस्य पदाशक्यत्वस्फोरणात्। दक्षिणेन पश्यतीत्यु-क्त्या वामेन न पश्यतीतिवत्। नन्वत्र एकत्वमपरत्वं च किं पद-योर्विशेषणम् उत पदार्थयोः पदार्थतावच्छेदकयोर्वा। नाद्यः। आख्यातार्थकृतिवर्तमानत्वयोः परस्परमन्वयबोधानुपपत्तेः। न द्वितीयः नीलो घट इत्यादौ अभेदान्वयबोधानुपपत्तेः नीलघटयो-रैक्यात्। नापि तृतीयः विषयित्वं जानातीत्यादौ ज्ञाधातुसमभि-व्याहारे द्वितीयाया विषयित्वार्थकत्वेन निरूपितत्वसम्बन्धेन

द्वितीयार्थविषयित्वे प्रकृत्यर्थविषयित्वान्वयबोधानुपपत्तेः । पदार्थतावच्छेदकयोर्विषयितात्वयोर्भेदाभावात् । अत एव एकत्वापरत्वयोः पदार्थतावच्छेदक अन्वय इति कृष्णभट्टोक्तं निरस्तमिति चेन्न । पदार्थशब्दो हि पदनिरूपितवृत्तिमत्परः । एकत्वापरत्वयोश्च वृत्तान्वयः घटघटत्वयोः संसर्गभूते समवाये समभिव्याहारप्रयोज्यविषयताविरहेण वृत्तिभेदकथनस्यावश्यकत्वात् । घटघटत्वयोश्च एकवृत्तिमत्वेन तद्व्यावृत्तिः । न च पदार्थतावच्छेदकीभूतघटत्वादेः पदार्थत्वाभावेन पदार्थपदेनैव तद्व्यावृत्त्या वृत्तिभेदकथनमफलमिति वाच्यम् । जात्याकृतिव्यक्तयः पदार्थ इति सूत्रे जातावपि पदार्थत्वव्यवहारेण तत्पदेन तद्व्यावृत्तेः । एवं च स्वप्रयोज्यप्रकारतानिरूपितत्वस्वभिन्नवृत्तिप्रयोज्यविशेष्यतानिरूपितत्वोभयसम्बन्धेन वृत्तिविशिष्टसमभिव्याहारज्ञानप्रयोज्यसंसर्गत्वाभिन्नशाब्दबोधनिरूपितविषयताश्रयः संसर्ग इति बोधः । यत्तु "एकपदार्थ इति सप्तम्यर्थ अनुयोगित्वम् । अपरपदार्थस्येति षष्ठ्याः प्रतियोगित्वमर्थः तयोश्च संसर्गे अन्वयः । संसर्गमर्यादा समभिव्याहारज्ञानकार्यतावच्छेदकत्वम्, तृतीयार्थो वैशिष्ट्यम् भासधात्वर्थे विषयतायामन्वेति । तथा च शाब्दबोधनिरूपितसमभिव्याहारज्ञानकार्यतावच्छेदकत्वविशिष्टविषयताश्रयः एकपदार्थानुयोगिकअपरपदार्थप्रतियोगिकस्संसर्ग इत्यन्वयबोधः" इति कृष्णभट्टशङ्करभट्टानां व्याख्यानम् । तन्न । भ्रमप्रमासाधारणशाब्दबोधमात्रे संसर्गभाननियमकाकांक्षायां उभयसाधारण्येन समाधानस्य युक्तत्वेऽपि प्रमास्थलमात्रे तत्कथनस्यानुचितत्वात् भ्रमस्थले विशेषणप्रतियोगिकविशेष्यानुयोगिकसम्बन्धाभानेन तथाविधसम्बन्धकथने भ्रमव्यावृत्तेः । भ्रमनिरूपितसंसर्गतायामपि विशेष्यताप्रकारतानिरूपितत्वसत्वेन अस्मदुक्तव्याख्याने समाधानस्य भ्रमसाधारण्यसम्भवात् । समभिव्याहारज्ञानकार्यतावच्छेदकत्वं संसर्गमर्यादाशब्दार्थ इत्यपि न युक्तम् । कार्यतावच्छेदककोटावव्य-

वहितोत्तरत्वं निवेश्य समासव्यासस्थलभेदेन समभिव्याहारज्ञान-कारणताया वक्ष्यमाणतया कार्यतावच्छेदककोटौ संसर्गताया अनिवेशात्। अव्यवहितोतरत्वस्य कार्यतावच्छेदकत्वस्थले विषयताया अनिवेशस्य भट्टाचार्येणैव वक्ष्यमाणत्वात्। तृतीयायाः वैशिष्ट्यार्थकत्वमपि न युक्तम्। घटो विशेष्यतया भाति, घटत्वं विशेषणतया, समवायस्संसर्गतयेत्यादिव्यवहारानुरोधेन तृतीयाया अभेदार्थकत्वस्य युक्तत्वेपि घटः विशेष्यतात्वेन भातीत्यादि-व्यवहाराभावेन बाधात् समभिव्याहृततृतीयाया वैशिष्ट्यार्थकत्वा-योगात् अभेदस्य संसर्गतास्थल एव क्रियाविशेषणानामित्यनु-शासनप्रवृत्या प्रकृते अभेदस्य प्रकारत्वेन तदप्रवृत्तेर्न द्वितीयेति बोध्यम्॥

यदपि घटपदात् समवायेनोपस्थितस्य गगनस्य शाब्द-बोधे भानवारणाय तद्विषयकशाब्दबोधं प्रति पदवृत्तिज्ञानजन्यतदु-पस्थितित्वेन हेतुत्वे तत्संसर्गकबोधे व्यभिचारस्स्यात् अत-स्तन्निष्ठसंसर्गतान्यविषयताशालिबोधं प्रति पदवृत्तिज्ञानजन्यतदु-पस्थितित्वेन हेतुत्वं वाच्यम्। एवमपि संसर्गे संसर्गतान्य-विषयतासत्वे व्यभिचारो दुर्वार इति शङ्कायां तत्र संसर्गतान्य विषयतासत्वे मानाभावान्न व्यभिचार इति समाधत्ते *शाब्द-बोधे चेति*। अत्र चोऽवधारणार्थः। स च ससंर्गमर्यादयेत्यन-न्तरं योजनीयः। संसर्गस्य मार्यादा संसर्गता। तथाच एकपदार्थानुयोगिक अपरपदार्थप्रतियोगिकस्सम्बन्धस्संसर्गतयैव भासते। संसर्गतान्यतादात्म्याभाववद्विषयताश्रय इत्यर्थात्संसर्गे संसर्गताभिन्नविषयताव्यवच्छेदलाभादुक्तव्यभिचारपरिहारो ल-भ्यत इति रामरुद्रभट्टानां व्याख्यानं, तदपि न। पार्थ एव धनुर्धर इत्यादाविव विशेष्यसङ्गतैवकारस्य अन्ययोगव्यवच्छे-दार्थकत्वेऽपि शङ्खःपाण्डुर एवेत्यादिवद्विषशेणसङ्गतैवकारस्य अयोगव्यवच्छेदार्थकताया एव युक्तत्वेन संसर्गतयैव भासत

इत्यादावप्ययोगव्यवच्छेदार्थकत्वस्यैव न्याय्यत्वात्। न च, प्रथमातिरिक्तविभक्त्यन्तविशेषणवाचकपदसङ्गतैवकारस्य अन्ययोगव्यवच्छेदार्थकत्वं सम्भवति. चैत्रस्यैवेदं धनं इत्यादौ चैत्रान्ययोगव्यवच्छेदबोधनात्, तथा च प्रकृत एवकारस्य भेदवत्तादात्म्यमभावश्च खण्डशोऽर्थः, तृतीयाप्रकृतिभूतसंसर्गमर्यादापदार्थसांसर्गिकविषयताया व्युत्पत्तिवैचित्र्यादेवकारार्थभेदवदेकदेशे भेदे प्रतियोगितयान्वयः, तदन्विततादात्म्यस्य अभावे, तस्य च भासधात्वर्थे अन्वयात् सांसर्गिकविषयताभिन्नतादात्म्यव्यवच्छेदस्य विषयतात्वावच्छिन्ने लाभ इति वाच्यम्। भासधात्वर्थे विषयतात्वावच्छेदेन संसर्गतान्य तादात्म्य व्यवच्छेदस्य बाधितत्वेन सामानाधिकरण्येनैव तदन्वयस्य वक्तव्यतया संसर्गे संसर्गताभिन्नविषयतासत्वेपि तदुपपत्तेः तद्व्यवच्छेदाप्रतीतेः। न च भासधात्वर्थविषयताश्रयत्वस्य संसर्गेऽन्वये संसर्गनिष्ठविषयतात्वमन्वयितावच्छेदकतया लभ्यते। तदवच्छेदेन सांसर्गिकविषयतान्यतादात्म्यव्यवच्छेदबोधाङ्गीकारान्नानुपपत्तिः। उक्तान्वयितावच्छेदकस्य पदानुपस्थाप्यत्वेपि संसर्गघटकतया तज्ज्ञानसम्भवात्। शरदि पुष्पन्ति सप्तच्छदा इत्यादौ पदानुपस्थितसप्तच्छदपुष्पोत्पत्तित्वावच्छेदेन शरद्वृत्तित्वान्वायबोधस्य तृतीयाकारके वक्ष्यमाणत्वात्। एवं च संसर्गताभिन्नतादात्म्याभावस्य स्वव्याप्यसंसर्गनिष्ठशाब्दबोधीयविषयतात्वसम्बन्धेन धात्वर्थान्वय इति वाच्यम्। अभेदकालीनघटो नील इत्यादिवाक्यजन्यबोधे अभेदे संसर्गतान्यविषताया अपि सत्वादेवकारार्थबाधापत्तेः। न च संसर्गनिष्ठविषयतात्वं नाम, संसर्गताविशिष्टनिष्ठविषयतात्वं संसर्गतात्वपर्यवसितम्। तदेवैवकारार्थव्याप्यतया संसर्गकोटौ भासते। तथा च संसर्गतात्वावच्छेदेन संसर्गतान्यतादात्म्याभावस्याबाधितत्वान्न दोष इति वाच्यम्। तथा सति पदानुपस्थापितसंसर्गे सांसर्गिकविषयतान्यविषयता-

सत्वेपि उक्तैवकारार्थनिर्वाहेण अवतारिकोक्तशङ्कापरिहारकत्वाभावापत्तेर्दुर्वारत्वात्। यदि च संसर्ग इत्यस्य पदाप्रयोज्यविषयतावानित्यर्थः। शाब्दबोध इति सप्तम्यर्थनिरूपितत्वस्य तद्घटकविषयतायामन्वयः। तथा च पूर्वोक्तरीत्या शाब्दबोधनिरूपितपदाप्रयोज्यविषयतात्वावच्छेदेन संसर्गतान्यतादात्म्याभावो लभ्यते। प्रत्यक्षादिप्रकारतामादाय बाधवारणाय शाब्दबोधनिरूपितत्वस्यान्वयितावच्छेदकघटकतया निवेशः। अतस्संसर्गे संसर्गतान्यपदाप्रयोज्यविषयताया व्यवच्छेदात् पदजन्योपस्थितिकारणतायामुक्तव्यभिचारपरिहारस्सम्भवतीति विभाव्यते तदा तदपि व्याख्यानं सङ्गतमेवेति द्रष्टव्यम्॥

अग्रे अभेदसंसर्गेण शाब्दबोधनियामकस्य भेदसंसर्गेण तन्नियामकस्य च पृथग्वक्तव्यतया तादृशसंसर्गं द्वेधा विभजते *सचेति* आधारेत्यादि, चैत्रः पचतीत्यादौ आधारतासम्बन्धेन आख्यातार्थकृतेः चैत्रादावन्वयः। एवं चैत्रेण पच्यत इत्यादौ तृतीयार्थकृतौ चैत्रादेराधेयतायान्वयः। अपाक्षीदित्यत्र लुङः वर्तमानध्वंसोऽर्थः। तस्य प्रतियोगितासम्बन्धेन आख्यातसामान्यवाच्यकृतावन्वय इति भट्टाचार्येणैव वक्ष्यते। घटो नास्तीत्यादौ अनुयोगितासम्बन्धेन घटादेर्नञर्थाभावेन्वयः। एतेन नञर्थाभावे प्रतियोगिनः प्रकारतयैव भानात्पदान्तरबोधिताभावस्य च निपातातिरिक्तनामार्थतया क्वापि भेदसम्बन्धेन अन्वयविरहात् प्रतियोगित्वानुयोगित्वयोः उपादानं मतभेदेनैव, तत्र प्रतियोगिनो नञर्थाभावे प्रतियोगितासम्बन्धेनैवान्वय इति प्राचां मतं, प्रतियोगिताया अपि निरूपकतासम्बन्धेन अभावनिष्ठतया तदनुयोगिकत्वसम्भवात। अत एव तैर्घटस्याभाव इत्यादौ प्रतियोगित्वमेव षष्ठ्यर्थ इत्युपेयते। नवीनमते तु नञर्थाभावे प्रतियोगिनोऽनुयोगित्वमेव सम्बन्धः। उक्तस्थले षष्ठ्या अपि तदर्थकत्वमेव तैरुपगम्यत इति

रामरुद्रभट्टव्याख्यानमनुपादेयम् । उत्तरमूलग्रन्थानुरोधेनैकमत एवोदाहरणप्रदर्शनेन मतभेदपरतया व्याख्यानस्यानुचितत्वात् । एवं चिकीर्ष्यते पाक इत्यादौ इच्छाविषयकृतिकर्मपाक इत्यन्वयबोधात्सन्नर्थेच्छायाः कृतौ विषयतासम्बन्धेनान्वयः । चिकीर्षतीत्यादौ च धात्वर्थकृतेः सन्नर्थेच्छायां विषयितासम्बन्धेनान्वय इति विभागो द्रष्टव्यः। पचतीत्यादौ आख्यातार्थकृतौ धात्वर्थपाकादेर्जनकतासम्बन्धेन, राज्ञः पुरुष इत्यादौ षष्ठ्यर्थस्वत्वे राज्ञो निरूपितत्वसम्बन्धेनान्वयाज्जनकत्वनिरूपितत्वयोरादिपदेन परिग्रहः। यत्तु घटमित्यादौ कर्मत्वे घटादेराधारतानिरूपित कर्मत्वनिष्ठाधेयतासम्बन्धः। घटो नास्तीत्यादौ नञर्थाभावे घटनिष्ठप्रतियोगितानिरूपितानुयोगितासम्बन्धः। घटं जिज्ञासतीत्यादौ सन्नर्थेच्छायां ज्ञाधात्वर्थज्ञानस्य विषयतानिरूपितविषयितासम्बन्ध इति कृष्णभट्टव्याख्यानम्। तन्न। आधारत्वाधेयत्वयोः प्रत्येकमेव सम्बन्धताया नैयायिकमतसिद्धतया आधाराधेयभावात्मकसमूहस्य सम्बन्धत्वाभावात्। वैयाकरणैरेव तथाविधसमुदायस्य सम्बन्धतास्वीकारात्। अत एव मञ्जूषायां षष्ठ्यर्थविचारे स्वामित्वं स्वत्वं वा षष्ठ्यर्थ इति न्यायमतमनूद्य तयोरेकमात्रवृत्तितया सम्बन्धत्वायोगात् द्विनिष्ठस्यैव सम्बन्धतास्वीकारादिति दूषणमभिधाय स्वत्वस्वामित्वसमूहरूपसम्बन्ध एव षष्ठ्यर्थ इत्युक्तम्॥

अभेदान्वयबोधो हि द्विविधः प्रातिपदिकार्थानुयोगिकाभेदान्वयबोधो धात्वर्थानुयोगिकाभेदान्वयबोधश्चेति। तत्राद्यः समासव्यासस्थलभेदेन द्विविधः। द्विविधेप्याद्ये पृथङ्नियामकमाह अभेदश्चेत्यादिना। 'यल्लक्ष्मीरिव तेन विश्वमखिलं मत्तीकरोत्युन्मदे' इत्यत्र यदभिन्नं लक्ष्मीसादृश्यं तेन मत्तीकरोतीत्यर्थादिवार्थे सादृश्ये यत्पदार्थस्य, 'कार्तिक्यादौ यन्न दानं तेन मुह्यन्ति जन्तवः' इत्यादौ यदभिन्नदानाभाव इति नञर्थे यत्पदार्थस्याभेदा-

# सूक्तिसुधाकणः



कर्ता

ति. स. श्रीनिवासदेशिकाचार्यः

महीशूरपुराधीशशारदाभाण्डागारीयप्रधानपण्डितः



मैसूरु

राजकीयशाखामुद्रालये सम्मुद्रितः

१९३७

# सूक्तिसुधाकणस्थविषयसूची.

# सूक्तिसुधाकणः

---

## मङ्गलाचरणम्.

अभङ्गुरकलानाथमण्डलान्तरगोचरम् ।
अभङ्गुरकलानाथं सुभाषितनिधिं स्तुमः ॥ १ ॥

रङ्गास्थानसुमुद्रितं रघुपतेर्लङ्केन्द्रसम्पादितं
भास्वद्वंशधनाह्वयं मृदुपदं प्रत्नं विशुद्धं परम् ।
भाषावल्लभटीकितं प्रतिपदं प्राकारबन्धोज्वलं
श्रीकोशं विबुधप्रियं फणिशयं सत्पुस्तकाभं नुमः ॥ २ ॥

कृष्णेन्दुर्बुधकल्पकः कृतधियस्सर्वे गुणैकप्रियाः
सन्तस्सारबुभुत्सवः कविवराः मात्सर्यगन्धाऽसहाः ।
पत्राध्यक्षमहाशयाश्शुभकृतिप्रख्यातिसम्पादकाः
मामीस्सूक्तिसुधाकण! त्वमचिराद्विद्वन्मुदे कल्पसे ॥ ३ ॥

## मङ्गलविशेषप्रशंसा.

कारुण्यस्फुरणं दीने मङ्गलाचरणं परम् ।
अत्रोदाहरणं जातमादिकाव्यस्य मङ्गळम् ॥ ४ ॥

कारुण्यमङ्गळं मन्ये शारदास्वागतप्रदम् ।
गूढार्था भारती वक्रे यद्बलादादिमङ्कविम् ॥ ५ ॥

## हयवदनकरुणोन्नतिः.

ाक हृद्यं? सुरभाषितं, किमु ततः? काव्यं, ततो नाटकं
किं तस्मादपि? शास्त्रमेव हि, ततस्तन्त्रं, ततो दर्शनम् ।

किं तस्मान्निगमाङ्गमेव, किमतश्छान्दांसि, तेभ्योपि किम्?
तच्छीर्षाणि, ततोपि किं? हयमुखः, तस्माच्च किं? तत्कृपा ॥

### गीर्वाणभाषाप्रशंसा.

प्राचीनभारतीं स्तौमि तां च प्राचीनयोग्यताम् ।
प्राचीनयोग्यसम्बन्धः *ययोरतिमनोहरः ॥ ७ ॥

### सुभाषितप्रशंसा.

विज्ञानकोशस्सुगुणप्रकाशः
दोषप्रणाशो मृदुवाक्यपाशः ।
महोपदेशो वचसामधीशः
परापदेशो हि सुभाषितेशः ॥ ८ ॥

रसान् बहुविधान् दुग्धे सीत्कृतं हि सुभाषितम् ।
पूत्कृतं यदि तद्दुग्धे थूत्कृतं गीष्पतेरपि ॥ ९ ॥

ससीत्कारमफूत्कारं सुभाषितसुधां पिबेत् ।
ससीत्कारं सफूत्कारं दुग्धमुष्णं गवां पिबेत् ॥ १० ॥

### सज्जनप्रशंसा.

सन्तस्समर्पितात्मभ्यः कुर्वन्त्यात्मसमर्पणम् ।
दत्तात्मशेषपर्यङ्के रङ्गिणाऽऽत्मा किलार्पितः? ॥ ११ ॥

### विद्याप्रशंसा.

एका सा रुचिरा विद्या सैवैका रुचिरा सती ।
एका साऽरुचिराऽविद्या सैवैकाऽरुचिराऽसती ॥ १२ ॥

---

* प्राचीनपण्डितः तन्नामकऋषिपुत्रश्च.

## कविभावप्रशंसा.

गुणान् हरेः कवेर्भावमेतावानिति ये विदुः ।
त एतावन्त एव स्युः न तावन्तः कदापि ते ॥ १३ ॥
कविपद्यासु चरतां काकतालीयवत्कृतौ ।
ये भावास्स्वयमायातास्ते भावा हृदयङ्गमाः ॥ १४ ॥

## सत्काव्यप्रशंसा.

कविताऽलंकृता स्थाने रुचिरा समयोक्तिवत् ।
कवितालंकृताऽस्थानेऽरुचिराऽसमयोक्तिवत् ॥ १५ ॥

## कुकाव्यनिन्दा.

अपूर्वसुखदं * नित्यं हरि † शब्दमनोहरं ।
विचित्रवचनावासं कुकाव्यं विष्णुमन्दिरम् ॥ १६ ॥
अनन्ताबद्धनिलयं सुबद्धलववर्जितम् ।
कुकवित्वमहं मन्ये साक्षाद्वैकुण्ठविष्टपम् ॥ १७ ॥
तर्कश्शास्त्रधरैस्सुघृष्टरुचिरस्स्वर्णोत्थरेखेक्षणं
तर्कश्शस्त्रधरैररिभेन्द्रविहरत्कण्ठीरवप्रेक्षणम् ।
तर्कः पुण्यधरैश्शुनिमुखलुठद्रोटीसमाकर्षणं
तर्कस्सीरधरैःप्रमत्तभषकस्यास्येस्वहस्तार्पणम् ॥ १८ ॥

## मुकुरापदेशः.

मुकुर ! त्वां विदुर्लोकाः शुद्धं सत्यैकदर्शिनम् ।
प्राचीनावीतिनो वक्षि किमस्मानुपवीतिनः ॥ १९ ॥
सजातीयोपरक्तस्त्वं मिथ्यालोकपरम्पराम् ।
सृजस्यादर्श ! चपलं शाम्बरी ते महीयसी ॥ २० ॥

---

* असुखदमित्यप्यर्थः. † हरिर्विष्णुर्भेकश्च.

स्वयं भ्रमन् भ्रामयसे स्थावरान् जङ्गमानिव ।
हन्त ! दर्पण ! सत्वन्नः करे भ्रमासि किन्विदम् ॥ २१ ॥
अधः करोषि गगनं भुवनं कुरुषे दिवि ।
गिलस्यखिलमग्रस्थं किमिदं दर्पणाऽद्भुतम् ॥ २२ ॥
स्थूलं सूक्ष्मं तथा सूक्ष्मं स्थूलं दर्शयतेस्तु ते ।
तर्पणं दर्पणाऽद्यैव तवैवास्ति कुशासनम् ॥ २३ ॥
निर्लिप्तस्त्वमनात्मानं दर्शयिष्यसि दर्पण ! ।
हन्त ! लिप्तस्त्वमात्मानं किमिदं नव्यदर्शनम् ? ॥ २४ ॥
प्राचीं प्रतीचीं सव्यं चाप्यपसव्यं ब्रवीषि भोः ! ।
स त्वं तत्त्वविदेवासि विश्वसम्मान्य ! दर्पण ! ॥ २५ ॥

### उपलोचनापदेशः.

यथाविकारमारूढलोचनोह्युपलोचन ! ।
त्वं लोचनबलं दत्से नोचेन्मुष्णासि लोचनम् ॥ २६ ॥

### उपलोचनग्राहकापदेशः.

निन्दां स्तुतिं वा मा कार्षीर्मन्द ! त्वमुपलोचने ।
उपलोचनमेतन्मे नेत्रयोर्नेति कीर्तय ! ॥ २७ ॥
तव दृष्टेः प्रशस्तं स्यादेकमेवोपलोचनम् ।
दृष्टिभेदेन शस्तं हि सर्वमप्युपलोचनम् ॥ २८ ॥
सुलोचनं प्रशस्तं स्यान्मन्दाक्षस्य न संशयः ।
विशुद्धमेव तद्ग्राह्यमन्यथाऽपैति लोचनम् ॥ २९ ॥
रे मन्दाक्ष ! सुलोचनं भज हितं यत्ते दृशस्तत्परं
नाऽन्यद्दूषय तच्च ते हि सुहृदां किन्नो मुदे कल्पते ? ।

सूक्ष्मार्थग्रहणे सुलोचनशिला का वा न दत्ते बलं
    यद्यस्योपकरोति तत्परतरं तस्येतिजानीहि भोः ॥ ३० ॥

चामरापदेशः.

तव चामर! भूपाग्रे मृगपृष्ठे च खेलतः ।
पुरस्कारो न हर्षाय न शोकाय तिरस्कृतिः ॥ ३१ ॥

भृङ्गापदेशः.

सन्ति लोके सुमनसः भृङ्गभिक्षाशनप्रदाः ।
मधुकोशानुपाहर्तुं वर्धतां षट्पदोद्यमाः ॥ ३२ ॥
मृदुळस्पर्शसीत्कारतत्त्वज्ञा मधुमक्षिका ।
एका पुष्परसैर्विश्वं सीत्कारयति नेतरे ॥ ३३ ॥
मधूनि कुसुमस्थानि मधुकोशं न शेरते ।
विना माक्षिकसाचिव्यं भर्तव्या मधुमक्षिकाः ॥ ३४ ॥
मधुमक्षिका हि कवयः
    नित्यं याः प्राप्य सुमनसां सारान् ।
मधुकोशजालसर्गै-
    र्विबुधानबुधांश्च मादयन्त्यनिशम् ॥ ३५ ॥
मधुकरविद्यामाद्यामनितरवेद्यां विलोक्य निरवद्याम् ।
शंसन्ति मक्षिकां च प्रेक्षावन्तो द्विरेफ! बहुधैव ॥ ३६ ॥
दम्भं विमुञ्च गुरुषट्पद! राजसौध-
    शृङ्गाञ्चलानि मधुकोशपदं ममेति ।
तज्जीर्णकुड्यविवरस्थलधिष्ठमाद्वी-
    कोशप्रशस्तिमुपयाति न ते हि कोशः ॥ ३७ ॥

नाळीक! कामनाळीक! नाळीकनिलयालय! ।
त्वयि नालीकतास्त्येव कुतोम्भसि निमज्जसि? ॥ ३८ ॥

ऐश्वर्यं सफलं तवैव सकलं नाळीक! मन्ये यतः
त्वं किञ्जल्कशुभाक्षतैर्दिशिदिशि प्रस्थाप्य गन्धोद्वहान् ।
भोक्तुं नित्यमशेषभृङ्गनिवहानामन्त्र्य सप्रक्रियं
नैजप्राज्यमरन्दभोज्यविभवैस्तांस्तर्पयस्यन्वहम् ॥ ३९ ॥

अयि पुण्डरीक नित्यं
*मधुकरवृत्तेषु नित्यभृतभैक्षम् ।
कलिताक्षमन्वहं त्वां
हरिपदमुपयातमाद्रिये शिरसा ॥ ४० ॥

भव पुण्डरीक! धन्यः
निजरसभिक्षां प्रदाय मधुलिड्भ्यः ।
मधुपूर्णकोशसर्गो-
त्सर्गरतेभ्यः परार्थविभवेभ्यः ॥ ४१ ॥

अयि! पुण्डरीक! धन्यं
मन्ये त्वामेव सर्वतो नान्यम् ।
यत्ते मरन्दसंप-
न्मधुमयकोशप्रदानळीन् स्पृशति ॥ ४२ ॥

अयि! पुण्डरीक दत्तां
मधुकरभिक्षां सुधारसस्यन्दि ।
निजशिष्यगन्धवाहै-
र्मधुविद्यायोगिबृन्दमुपहूय ॥ ४३ ॥

---

* मधुसंपादकं वृत्तं येषामिति भ्रमरपक्षे, मधुकराणां वृत्तं येषामिति यतिपक्षे.

### शमीपर्णापदेशः.

जगुर्वेदाश्शमीपर्णं विशालं न दळान्तरम् ।
तदेवानुजगुर्विप्राः विश्रान्ताः कदळादयः ॥ ४४ ॥

### कालप्रशंसा.

कालः प्रतीक्ष्यस्सर्वेषां स न कञ्चित्प्रतीक्षते ।
अनागतेपि प्रमुखे घण्टा घणघणायते ॥ ४५ ॥
प्राज्ञं प्रतीक्षते कालः न तं प्राज्ञः प्रतीक्षते ।
प्रतीक्षन्ते दोहळज्ञमृतवो हि फलादिभिः ॥ ४६ ॥
स्वाशक्तिं व्याकरिष्यन्ति स्वयं कालप्रतीक्षकाः ।
स्वशक्तिं व्याकरिष्यन्ति यथा कालाप्रतीक्षकाः ॥ ४७ ॥
न प्रतीक्ष्याः प्रतीक्षन्ते कालं तान् स प्रतीक्षते ।
शुभर्क्षाणि प्रतीक्षन्ते हरेरवभृथं ननु? ॥ ४८ ॥
प्रभुं प्रतीक्षते कालः न कालं स प्रतीक्षते ।
प्रभुः कलिं कृतयते कृतं कलयते कलिम् ॥ ४९ ॥

### भेकापदेशः.

तुङ्गप्लुतं प्रतिपदं भेकराज! न मुञ्चसि ।
आसन्नमृत्युर्नो वेत्सि प्लुतं मण्डूकराविणाम् ॥ ५० ॥
तालेतुङ्गप्लुतोपेतं नृत्तं गीतं च ते ढुले ।
पल्लवीताळरुचिरं नेत्रश्रोत्ररसायनम् ॥ ५१ ॥

### घूकापदेशः.

छिन्दि! भिन्धि! बधानाऽशु! खट्! फट्! कट्! दह! मारय!
इत्याद्यनन्तबीभत्समन्त्रद्रष्टाऽसि कौशिक! ॥ ५२ ॥

पच ज्वल तुदेत्यादिपैशाचोक्तिशतानि ते ।
मारणोच्चाटनादीनि घूक! तन्वन्ति तत्क्षणम् ॥ ५३ ॥

क्रूरदर्शनबीभत्सशापज्वलनवर्षिणम् ।
त्वां सत्यवचनं घूक! मन्महे तामसं मुनिम् ॥ ५४ ॥

क्षणादेवोपविष्टस्त्वमनिन्द्रयसि तां दिवम् ।
त्रिशङ्कुस्थितिकृच्चासि प्राज्ञस्त्वां प्राह कौशिकम् ॥ ५५ ॥

शुनश्शेपोऽस्ति ते प्रेम्णि कौशिकीं च न मुञ्चसि ।
शकुन्तलापकालितोप्यासि त्वं कौशिको ध्रुवम् ॥ ५६ ॥

शून्यत्रिलोकनाथं त्वां बुधाश्शंसन्ति कौशिक! ।
तदिन्द्र इव भूयास्त्वमगोचरपदे क्वचित् ॥ ५७ ॥

शून्यग्रामेषु ते सन्ति भद्रपीठान्यनेकशः ।
कुटुम्बिगृहसंवेशो घूक! ते न यशस्करः ॥ ५८ ॥

बालास्स्त्रियो वयं चाऽपि त्वद्भीता घूक! रात्रिषु ।
चीत्कुर्वन्तः प्रवेपन्तः धृतिं नैव लभेमहि ॥ ५९ ॥

मा दृप्य कौशिकोस्मीति दिवाभीतो निशाटनः ।
दिवा निशा च यमिनां घूक! ते वै निशा दिवा ॥ ६० ॥

कौशिकोस्मीति नाम्ना त्वं मादृप्य क्षणदाटन! ।
इदं ब्राह्ममिदं क्षात्रमिति वक्तुं त्वमक्षमः ॥ ६१ ॥

एकोनमखिलं हेयं दर्शने ते निशाटन! ।
तत्तु सन्तानगोपालमन्त्रमेकं त्वयेक्षितम् ॥ ६२ ॥

अस्पष्टवर्णरुचिरां बाललालनपल्लवीम् ।
जप सन्तानदां घूक! मन्त्रमालां त्वयेक्षिताम् ॥ ६३ ॥

द्विचतुष्षष्ठसप्तमाक्षराण्युच्चवन्ति वै ।
पवस्वसूरियेत्यत्र सूरीत्युच्चमुदीरयेत् ॥ ७८
(आशे यकारस स्थस्य) आकारे च यकारस्थे कर्षणद्वयमुच्यते।
यथा तत्सवितुर्गाने शुद्धगायत्रमीरितम् ॥ ७९
सप्तमे चाष्टमे चाऽपि तथैवार्चिकमूह्यते ।
नवमे प्रस्तुते गाने [1]ह्यस्तङ्गाव इतीहतु ॥ ८०
प्रत्यक्षरं [1]प्रङ्खभूतं कुर्यात्स्पष्टतरं बुधः ।
गायेत्तदनवानेन प्रदेशिन्यां नधेनवः ॥ ८१
तृतीयाक्षरमत्रोच्चं विदध्यात्पण्डितोत्तमः ।
अग्मन्नृतस्य योऽत्रेति नीचमाद्यन्तमक्षरम् ॥ ८२
यकारस्थितमोकारं कर्षयेद्विर्विचक्षणः ।

धूर्गाने अनिरुक्तगानप्रकारः.

एतेष्वार्चिकगानेषु यावत्यः स्वरकल्पनाः ॥ ८३
अनिरुक्तेऽपि ताः कुर्यात्प्रणवेनास्तबिन्दुना ।
धूर्गाने प्रथमे कुर्या [2]दहिङ्कारत्वमेव च ॥ ८४
व्यक्तीकुर्यात्तृतीये तु[3]षाधा इत्यक्षरद्वयम् ।
[3]सोमाश्शुक्राः चतुर्थे तु द्योतयेदक्षराणि च ॥ ८५
धूर्गाने [3]पञ्चमे पादं द्वितीयं च [3]नुषे त्यपि ।
अस्तङ्गाव इति स्थाने [4]भकाराणां चतुष्टयम् ॥ ८६
अत्रा[4]प्याकाररहितं हिङ्कारं भ्रमयेत्सकृत् ।

स्तोत्राङ्गजपः.

[5]आदौ बहिःस्तुते [6]रूर्ध्वं [5]ह्यन्न[6]मन्नं जपेद्द्वयम् ॥ ८७

---

[1]आ–पि. [2]द्रा–३–४–२३. [3]ष-वि–२–१. [4]द्रा–३–४–२४. [5]म–१–३–७. [6]म–१–३–७.

### यजमानवाचनं मन्त्रविनियोगश्च.

स्वामिनं वाचये[1]च्छ्येनः यष्टुरभ्यर्थनं ततः ।
उपह्वयध्वं गातारः [2] संवर्चसा प्रेक्ष्य जपेत् ॥ ८८
उपस्थानं [3] नम स्सूर्ये गाता प्रास्येत्तृणं यदि ।
[5] समुद्रं वोदनयनस्युग्मानि पदानि च ॥ ८९

### धिष्ण्योपस्थानम्.

[6] अध्वादित्यह्युपस्थानं [7] सम्राद् आहवनीयके ।
[8] तुथोऽस्यास्तावदेशे स्याच्चात्वाले [9] नभोऽसि हि ॥ ९०
[10] असंमृष्टोऽसि शामित्रं आग्नीध्रीये [11]विभूरसि ।
होतुर्धिष्ण्ये [12]वाह्निरसि [13]श्वा मैत्रावरुणीयके ॥ ९१
[14] तु ब्राह्मणाच्छंसिके स्यात् [15] उशिक्स्यात्पोतृधिष्ण्यके ।
नेष्टकऽ[16]ङ्गारि रच्छवा ककेऽ[17]वस्युरसीत्यथ ॥ ९२
[18] शुन्ध्युर्मार्जालीय औदुम्बर्या [19] ऋतधेति हि ।
[20] समुद्रो ब्रह्मणस्स्थाने [21]अहिः प्राजहिते भवेत् ॥ ९३
स्याद्गार्हप(त्यो)त्येऽ[22]जोऽसीति [23]सगरा दक्षिणाग्निके ।
[24] कव्यो दक्षिणवेद्यन्ते [25]पातमा सर्वसंहतौ ॥ ९४
[26] मामासन्ता प्रवेशश्च [27]नभ इत्युपवेशनम् ।

### चमसभक्षणप्रकारः.

निमित्तभक्षणादूर्ध्वं समाख्याभक्षणक्षणे ॥ ९५
प्रकुर्वीरंश्च सर्वत्र [28]श्येनः चमसवक्षिणम् ।
आप्यायनीयं चमसं [29] इन्दो द्विर्भक्षयेत्बुधः ॥ ९६

---

1 म–३–१८. 2 म–१–३–९. 3 म–१–३–१०. 4 द्रा–४–१–७. 5 द्रा–४–१–८. 6–27–म–१–४–१ १–५–२. 28 म–१–५–३. 29 मु-१–५–४.

**आप्यायनोक्तितस्योक्तं** सर्वभक्षणमेव तु ।
[1]**ऊर्ध्वस्सप्तऋषीत्यादि** मुखच्छिद्राणि स॰स्पृशेत् ॥ ९७
[2]**सोमरा** हृदयस्पर्शः [3]**सोमगी** र्नाभिमामृशेत् ।
चमसं पूरये [4]**दाप्याऽ**[5]**वमैर्नाराशभक्षणम्** ॥
[6]**दीक्षायै** स्तोमभागोऽयं भवेन्[7]**मंत्रचतुष्टयात्** । ९८

## कुशाविधानम्.

प्राक्स॰स्थ उदगग्र विष्टावः प्रथमः स्मृतः ॥ ९९
तं पश्चिमेन प्रागग्र उदक्स॰स्थश्च मध्यमः ।
प्रत्यक्स॰स्थोऽदगग्रः पश्चिमेनैव तं प्रति ॥ १००
पर्यायाश्चैवमेव स्युः [8]प्रस्तावान्ते कुशाविधिः ।
[9]पर्यायादिषु हिङ्कारं स्तुवीर॰स्तेत्रयोऽपि हि ॥ १०१
[10]प्रस्तुत्योत्तमांस्तोतैषा श॰सिष्यन्तं वचोऽब्रवीत् ।

## यजमानवाचनं स्तोममोचनमन्त्रश्च.

[11]**स्तुतस्य स्तुतमसीति** वाचनं यष्टुरेव च ॥ १०२
स्तोममोचनमन्त्रस्तु [12]**ऋतस्यत्वा** भवेत्तथा ।

## आज्यस्तोत्राणि तद्गानप्रकारश्च.

[13]अग्नआयाहि दाविद्यु आनोमित्राभिते तथा ॥ १०३
स नः पवस्ववदायाहि इन्द्राग्नी हिन्ववत्तथा ।
(आज्याद्यं तु दविद्युवदानोमित्राभिते तथा ॥ १०४

---

[1] म-१-५-५. [2] म-१-५-६. [3] म-१-५-७. [4] म-१-५-८. [5] म-१-५-९. [6] म-१-५-१०. [7] द्रा-५-१-२६. [8] द्रा-५-२-९×१४. [9] द्रा-५-२-१७. [10] द्रा-५-२-१८. [11] द्रा-५-१२-१९. [12] द्रा-६-३-४×६. म-१-६-७- [13] द्रा-२१-४-११.

स नः पवस्ववदायाहि इन्द्राग्नी हिन्ववत्तथा) ।

### माध्यन्दिनं सवनम्.

लोकद्वारं तथाग्नीध्रे वेद्याक्रमणं [1] मृदाशिथि ॥ १०५

[2] पातमाग्नय इत्यादि प्रविश्योपहवस्तथा ।

गच्छेत्स्तो[3]ता हविर्धानं रराट्यालम्भनादयः ॥ १०६

प्रस्तोता तैश्च सर्पेत ऋग्जपादीनिचेष्यते ।

(जपोग्निः प्रतिनेष्यते)

### दक्षिणाप्रतिग्रहमन्त्रोहः.

शतानां द्वादशान्तानां दत्तानां ग्रहणे विधिः ॥ १०७

[4] देवस्यत्वेति सर्वेषां [5] पुरस्ताज्जप उच्यते ।

[6] वरुणस्त्वेति [7] क इदमित्यस्मिन्मन्त्रयुग्मके ॥ १०८

[6] त्वादेवि दाक्षिण स्थान [8] वो देव्यो दाक्षिणा इति ।

[9] गांतयेत्यत्र गास्ताभिः शेषं प्रकृतिवद्भवेत् ॥ १०९

[7] इमा इतीदमि त्यत्र त्वा स्थले [8] व इतीरयेत् ।

[9] नयात्वित्यत्र देवीत्येतयोर्बहुवा(चि)चकम् ॥ ११०

[7] तत्ते इत्यत्र [8] तास्ता इत्यन्यत्प्रकृतमुच्यते ।

गवादिद्रव्यजातीनां एवमूहो विधीयते ॥ १११

### माध्यन्दिनपवमानस्तोत्रम्.

गाहीयरौरवे चैव यौधाजयमथौशनम् ।

माध्यन्दिनाभिधानं च पवमानमितीरितम् ॥ ११२

---

[1] म–१–१–७. [2] म–१–४–१५—द्रा–५–३–२. [3] द्रा–५–३–७. [4] म–१–८–१. [5] द्रा–५–३–१४. [6] म–१–८–२. [7] म–१–८–१७. [8] द्रा–५–३–२१—[9] म–१–८–३.

निष्प्रत्यूहां भक्तिं तथा यदि तरङ्गितं स्यात्ते सुखमित्यादि बहुविधं निजनिजवृत्तान्तान् जल्पन्तीभिः कर्णेकर्णे किमपि किमपि वरारोहाभिस्सानन्दगद्गदं समुद्धृताञ्जलिपद्ममभिसेव्यमानः प्रवर्तितयथापूर्वमहोत्सवः कृतनीराजनोऽनुगृह्य साञ्जलिबन्धं निभृतमासेवमानं चिन्नकृष्णनायकविभुं प्रविवेश दिव्यालयमध्यमत्यद्भुतम् ॥ ६८ ॥

प्रथमदिनमभूद्यथोत्सवश्री-
  श्शतगुणिता ववृधे ततोऽनुघस्रम् ।
तदिह निगदितुं मया सहस्रं
  यदि वदनानि तदाप्यशक्यमेव ॥ ६९ ॥

इतरेद्युः ॥ ७० ॥

स्वदीप्तिहारीणि वसन्ति रत्ना-
  न्यत्रेति तान्युद्ग्रथितुं किलार्कः ।
पाश्चात्यपाथोधिजलान्तराले
  प्रपात्य रश्मीन् निममज्ज मन्दम् ॥ ७१ ॥

अनन्तरं निरन्तरसंतोषसंततिदन्तुरितान्तरङ्गेण श्रीमता चिन्नकृष्णनायकविभुवरेण विरचितप्रार्थनतया स्वीकृतकंसहिंसनवेषं खड्गखेटकोत्क्षेपणकृतयतनकंसकरद्वयदृढतरनिक्षिप्तवज्रसंस्पर्शचरणद्वयमन्तस्समुज्ज्वलत्प्रतापाग्निस्फुलिङ्गाभ्यामिव रोषापाटलाभ्यां नयनाभ्यां कंसमेव दन्तावलमिव केसरीन्द्रं दर्शंदर्शं निषण्णमन्तास्स्थितां तमोगुणाभिवृद्धिमिव कंसस्य शिखां वामकरेण समाकर्षन्तमेवमेव निष्पीडयामि त्वदङ्गमिति कंसाय सूचयन्तमिव दक्षिणकरेण दृढतरां मुष्टिं दधानं दुर्दर्शं निजभक्तजनैरपि दुष्प्रेक्षं लक्ष्म्यापि क्रोधमिव मूर्तीभूतं शौर्यमिव धृतविग्रहमवाङ्मनसागोचरदर्पातिरेककम्पितब्रह्माण्डमण्डलं विदलितहिरण्यकशिपुनृसिंहरूपमिव

दर्शयन्तं कुसुमाभिवर्षणसमयपरिभ्रष्टेन परितः प्रतिविहितपद्मरागाकिङ्कि-
णीकेन निजप्रभापिहितान्तरालेन वज्रमयेन सुराङ्गनाकरतलैकवलयेनेवारु-
णतरकौशेयसूत्रविरचितप्रान्तजालकेन श्वेतच्छत्रेण परिमाण्डितोत्तमाङ्गं
निजकरनखरानिकरमरीचिकोत्करमिव चामरं वल्गयन्तीभ्यां सुन्दरीभ्यां
पञ्चास्यमिव चमरीभ्यां कृतसेवनं दर्पातिरेकचूर्णीकृतविकर्णिकं समकुट-
मणिगणेनेव देदीप्यमानेन प्रदीपगणेन प्रकाशितेषु दिशाभ्यन्तरेष्वस्म-
त्सनाम्नो वसुदेवस्य बहुतरं प्रदत्तबाधं कंसममुं दुरात्मानं निजग्राह
भगवान् यदुनन्दन इति हर्षात् सिंहनादानिव विमुञ्चत्सु स्वर्णकोणाह-
तेषु यथेष्टं निनदत्स्वानकदुन्दुभिबृन्देषु तत्रतत्रायें किं कथयामि लीलाम-
मुष्य कैतवरूपकसूत्रधारस्य यदुवीरस्य पश्य कथं वर्तते पदयुगलपिष्य-
माणकंसविग्रहोऽयं भगवान् धन्योऽयं चिन्नकृष्णविभुरेव यदस्यां
नगर्यां शतवर्षैरपि वृद्धैर्जातुचिदप्यननुभूतं दिव्योत्सवमुत्सवाय भुवनानां
प्रवर्तयति किञ्च कथमर्पयामास भगवते श्रीसौम्यकेशवायेदृशं रूपमर्चकः
कुशलतरः खलु नान्यथेदृशानि शक्यानि रूपाणि समर्पयन्तमहो
कंसमुख एव दत्तदृष्टिरपि भगवान् कामपि साध्वसलतिकां हृदयालवाले
प्ररोपयति पश्यतां जनानां किं पल्लवितेन नैवं कुत्रापि दिव्यस्थले
शक्यं द्रष्टुं भगवद्दिव्यवेषधारणवैभवमित्युद्घुष्यन्तो दृष्ट्वादृष्ट्वा कायमान-
भुवि यथाक्रमं परिक्रामन्तं रमाकान्तं जन्मनस्साफल्यं मेनिरे नयनानां
चिराय नरा निखिलाः ॥ ७२ ॥

किं वक्ष्ये यदुसुतरूपमद्भुतं त-
यद्दृष्ट्वाऽवनिकमलादिदेवदेव्यः ।
किन्न्वस्मत्पतिरिह बालतामवापे-
त्याश्चर्यान्निभृततनूलता बभूवुः ॥ ७५ ॥

मम वदनरुचिहरोऽसाविति रोषात्पूर्णहिमकरमिवाश्नन् ।
रुरुचे स बालकृष्णो निस्तलनवनीतकबलमथ जक्षत् ॥ ७६ ॥

भक्षणसमये कुतुकादुपरि क्षिप्तमिव बालकृष्णेन ।
नवनीतमण्डलमथ प्रबभौ तन्मूर्ध्नि सिततरं छत्रम् ॥ ७७ ॥

क्षीरपाणजातकौतुकाच्युताननोल्लसत्-
फूत्कृतोत्थशीकरालिपुञ्जसंशयावहम् ।
कम्पते स्म मन्दमन्दमिन्दुभानुसुन्दरं
चामरालिबृन्दमग्रसुन्दरीकराम्बुजैः ॥ ७८ ॥

मामेवायमुदीक्षतेऽतिललितं मामेव मामेव मे
भाग्यं योग्यमनन्यभोग्यमिह यन्मामेव पश्यत्ययम् ।
इत्थं जृम्भितजल्पनं जनचयं दिव्यैः कटाक्षोत्करैः
प्रत्येकं प्रविलोकयन्निव बभौ बालस्स पद्मेक्षणः ॥ ७९ ॥

यदीदृशं मे तनयं ददासि
देवेश सत्यं शृणु मद्वचस्त्वम् ।
काङ्क्षामि नान्यज्जगतीतलेऽस्मि-
न्नित्यब्रवीत्काचन वीक्ष्य कृष्णम् ॥ ८० ॥

बाले पश्य शिशुं सखि द्रुततरं याहि प्रिये स्थीयता-
मागच्छाम्यहमप्ययेकुचयुगं चेलेन संछादय ।
मूर्ध्न्याघ्राय परिष्वजे शिशुममुं गृह्णामि किं चिन्तये-
त्येवं देवमुदीक्ष्य पङ्कजदृशो मत्ता जजल्पुर्मिथः ॥ ८१ ॥

तत्र काचित् साञ्जलिबन्धं ध्यायंध्यायं बालकृष्णमेवमभिदधे ॥ ८२ ॥

केनेदं नवनीतमत्र गिलितं मातर्बिडालो महा-
नागत्यागिलदस्तु स क विवरं पैपीलिकं प्राविशत् ।
एतद्बाल कथं भ्रुवं गिरिकया कृष्टः कयापि च्छला-
दित्थं गोपवधूत्तरं समवताच्छ्रीबालकृष्णोरितम् ॥ इति ॥८३

धन्या देवकनन्दनैव सुषुवे यत्सूनुमेतादृशं
बालोऽप्येष मनो ममाद्य हरते स्याद्यौवनेऽसौ कथम् ।
लभ्यः पुण्यवशादमूदृशसखः क्रीडार्थमित्यादरा-
द्वृद्धाभिर्युवतीभिरेष जगदे बालाभिरप्यच्युतः ॥ ८४ ॥

काचित् पुनस्साञ्जलिबन्धम् ॥ ८५ ॥

कुन्दारूढो वसनमहरः कुन्दमन्दस्मितानां
तत् किं दत्तं सदसि भवता तत्र पाञ्चालपुत्र्यै ।
नोचेदेवं क नु तव भवेच्चेलजालं कुचेले
मैत्रीभाजस्सदयमव मां बालकृष्णातिनम्राम् ॥ इति ॥८६॥

यथाक्रमं जातमहोत्सवस्तदा
प्रक्लृप्तनीराजनदीपमङ्गलः ।
स चिन्नकृष्णप्रभुसेवितो मुहु-
र्विमानमग्र्यं प्रविवेश केशवः ॥ ८७ ॥

सदा हि मकरे प्रीतिमात्मनस्स्फुटयन्निव ।
तदाऽहिमकरोऽन्येद्युर्मकरं प्राविशत्तदा ॥ ८८ ॥

दिवसे तत्र सरसेन घृष्णुना चिन्नकृष्णनायकविभुवरेण विरचितामङ्गी-कृत्य प्रार्थनामारुह्य तुङ्गतुङ्गं तुरङ्गं तदुचितयोधोत्तमाकल्पशाली वनमाली निर्गत्य दूरं नगरान्निवर्तिततत्कालोचितमृगयाव्यापारः प्रविश्य

नगरमयमात्मसहोदरं तुरङ्गमारूढो भगवानिति हर्षोत्कर्षात्केशवारूढ-
तुरङ्ग उच्चैश्श्रवोभ्रमात् स्वयमप्यनुव्रजता सुधाकरेणेव धवलातपवारणेन
कल्पिताकल्पोऽनल्पधवलतरवालव्यजनवीजनजातशीतवातपोतसुखितमा-
नसस्तत्रतत्र मिलितानां किमये भगवतस्सौम्यकेशवस्यानुकम्पा कियती
भक्तेषु यन्मकरसंक्रमणमासीदिति वचनश्रवणादेव कस्यासीदित्य-
विचार्यैवानुभूतचरगजराजखेदमनुचिन्त्याकस्मादेव वाजीश्वरशब्दमात्रा-
देव जानंस्तुरङ्गराजमेव विहङ्गराजमतिमानसया गत्या तत इतश्चर-
तीव राजते वीथीषु वीथीषु धन्याः खल्वीदृशेन भगवता सनाथी-
कृता इमे जनपदाः प्रायेण चिन्नकृष्णविभुवर एव भगवतोऽनुकम्पा
निष्कम्पा यदेकदाप्यदोनगरनिरन्तरावस्थितैरस्माभिरपीदृशानि न सेवि-
तानि परिष्करणानि देवस्य प्रायेणासौ निजकारितेषु ब्रह्मोत्सवेषु
विस्मृतं कुठारोत्सवममुं स्मारंस्मारं प्रवर्तयितुमवतीर्णः पुनरपि धरा-
मण्डले विष्णुवर्धनभूपालमणिरेव चिन्नकृष्णनायकविभुरूपेण नचेदेव-
मीदृशे स्मरणानुचितकलुषशतकबलिते लुब्धाग्रगण्यपिचण्डिले निर्दय-
हृदयजनदन्तुरिते कलियुगेऽवतीर्णानां जनानामीदृशी दूरदर्शिता भग-
वत्सेवनैकतानता दयालुता भूदेवताभ्यर्चनानिस्तन्द्रता महोदारतोचितज्ञता
च क्वनु भवेत् किं बहुनाभिवर्धताममुष्य श्रीकेशवदेवकृपया पूर्णमायु-
स्समेधतामुत्तरोत्तरं श्रीसौम्यनायिकाकटाक्षपरिवाहेणामुष्य सकलजन-
श्लाघिता संपत्तिरनुभूयादयं कुमारविचित्रलीलाविलोकनसुखं भूयादप्रति-
पक्षश्चेति सश्लाघं साशीर्वचनमन्योन्यं जल्पति जनानां बृन्देबृन्दे
प्रतिगृहद्वारमङ्गीकृतघनसारप्रदीपनीराजनमङ्गलः प्राविविशदसमानं निज-
विमानम् ॥ ८७ ॥

अपरेद्युरङ्गीकृतपट्टाभिरामाकृतिमवनतवदनसरसिजया जनकजया
वामभागे प्रतापेनेव तनूमता हनूमता पुरतो धृतधवलातपत्रेण सुमित्रा-

पुत्रेण पश्चाच्चामरव्यालोलननिरतेन भरतेन वालव्यजनवीजननिघ्नेन शत्रुघ्नेन च पार्श्वदलयोर्हेमाम्बुजमालिकोल्लसद्ग्रीवेण सुग्रीवेण पुलस्त्यकुलभूषणेन विभीषणेन समुल्लसत्कनकाङ्गदेनाङ्गदेन दिव्याभरण निकुरुम्बवता जाम्बवता च यथाक्रमं वाय्वादिकोणस्थितैरर्पितसकलोपचारं निरन्तरलवणजलनिधिकटुतरजलपानजातरसनाजाड्यनिर्धूननेच्छया मधुरतरविष्णुसमुद्रसलिलपानायावतीर्णमिव कञ्चन प्रावृषिकाम्बुदशावं सायंसमयविदलत्कलिन्दनन्दनेन्दीवरबृन्दसौन्दर्यगर्वसर्वस्वसर्वङ्कषकान्तिकान्तं रमाकान्तं चारं चारं कायमाने प्रविष्टं विमानाभ्यन्तरं वेलापुरभूषणमणिं श्रीसौम्यकेशवं दर्शंदर्शं मुहुर्मुहुर्हृष्टहृष्टान्तरङ्गं बृन्दंबृन्दं जनानां स्मारं स्मारं दिनदशकप्रवृत्तं दिव्योत्सवं श्लाघंश्लाघं चिन्नकृष्णविभुं कारंकारमञ्जलिं वारंवारं पुलकिताङ्गं मुञ्चंमुञ्चमानन्दबाष्पं मन्दंमन्दं निजनिजगृहान् कथंकथंचन प्राविक्षत् ॥ १० ॥

लोकेशार्चितचरणश्रीकेशवकरुणयात्तसकलश्रीः ।
रक्षति वेलानगरीं दक्षश्श्रीचिन्नकृष्णविभुवर्यः ॥ ९१ ॥

शुभमस्तु सकलजगतामिभवरवरदस्य करुणया सततम् ।
अभिवर्धतां निरन्तरमभयद इह केशवोत्सवारम्भः ॥ ९२ ॥

इति बालकेन रचितां मतिहीनेनापि केशव कृपालो ।
अतिकृपया कृतिमेतां प्रतिगृह्य चिराय देहि मम हर्षम् ॥ ९३ ॥

अनधिगतकाव्यपरिमललेशाः कति चन गभीरभावाढ्ये ।
कविवचने मा जात्वपि गुणदोषविवेकचापलं यान्तु ॥ ९४ ॥

श्रीवासब्रह्मतन्त्राग्रिमपदकलिजिद्देशिकेन्द्राङ्घ्रियुग्मा-
म्भोजातानुग्रहात्तप्रचुरकवन इत्येव विख्यातिमान्यः ।
यस्य श्रीसज्जयार्यप्रबलकरुणयोत्तेजिता साहितीधी-
र्यश्श्रीतातार्यपादाम्बुजयुगलसमाराधनेष्वेकतानः ॥ ९५ ॥

कृष्णाम्बागर्भभास्वत्कनकमयलसत्सम्पुटान्तर्विराज-
ज्जन्मश्रीवेङ्कटार्यारुणमणिसहजं यं वदन्तीन्द्रनीलम् ।
श्रीमच्छ्रीवत्सदिव्यान्वयजलधिविधोर्यं च रामार्यसूरे-
दौहित्रं रङ्गनाथाभिधवरकृतिनो भागिनेयं च लोकाः ॥९६॥

प्रत्यग्रदुर्गनगरीतातार्यतनूभवेन तेन मुदा ।
कृष्णेन केशवोत्सवमाला रचिता धरातले जयतात् ॥ १७ ॥

पदगुम्भने प्रयत्नो रचितो न मया महार्थघटने वा ।
रसनाग्रस्थस्सहरिस्स्वयमेवाकारयन्मया स्वनुतिम् ॥ ९८ ॥

श्रीचिन्नकृष्णनायकदत्तानुज्ञः प्रबन्धमेकादिनम् ।
रुधिरोद्गारिनभस्सितदशमीं कृष्णकविरेनमाचख्यौ ॥ ९९ ॥

जयतु भुवि वदान्यमण्डलश्री-
र्जयतु कवित्वझरी महाकवीनाम् ।
जयतु सहृदयावलिर्महार्घा
जयतु वृषाद्रिपतिश्चिरं स्थिरश्रीः ॥ १०० ॥

इति श्रीनवदुर्गरचितावासस्य श्रीशठमर्षणकुलतिलकवेङ्कटार्यवर्यपौत्रस्य सरसकविचक्रवर्तितातार्यवर्यद्वैतीयीकनन्दनस्य कृष्णकविसार्वभौमस्य कृतिषु श्रीकेशवोत्सवमालिकाख्यः प्रबन्धष्षष्ठस्समाप्तमगमत् ॥

अलङ्कारमणिहार–रसास्वादिनी–रत्नप्रकाशादि शतप्रबन्ध-
निर्माणचातुरीधुरीणैः

श्रीकृष्णब्रह्मतन्त्रपरकालसंयमीन्द्रैः
पूर्वाश्रमे समनुगृहीता

# श्रीवेलापुरीयसौम्यकेशवोत्सवमालिका

तत्पादाम्बुजसेवासमासादितसाहितीविभवेन श्रीमहीशूरमहाराज
संस्कृतसरस्वतीप्रासादमहापाठशालायां ज्योतिश्शास्त्र-
प्रधानोपाध्यायेन संस्थानमहाविदुषा

**क रूरु शे षा चा र्ये ण**
संशोधिता



मैसूरु
श्रीराजकीयशाखामुद्रायन्त्रालये सम्मुद्रिता
१९३७

# ग्रन्थसमालोचना.

---

## ADYAR BULLETIN NO. I.

### ब्रह्मविद्या–त्रैमासिकपत्रिका.

इदं खलु पाठकमहाशयानां महद्भागधेयम्, यन्मद्रनगरस्थानीये आद्यार्य (Adyar) पुरे विद्योतमानब्रह्मविद्यासमाजे प्रतिष्ठापितस्य पुस्तकमहाभाण्डारस्य सकाशादिदानीं "ब्रह्मविद्या" नामिका त्रैमासिकी पत्रिका प्रकाश्यत इति श्लाघ्यतरोऽयमारम्भः। अनेन ब्रह्मविद्यासमाजप्रतिष्ठातुः श्रीमत्कर्नेल् आल्काट् महाशयस्य हृदयस्थस्सदुद्देशस्सफलो नीतः। अनेन च सर्वत्र ब्रह्मविद्यासमुन्नतेः महानवकाशः प्रकल्पितः। अयमाशयः ब्रह्मविद्यासमाजाध्यक्षेन श्रीमता अरुणदळ (Dr. Arundale) महोदयेन श्रीमता जिनदासमहाशयेन च साशीर्भिः प्राकाश्यत। वयमपि अस्याः पत्रिकायाः समुन्नतिं सुप्रचारं सत्प्रयोजनं च निजहृदा आशास्महे ॥

अस्याः पत्रिकायाः प्रथमसंपुटस्य प्रथमसञ्चिकायां प्रकाशितेषु लेख्येष्वेवमस्मदाशयस्सूच्यते। कल्किशब्दस्य व्युत्पत्तिरनेकधाऽतिप्रगल्भं प्रकाशिता। तत्रैकापि अस्मत्स्मृतिपथं नारोहति। (कलि कामधेनौ) इत्यत्र यथा कामधेनुः स्वर्गौः अभीप्सितार्थान् घटयति तथा 'कलि' धातुश्च यथोद्दिष्टानर्थान् संघटयतीति कृत्वापि कल्किशब्दनिर्वचनं कर्तुं शक्यमिति प्रतिभाति। अत्र जयदेवनिबन्धनं यथा–' म्लेच्छनिवहनिधने कलयसि करवाळं धूमकेतुमिव कराळम्। केशवधृतकल्किशरीर जय जय जगदीश हरे'—(गीतगोविन्दे

१-१०)। अत्र कूलङ्कषविमर्शिनः पण्डिता एव प्रमाणम् । परमधीमतश्श्रीमतो दिङ्नागाचार्यस्य 'प्रमाणसमुच्चयः' श्रीमद्भिः मैसूरु रङ्गस्वामय्यङ्गार्यमहाशयैः संस्कृतभाषास्वरूपं नीतः प्रचकास्ते । मूलभाषायाः अन्यभाषया परिवर्तनं नाम कष्टतरोद्यमः । लेशेनाप्यर्थभेदावकाशः भवत्येव । तदर्थनिष्कर्षः श्रीमद्भिः अय्यास्वामिशास्त्रिभिः सम्यग्विमर्शेन निरूपित इति हृन्नेत्रसुभगोऽयं विषयः । माधवकृतऋग्वेदव्याख्या बहुप्रयोजनकरी दृश्यते । अद्वयतारकामृतनादामृतबिन्दूपनिषदां आङ्गलभाषार्थः सम्यगनूदितः टिप्पण्योपस्कृतश्च । परन्तु मूलेन साकं मुद्रितश्चेत् परमशोभावहः परमप्रयोजनकारी च भवेदित्यस्मदाशयस्समुदीर्यते । आश्वलायनगृह्यसूत्रस्य देवस्वामिभाष्योपेतस्य प्रकाशः सर्वास्तिकजनप्रयोजनक्षमः । अमुद्रितग्रन्थान्यतमस्य वररुचिनिरुक्तसमुच्चयस्य विषयसूचीप्रकाशोऽप्यत्यादरं जनयति ग्राहकमहाशयानां हृदयेषु । तथैव नृसिंहचम्पूकर्तुः सङ्गीतागमकाव्यनाटकपटोः दैवज्ञसूर्यपण्डितस्य विषयको विमर्शोऽपि प्रीतिस्थानमधिगच्छति । अन्त्यतः ग्रन्थविमर्शावसरे, श्रीमत्या कमलाबायी देशपाण्डे इत्यभिजनशोभितभारतमहिळाविदुष्या प्रेग्विश्वविद्यालये अतिप्रौढगम्भीरशैल्या लिखितमूलकं निरूपितः शिशुसंस्कारविषयः सर्वैरुपलभ्य पुनः पुनः पठितव्य इति द्योत्यते। एवं यथारुच्यभिप्रायान् संग्रहेण प्रदर्श्य ब्रह्मविद्यापत्रिकायाः सर्वत्र विजयमाशंसमानाः तत्प्रकाशकमहाशयान् डाक्टर् सि. के. राजाभिजनान् अनेकैर्धन्यवादैस्सम्भावयामः ॥



१३ (१-२)

॥ श्रीः ॥

श्रीमन्महाराजसंस्कृतमहापाठशालापत्रिका

# विषयसूचना

---

# सम्पादकीयसमितिः

१. श्रीमन्तः अर्थशास्त्रविशारदाः विद्यालङ्काराः महामहोपाध्यायाः डाक्टर् आर्. शामशास्त्रिणः, बि.ए., पिएच्.डि., एं.आर्.ए.एस्., विश्रान्त मैसूरु प्राच्यकोशागाराध्यक्षाः शासन-विमर्शशाखाध्यक्षाश्च

२. श्रीमन्तः प्रोफेसर् डि. श्रीनिवासाचार्याः, एं.ए., मैसूरु महाराजाकालेज् संस्कृत प्रधानोपाध्यायाः

३. पण्डितरत्नं धर्माधिकारिणः ब्र. श्री. काशी शेषवेङ्कटाचल-शास्त्रिणः

४. महामहोपाध्यायाः पण्डितरत्नं ब्र.श्री. लक्ष्मीपुरं श्रीनिवासा-चार्याः, विश्रान्तमहापाठशालाविशिष्टाद्वैतवेदान्तप्रधानो-पाध्यायाः

५. महाविद्वांसः ब्र. श्री. क. गोपालकृष्णशास्त्रिणः, महाराजा-कालेज् संस्कृतपण्डिताः

६. महाविद्वांसः ब्र. श्री. करूरु शेषाचार्याः, महापाठशाला ज्यौतिषप्रधानोपाध्यायाः

७. विद्वांसः ब्र. श्री. एस्. वेङ्कटाचार्याः, महापाठशाला साहित्य-प्रधानोपाध्यायाः

८. श्रीमन्तः एस्. बि. कृष्णमूर्तयः, एं.ए., महापाठशालाध्यक्षाः (सम्पादकाश्च)

## विज्ञप्तिः

भो भो महाशयाः! सहृदयाः! सप्रश्रयमिदमिदानीं विज्ञापयामः—संस्कृतविद्याभिमानिनः पुरुषप्रवराः यं कंचन विषयमधिकृत्य संस्कृतभाषामयं अनतिसंक्षिप्तविस्तरं उपक्रमोपसंहारपरिकर्मितं कस्याप्यनुद्वेगकरं अचर्चितपूर्वं कालदेशदशानुगुणं प्रपञ्चोपकारकरं धर्माद्यविरुद्धं "जीर्णमङ्गे सुभाषितम्" इति निर्वेदस्य "वीरा वाचैव केवलम्" इत्यपवादस्य वा प्रशमकरं प्रस्पष्टमुखविलासमुपन्यासं विलिख्य यदि प्रेषयेयुर्महान्तः, तेभ्यो महद्भ्यः समर्प्य अनन्तान् धन्यवादान् पत्रिकायामस्यां तमुपन्यासं पारयामः प्रकाशयितुम् ॥

यदीच्छति वशीकर्तुं जगदेकेन कर्मणा ।
परापवादसस्येभ्यो गाश्चरन्तीर्निवारयेत् ॥
न हीदृशं संवननं त्रिषु लोकेषु विद्यते ।
दया मैत्री च भूतेषु दानं च मधुरा च वाक् ॥

संपादकस्य.

---

## मूल्यप्रकारः

१. अस्याः पत्रिकायाः वार्षिकम् अग्रिमं मूल्यं सार्धैकरूप्यकं प्रापणव्ययपृथक्कृतम्. (भारतमण्डले.)
२. विद्यार्थिनां पुनः एकरूप्यकम्. प्रापणव्ययपृथक्कृतम्.
३. विभिन्नदेशे सपादरूप्यद्वयम् (3s.) प्रापणभृतिः पृथक्.

पत्रिकाप्राप्तिस्थानम्,

संपादकः,

श्रीमन्महाराजसंस्कृतमहापाठशाला, मैसूरु.

## सधन्यवादमस्माभिरङ्गीकृता एताः विनिमयरूपाः पत्रिकाः

---

1. संस्कृतसाहित्यपरिषत्पत्रिका, श्रीनगरम्.
2. संस्कृत साहित्यपरिषत्पत्रिका, कल्कत्ता
3. उद्यानपत्रिका, तिरुवाडि.
4. सुप्रभातम्, काशी.
5. सूर्योदयः, काशी.
6. संस्कृतरत्नाकरः, जयपुरम्.
7. संस्कृतपद्यवाणी, कल्कत्ता.
8. मञ्जूषा, कल्कत्ता.
9. अच्युतः, काशी.
10. कल्याणम्, गोरखपुरम्.
11. मधुरवाणी, बेलगाम्.
12. देववाणी, कल्कत्ता.
13. The Mythic Society Journal, Bangalore.
14. Annals of the Bhandarkar Oriental Research Institute, Poona.
15. Review of Philosophy and Religion, Poona.
16. Journal of Oriental Research, Madras.
17. The Law College Magazine, Madras.
18. Sunday Edition "The Hindu," Madras.
19. The Aryan Path, Bombay.
20. The Theosophical Movement, Bombay.
21. The Philosophical Quarterly, Calcutta.
22. Karnataka Historical Review, Dharwar.
23. Ardra, Ceylon.

24. "Yoga," Bulsar.
25. The Vaitarini, Chowdwar.
26. Poona Orientalist, Poona.
27. The Mimansa Prakasa, Poona.
28. Brahmavidya, Adyar, Madras.
29. ಆಂಧ್ರ ಸಾಹಿತ್ಯಪರಿಷತ್ಪತ್ರಿಕಾ, ಕಾಕಿನಾಡ.
30. ಭಾರತೀ, ಮದ್ರಾಸು,
31. ಸನಾತನಮತಪ್ರಚಾರಿಣೀ, ಭಟ್ನವಲ್ಲಿ.
32. ಜಯಕರ್ಣಾಟಕ, ಧಾರವಾಡ.
33. ಸದ್ಬೋಧಚಂದ್ರಿಕೆ, ಆನಂದವನ.
34. ವಿಶ್ವಕರ್ಣಾಟಕ, ಬೆಂಗಳೂರು.
35. ತಾಯಿನಾಡು, ಬೆಂಗಳೂರು.
36. ಅಧ್ಯಾತ್ಮಪ್ರಕಾಶ, ಬೆಂಗಳೂರು.
37. ರಂಗಭೂಮಿ, ಬೆಂಗಳೂರು.
38. ಕರ್ಣಾಟಕ ಸಾಹಿತ್ಯಪರಿಷತ್ಪತ್ರಿಕೆ, ಬೆಂಗಳೂರು.
39. ಕಾದಂಬರೀಸಂಗ್ರಹ, ಚಾಮರಾಜನಗರ.
40. ಪ್ರಬುದ್ಧಕರ್ಣಾಟಕ, ಮೈಸೂರು.
41. ವಿವೇಕಾಭ್ಯುದಯ, ಮೈಸೂರು.
42. ಪೂರ್ಣಬೋಧ, ಮೈಸೂರು.
43. ಸಾಧ್ವೀ, ಮೈಸೂರು.
44. ಗರಿಕೆ, ಮೈಸೂರು.

॥ श्रीः ॥

# श्रीमन्महाराजसंस्कृतमहापाठशालापत्रिका

प्रतिमासत्रयं प्रकटीक्रियमाणा

"कुर्वन्नेवेह कर्माणि जिजीविषेच्छतं समाः"

(ईशोपनिषत्)

सम्पुटम् १३] १९३७ [सञ्चिका १-२

## वीणा

उन्मादं जनयसि नर्तयत्यजस्रं
शीर्षं स्त्रीपुरुषभिदां विना सहेलम् ।
निर्लज्जं पुरुषसभां प्रयास्यशङ्कं
श्रीवीणे तव चरितं विचित्रमेतत् ॥ १ ॥

अहो किमिदमद्भुतं रसिकलोकवर्गोऽधुना
विघूर्णयति मस्तकं नदति किञ्चिदन्तर्मुदा ।
समस्तकरणान्यपि श्रवणतामुपेतान्यहो
निमज्जति मनो मुहुः मधुरगानवारांनिधौ ॥ २ ॥

हाहा गानसमुद्रोऽयमद्भुतः केन निर्मितः ।
यस्यात्यगाधमाधुर्यं श्रवणेनैव रस्यते ॥ ३ ॥

वदति मुहुः नदति मुहुः प्रोक्तं वक्ति स्वयं पुनश्चापि ।
घनपाठिनीव वीणा वेदायोग्यापि पठति पाठयति ॥ ४ ॥

वेणुः कुत्र गतः विधेः करतले किं तेन वा स्याद्विधेः
वृद्धो गन्तुमपि स्वयं न सहते तेनाश्रयार्थं धृतः ।
वीणा केयमितस्तदीयदुहितुः कृष्टा मया हि क्रुधे-
त्येवं गोपवधूजनेषु च लपन् पायात्सदा केशवः ॥ ५ ॥

क्वचिद्विबुधसन्ततिं क्वचन किन्नरौघं मुदा
क्वचिच्चतुरचारणान् क्वचन नागलोकं महत् ।
चराचरजगन्मुहुर्नवरसैर्भृतं कुर्वती
जयत्यमितवल्लकीसरसवाक्सुधावाहिनी ॥ ६ ॥

यदेतत्कामिन्याः सुरतविरतौ पल्लवरुचा
करेणानीतस्त्वं वससि सह हारेण गुणिना ।
मुहुः कुर्वन् गीतं कुचकलशपीठोपरि लुट-
न्नये वीणादण्ड प्रकटय फलं कस्य तपसः ॥ ७ ॥

विद्वान् सु. उ.

# नव्येश्वरवत्सरारम्भमङ्गलाशंसनम्

---

विधत्तां सारस्यं द्रुहिणगृहिणीसंस्तवभवं
   मिथो वस्सौहार्दं कुशलमनपायं शुभमतिम् ।
सुखं सौजन्यं च प्रमदमधिकायुस्त्रिजगता-
   मधीशश्श्रीनव्येश्वरशरदि दिव्यो हयमुखः ॥ १ ॥

भो लोका नव्येश्वरशरदादौ भूतिलालसाः पठत ।
अग्रिमगाथात्रितयं सहृदयहृदयप्रमोदद्रुघमनिशम् ॥ २ ॥

वेलातिगलीलाम्बुधिबालामणिलोलं
   नानामणिनीलाम्बुजमालारुचिशबलम् ।
धवलाम्बुजनिलयं गुणलसितं हृदि मृदुलं
   कलये हयलपनं धुतकलुषं शशिधवलम् ॥ ३ ॥

खेदाकरनानाजनिदावाम्बुदनमनं
   मोदावहवादाहवजयदानघनवनम् ।
वेदाहरदनुजोदितकदनव्रजदमनं
   बृन्दारकबृन्दावनमीडे हयवदनम् ॥ ४ ॥

वामाङ्कगहेमाङ्गकवामाभुजलसितं
   सीमातिगमाहिमाकरनामाहतदितिजम् ।
निगमाञ्चलमालाञ्चितगरिमानघचरणं
   भज मानस कामाकृतिमश्वाननमसमम् ॥ ५ ॥

भूगोलादधरोर्ध्वगे दिवि चलन् स्वे क्रान्तिवृत्तेऽन्वहं
   तत्तद्देशपलांशभिन्नविषुवद्वृत्तान्नते चोन्नते ।
एकद्व्यादिषडन्तमास्सु कतिचिद्देशेष्वदृश्यो रवि-
   र्दृश्यश्चित्रतमक्रियोऽवतु भुवं नव्येश्वराब्दे भृशम् ॥ ६ ॥

सेनार्घाम्बुदपो नृपो हिमरुचिर्माता जनानां समं
भूसूनुं सचिवं क्रमात् स्वतनयं मित्रं च धान्याधिपम् ।
सौम्यं सस्यपतिं समं सुरगुरुं सौरिं रसाधीश्वरं
कृत्वा पाति च मेदिनीं च कलयन् सस्योत्कटां विष्टपम् ॥

अस्मिन्नीश्वरवत्सरे सितदले वैशाखमासे दिने
चाद्ये भौमदिने दिनापरदले सौम्योऽर्कबिम्बादवाक् ।
तिर्यक् तादृशबिम्बमध्यविलसद्बिन्दूपमो दृश्यते
धूमादर्शवशादनेन जनितामीतिं धुनोत्वीश्वरः ॥ ८ ॥

अत्राब्दे मासि पौषे तपसि च दिनयोस्सम्भवात् पञ्चकृत्वः
पूष्णो भौमस्य चाथो गुरुभृगुसुतयोरस्ततो भौमशन्योः ।
वासादेकत्रराशौ भुजगधिषणयोस्सूरिसौर्योश्च वीर्य-
प्राप्तयो (३-११) र्जीवारयोस्स्यान्नृपविपुलरणं तन्निरुन्धां
[हयास्यः ॥ ९ ॥

गताब्दे भूपुत्रोऽदितिभ उदितोऽब्देऽत्र भवभे-
तदृक्षाद्वक्रोऽतोऽश्रुमुख इति दोषस्समजनि ।
तदीतिव्रातेनाश्रुमुखभुवनं कञ्जनयनः
शुगोघस्तेनोऽनश्रुमुखमुपकल्प्यावतुतराम् ॥ १० ॥

जलनिधिरिव राकाशीतभानोर्मयूखै-
रनितरसुलभैस्स्वैर्वैभवैरेधमानः ।
अवितबुधसमूहः कृष्णराजो जितारि-
र्लसतु भुवि चिरायुस्साप्रियस्सानुजातः ॥ ११ ॥

इति नव्येश्वरवत्सरमुखमङ्गलमेष शेषकविमौलिः ।
आशास्ते कृष्णनृपास्थानमहापण्डितप्रथोपेतः ॥ १२ ॥

आस्थानमहाविद्वान्, करूरु शेषाचार्यः,
ज्योतिश्शास्त्रप्रधानोपाध्यायः.

जातेष्ट्यास्सृष्टिकाले ते मन्त्रो नासीत्सुतप्रदः ।
मुष्टिलभ्ये फलेऽनन्धः किमिष्टिं वष्टि? कौशिक! ॥ ६४ ॥
बाललालनगीतिस्ते दुस्सहाऽपि हिताय नः ।
निम्बतैलमहृद्यं स्तात् खासिनां घूक! तद्धितम् ॥ ६५ ॥
कन्याविक्रयकर्तारः पुत्रविक्रयतत्पराः ।
आयाधिकव्ययव्यग्राः घूक! ते गुरुपुङ्गवाः ॥ ६६ ॥
निद्राभङ्गान्न भीतिर्नः घूक! ते प्रियसोदरान् ।
ध्यायतां ब्रह्मवच्चोरान् तद्भद्र! रट शोभनम् ॥ ६७ ॥
साध्वीपराङ्मुखान् दत्तकन्यारत्नापहारकान् ।
निर्दोषिदूषणव्यग्रान् सतीर्थ्यान् घूक! वेद्मि ते ॥ ६८ ॥
परार्थघ्नाः स्वार्थपराः मिथ्यालोलाः प्रमादिनः ।
अलसाः गर्वमौनाढ्याः घूक! ते सचिवोत्तमाः ॥ ६९ ॥
अनार्याध्वोपदेष्टारः धर्मबोधनभीरवः ।
धर्मोपदेशाश्रोतारः घूक! तावकमातुलाः ॥ ७० ॥
अनवेक्ष्य निजानर्थमप्यन्यानर्थवर्षिणः ।
स्वशिखारोपितालाताः निशाट! तव पार्षदाः ॥ ७१ ॥
निशाटनाऽवतारास्ते शरणागतदुःखदाः ।
रणागतेषु विनताः ये च दुर्बलहिंसकाः ॥ ७२ ॥
अश्लीलभाषिणः क्रूरवादिनः घूक! शापदाः ।
स्वप्रशंसान्यनिन्दासु रतास्ते स्तुतिपाठकाः ॥ ७३ ॥

## तुलापदेशः.

तुले त्वामतुलां मन्ये समां च विषमामपि ।
विषमा न तुलाऽसि त्वं समात्वमतुलाप्यसि ॥ ७४ ॥

दृष्टं त्वयि तुले सत्यं लोकतश्शास्त्रतस्तथा ।
पण्यवत्पुण्यपापौ च मिमते त्वयि वैदिकाः ॥ ७५ ॥

आत्मपातमजानन्तः निजवैषम्यजं तुले ।
अस्थाने पातयन्ति त्वां ते सत्यानृतजीवनाः ॥ ७६ ॥

मध्यबन्धे निगृह्य त्वां तपस्विनि तुले! खलाः ।
अश्वत्थामगजन्याय्यं व्याकुर्वन्ति पुरस्तव ॥ ७७ ॥

त्वं मानमेयवैषम्यं न गूहसि शुभे तुले ।
पिशाचनिगृहीताया वैषम्यं ते न दूषणम् ॥ ७८ ॥

### मानापदेशः.

मानैरकृत्रिमैर्भाव्यं न चेत्स्याद्बुधनिग्रहः ।
कृतकैर्लेखनिष्काद्यैर्जायते राजनिग्रहः ॥ ७९ ॥

### कूश्माण्डापदेशः.

घटोज्ज्वलिताविग्रहं बहुकपालकापालिका-
पदं मणिकसम्भृतं पिठरपीलुपाकास्पदम् ।
घुतैकयुतविंशतिव्यसनसंहतिं त्वामहं
घटीफल! कणाशनप्रियमवैमि तर्कामृतम् ॥ ८० ॥

प्राहुर्विष्णुरथाङ्गवर्तुळतनुं यां शक्रकुम्भीफलं
माधुर्येण सितोपमामपि सिताकुम्भीफलं यां विदुः ।
प्राहुश्शक्रपुरस्कृतामविरतं तां शक्रकुम्भीफलं
सा मान्यामृतकुम्भनीति वचसा तुष्टोस्मि रुष्टोस्मि च ॥८१

देवानाममृतं विभज्य स हरिः क्षीराब्धिकूले न्यधा-
त्कुम्भीं लिप्तसुधाकणां सपदि सा चैतन्यमासादिता ।
संजाताऽमृतकुम्भिनी परिघृतासङ्ख्यातबीजोदरा
या माता किल! कुम्भिनीफलततेर्या शक्रनाम्नाऽङ्किता ॥८२

अग्रे यासि शुभोत्सवेषु सदसि त्वं शोभसे शोभने
सौलभ्यं भवतो गिरामविषयः रे भद्र कुम्भीफल! ।
अन्विष्याधिकमादरेण विपणादामन्त्रितं त्वां गुरुं
केचिन्मास्त्विति हन्त! भुक्तिसमये प्राज्ञास्तिरस्कुर्वते ॥ ८३

भूनायिकातिलकजालसमुद्गकं त्वां
जानामि कुम्भफल! यत्तव भव्यगर्भे ।
पूर्णानि बीजमिषतस्तिलकानि भूमेः
जातानि यानि तिलकाळिनिदर्शनानि ॥ ८४ ॥

कूश्माण्ड! भद्रगुणपूर्ण! विशिष्टशिष्ट-
संसेव्य! शाककुलभूषण! लब्धवर्ण! ।
आजन्मतः परिगृहीतमहोच्चपीठ!
सौलभ्यमेव तव हन्त! गुणापवादः ॥ ८५ ॥

कल्याणमण्डपतलं तव जन्मशाला
तत्रैव वृद्धिरपि ते तव चाऽपि यात्रा ।
तत्रैव माङ्गलिकवाद्यसहानुभूत्या
मान्योस्तिकस्तव समः कलशीफलोर्व्याम् ॥ ८६ ॥

धूतार्जवाक्षिति ऋजूकरणप्रवीण-
क्षोणीसुरेन्द्रकुलमण्डपमण्डनोसि! ।
त्वां शक्रदुर्लभगुणं पथिकाणकाच
लभ्यं निरूप्य बत! कुम्भफलाऽस्मि खिन्नः ॥ ८७ ॥

### णवर्णापदेशः.

णवर्ण! नारायणनामरत्न-
मालालसन्नायकरत्न! भद्र! ।
भाषाप्रपञ्चस्थितशब्दराशि-
मूलातिथे स्वागतमद्य ते स्तात् ॥ ८८ ॥

णकार! गर्वं जहि वर्णवर्गे
मूर्धन्यमूर्धन्यस्मि सदेति दृप्त! ।
नेत्याह कस्तत्स्वसहानुभूति-
रन्त्यार्णकेळौ किमु दूषणं ते ॥ ८९ ॥

णकार! ते भूषणधारणक्रमं
विलक्षणं वीक्ष्य वयं सुविस्मिताः ।
दधाति लोकः किल कुण्डलद्वयं
धत्से त्वमेकः किल कुण्डलत्रयम् ॥ ९० ॥

णकार! माद्दप्य! लिपिक्रमे स्वं
मूर्धन्यमूर्धस्थमवेत्य मूर्ख! ।
त्वां वर्णवर्गा न तथा विदन्ति
नोचेत्कुतः पञ्चदशोऽसि वर्गे ॥ ९१ ॥

णत्वं प्रबाधतामस्मान्नारायणपदस्थितम् ।
या बाधा सुभगा दत्ते सदा नारायणस्मृतिम् ॥ ९२ ॥

णकार! मूर्धन्यतमस्य माऽस्तु
तेऽन्त्याक्षरीकेळिरसस्य भङ्गः ।
प्रदीपभङ्गोऽपि कथाप्रसङ्गे
सह्यो न वर्णक्रमकेळिभङ्गः ॥ ९३ ॥

ण! त्वं प्रकृष्टोऽसि न संशयोऽत्र
प्रकृष्टिपत्राहर एष तेद्दम् ।
आयाहि! वर्णक्रमकेळिभङ्गा-
पराधिनस्ते निगळः किलाऽयम् ॥ ९४ ॥

सत्सन्तानप्रशंसा.

निलयं निरयं मन्ये सत्सन्तानाविनाकृतम् ।
यद्वत्दीपसन्दीप्तमप्यन्धतमसा वृतम् ॥ ९५ ॥

अपुत्रिणो यदैश्वर्यं तदनैश्वर्यलक्षणम् ।
विज्ञानं यदवृत्तस्य तदेवाऽज्ञानलक्षणम् ॥ ९६ ॥
सपुत्रस्य दरिद्रस्य कुम्भीपाकस्सुरालयः ।
विपश्चितो दरिद्रस्य कुम्भीपाकस्सुरालयः ॥ ९७ ॥

### विद्वत्सन्तानप्रशंसा.

सन्तानं जडमप्येकं खे रूढं कामदं विदुः ।
भूरूढो बहुलो विद्वत्सन्तानः किं न कामदः ? ॥ ९८ ॥

### विप्रप्रशंसा.

आनन्दमयकोशस्थं विशुद्धख[1] निगूहितम् ।
सहस्रवर्णरुचिरं सुवर्णं संस्तुमः परम् ॥ ९९ ॥
रणमङ्कुशमासाद्य विश्वं राजा जयेन्न वा ।
शरणं कुशमासाद्य विश्वान्विप्रा जयन्त्यहो ॥ १०० ॥
[2] स्थिताश्चेन्निस्सङ्गं विदधति परेषामुपकृतिं
गताश्चेन्मुक्ताःस्युः जनिमरणचक्रप्रहातिभिः ।
पुनर्वा जाताश्चेत्पुनरपि परेष्टं विदधते
द्विजेन्द्रास्तत्पादान्न जहति रसज्ञाः क्वचिदपि ॥ १०१ ॥

### राजप्रशंसा.

ज्ञानशक्तिबलैश्वर्यवीर्यतेजस्समृद्धिमान् ।
विश्वं रक्षति भूपस्तन्नाविष्णुः पृथिवीपतिः ॥ १०२ ॥
अष्टानां लोकपालानां कर्माणि तनुते नृपः ।
तद्राजा लोकपालांश इति सिध्यति लोकतः ॥ १०३ ॥

---

[1] ख निगूडितमिति विप्रपक्षे खनौ गूडितमिति सुवर्णपक्षे. [2] दन्तपक्ष विप्रपक्षे च विशेषणानि नेयानि.

चन्द्रसूर्ययोरपदेशः

तौ पुष्पवन्तौ धीमान्तौ कालकार्यक्रमाक्रमौ ।
सौम्यासौम्यगुणैरेव यावास्तां जगतः प्रियौ ॥ १०४ ॥

दुर्जननिन्दा.

भूतप्रेतपिशाचाद्यैर्वसेद्वा पितृकानने ।
सत्याचारविहीनैस्तु साकं स्वर्गेपि नो वसेत् ॥ १०५ ॥

दुर्जनविरोधनिन्दा.

महेन्द्रं वाऽपि तत्रातं दूषयेद्भूषयेदपि ।
पिशाचमपि पार्श्वस्थं भूषयेन्नैव दूषयेत् ॥ १०६ ॥

शुष्कोपचारनिन्दा.

सहस्रकरुणालापैः परदुःखं न हीयते ।
ब्रह्मरन्ध्रं शिशिरितं किं तिलघ्नदयोक्तिभिः ॥ १०७ ॥

मानुषनिन्दा.

मरन्दकोशनिर्माणे न ते शक्तिर्नराधम ! ।
मक्षिकोच्छिष्टभोगस्ते परत्वं व्याकरिष्यति ॥ १०८ ॥

गूढोक्तिः (द्विचक्ररथस्य).

रथोपरि रथो भाति यौ नेतारौ परस्परम् ।
एकस्सचेतनो मौनी वाचालोऽन्यस्त्वचेतनः ॥ १०९ ॥

बाष्पयानदोषः.

जङ्घैव विस्मृता स्वीया श्रीमद्भिर्बाष्पयानगैः ।
हन्त स्रष्टाऽपि तेषां नु जङ्घासृष्टिं च विस्मरेत् ॥ ११० ॥

समयभाषी.

अज्ञोऽपि स्यात्प्रशंसार्हः यथासमयभाषणात् ।
शस्यते कालसंभाषी कुक्कुटः कुक्कुरोपि वा ॥ १११ ॥

### असमयभाषी.

अकालभाषी प्राप्नोति सर्वत्राऽपि पराभवम् ।
तादृशौ निहितावास्तां सद्यः कुक्कुरकुक्कुटौ ॥ ११२ ॥

### शून्याङ्कापदेशः.

अकिञ्चनोप्युदारात्मा सर्ववर्णोपकारकः ।
निरर्थको हि शून्याङ्कः सर्ववर्णोपकारकः ॥ ११३ ॥

### अर्धविज्ञानदोषः.

अनर्थायाऽर्धविज्ञानं अर्धज्ञः कोऽपि वारिधौ ।
सच्छिद्रमकरोन्नौकां स्रुतये तद्गताम्भसाम् ॥ ११४ ॥

### पुस्तकपाण्डित्यनिन्दा.

अनर्थदं हि पाण्डित्यं संप्रदायविवर्जितम् ।
गुदं दग्ध्वाच्छिनत्कर्णं कश्चित्पुस्तकपण्डितः ॥ ११५ ॥

### व्याख्यानावलोकदोषः.

आदावमृष्टमूलानां टीका ग्रसति धीबलम् ।
पूर्वं विमृष्टमूलानां टीका दत्ते बलं धियः ॥ ११६ ॥
व्याख्ययैवाऽर्थविज्ञाता याता च रथमात्रतः ।
शक्तिं धियश्च जङ्घायास्स्वस्य नूनं स्वयं हतः ॥ ११७ ॥

### प्रतिभाप्रशंसा.

प्रतिभाशालिनां लोके नैव किञ्चिन्निरर्थकम् ।
इतां मौल्यं हि जानीते पाणिनेः प्रतिभा स्वयम् ॥ ११८ ॥

### नियोज्यशुद्धिः.

नियोज्यानुद्वपेत्काले यथार्हभृतिवर्धनैः ।
शालयः फलदा लोके ह्यावापोद्वापदोहदैः ॥ ११९ ॥

### मूर्खनिन्दा.

सर्वं तुच्छं विमूढस्य सर्वमुच्चं विपश्चितः ।
यदाद्यो नीचयत्युच्चमुच्चं नीचयते परः ॥ १२० ॥

पुच्छस्तुच्छो विमूढानामुच्चं पुच्छो महात्मनाम् ।
उच्चं हनुमतः पुच्छं देवनां न तु रक्षसाम् ॥ २२१ ॥

**वृत्तप्रशस्तिः.**

ज्ञानं सवृत्तं चेद्ज्ञानं न चेदज्ञानमेव तत् ।
देहो जीवयुतः कायः स निर्जीवश्शवस्मृतः ॥ १२२ ॥

**अर्थविज्ञानप्रशस्तिः.**

अर्थज्ञानविहीनानां शब्दजातं हि वाशितम् ।
गोधादिवाशितेस्त्यर्थः न वाक्ये ज्ञानवर्जिते ॥ १२३ ॥

**सतां प्रशस्तिः.**

सन्त एव सतां मानं तान् मातुं नेतरे क्षमाः ।
तुलामानं तुला वेत्ति नातुला वेत्ति तन्मितिम् ॥ १२४ ॥
हृदाकाशो'हि महतामनहंकारजन्मभूः ।
रजस्तमोभ्यामच्छन्नो भूताकाशाद्विलक्षणः ॥ १२५ ॥
सतां चित्तं न मालिन्यं धत्ते संतापितं खलैः ।
परं धत्ते हि वैमल्यं तप्ततप्तसुवर्णवत् ॥ १२६ ॥
महत्त्वं महतां नीचैः तष्टं तष्टं विवर्धते ।
याति नाडिन्धमैस्तष्टा महत्तां कनकालुका ॥ १२७ ॥
श्रीशैलसत्यनिलयकमलावासदेशिकः ।
चक्रे सूक्तिसुधाबिन्दुं लीलया विदुषां मुदे ॥ १२८ ॥

इति श्रीमन्महीशूरपुराधीशश्रीमन्नाल्वडिकृष्णराजशारदाभाण्डागारीयप्रधान-
विदुषः निरुमले सत्यागालं श्रीनिवासदेशिकाचार्यस्य कृतिषु
सूक्तिसुधाकणस्समग्रः.

जयति श्रीकृष्णसार्वभौमः ॥

# सनातनभौतिकविज्ञानम्.

" निखिलमनुजचित्तं ज्ञानसूत्रैर्नवैर्य-
स्स्रजमिव कुसुमानां कालरन्ध्रैर्विधत्ते ।
सलघुमपि ममैतं प्राच्य विज्ञनतन्तु-
मुपहृतमतिभक्त्या मोदतां मे गृहीत्वा ॥
वन्दे विद्वद्बृन्दं भौतिकविज्ञानसारसर्वस्वम् ।
ऋषिपदगतिकरयोगं परमपदसुयोगभाजनं वन्द्यम् " ॥

## १. एतल्लेखोद्देशः.

अयं भौतिकज्ञानविषयः सनातनः, नत्वधुनातनः । जगत्सृष्टिमारभ्य जगन्निदानकारणविज्ञानेच्छा, केषांचित्तत्त्वार्थचिन्तकानां हृदयेषु समुज्जृम्भिता अभूत्, तेषां प्रयत्नविशेषेण भौतिकविज्ञानं, परात्मविज्ञानमिव सम्यगङ्कुरितं सत्, समृद्धं, पुष्पितं फलितं च भूत्वा, रसास्वादनपराणां हिताय सर्वेषु शास्त्रेषु सुप्रकाशं भजतीत्यखिलभारतेयपण्डितानां सम्भावना । परन्तु देशान्तरेषु अधुनातनपण्डितप्रकाण्डैः, ये ये भौतिकविषयास्समालोचिता विज्ञाताश्च भवन्ति, लोकोपकारबुद्ध्या स्वहितसाधनबुद्ध्या वा तद्विज्ञानफलं विविधविचित्रयन्त्रतन्त्रोपकरणनिर्माणचातुरीमुखेन सर्वानुभवसाध्यं नीतं, ते ते विषयाः अस्मत्प्राचीनैः कदापि समालोचिता वा? विज्ञाता वा? तेषां कृषिफलं कुत्र कथमुपलभ्यते? इत्यादि वितर्कं कुतर्कं च, सुवितर्केण, सप्रमाणं सङ्ग्रहेण निवारयितुमयं लेखारम्भः ॥

## २. भौतिकविज्ञानस्यावश्यकता.

सनातनः-पुरातनः। क्षितिजलज्योतिर्वाय्वन्तरिक्षाणि पञ्च-भूतानि। पृथिव्यप्तेजोमनांसि मूर्तानि। वाय्वाकाशात्मादीन्य-मूर्तानि। बहिरिन्द्रियग्राह्यविशेषगुणत्वं भूतत्वं। (भूत=Matter, which is anything that occupies space and may be apprehended by the aid of senses—W. SIMSON). क्रिया-श्रयत्वं मूर्तत्वम्। तदन्यत्वममूर्तत्वम्। विवेकेन ज्ञानं विज्ञानम्। तत् दर्घिकालादरनैरन्तर्यसत्कारसेवितं सत् दृढं भवति। यद्वि-षयकश्चाभ्यासः तद्विषयकमेव साक्षात्कारमुपजनयति। तत्त्व-पक्षपातः, धियां पक्षपातः। अतः विज्ञानसंपादनेच्छा। यस्य वस्तुनः यो भावः तत्तस्य तत्त्वं अनारोपितं (तत्त्वं ब्रह्मणि याथार्थ्ये इति कोशः)। कारणसत्वे कार्यसत्वं, कारणाभावे कार्याभावः इति ध्रुवो नियमः। (Theory of causation) अतः भूतानां कार्य-कारणविज्ञानेच्छा। (One of the objects of men of science is to determine the causes, that is, to furnish an answer to the question "Why do things take place as they do?" W. SIMON.)

पदार्थाः प्रमितिविषयाः खलु, प्रमितिः यथार्थानुभवः। तस्मात्तन्त्रयुक्त्या (Scientific reasoning) उद्देशलक्षणपरीक्षा-मुखेन तत्त्वबोधः। नामधेयेन पदार्थमात्रस्याभिधानमुद्देशः। उद्दिष्टस्य तत्त्वव्यवच्छेदकः साधारणो धर्मः लक्षणम्। लक्षितस्य लक्षणं उपपद्यते वा न वेति प्रमाणैरवधारणं परीक्षा। (The object of men of science is experimenting and observing facts and laws.) तत्त्वज्ञानं निश्श्रेयसहेतुः। निश्श्रेयसं पुनः, " तत्त्वज्ञानोत्पाद्यमिथ्याज्ञानकारणध्वंससमानाधिकरणतत्कार्यस-

मस्तदुःखाभावः " यत्र सर्वमेतत्प्रतिपाद्यते सा आन्वीक्षिकी। (Science of observation and experiment.) तत्स्वरूपं यथा—

"आन्वीक्षिक्यात्मविद्यास्यादीक्षणात्सुखदुःखयोः ।
ईक्षमाणस्तया तत्त्वं हर्षशोकौ व्युदस्यति" ॥
(कामंदकः)

प्रदीपस्सर्वविद्यानामुपायः सर्वकर्मणाम् ।
आश्रयस्सर्वधर्माणां शश्वदान्वीक्षिकीमता ॥
(वात्स्यायनः)

श्रेयस्साधनाभिधायकं शास्त्रम्। तत्प्रवर्तकाः, कपिलगौतमचरककणादादयः । आर्षं विज्ञानन्तु योगिनामूर्ध्वरेतसाम्। तत् न लोकव्युत्पादनायालम्। इति नाभिहितम्। अनधिकारात्। अस्मद्विशिष्टानान्तु योगिनां युक्तानां ज्योतिष्मतीसंयमासिद्धानां, योगजधर्मानुगृहीतेन प्रज्ञालोकसहायेनमनसा, स्वात्मान्तराकाशदिक्कालवायुपरमाणुमनस्सु, तत्तत्समवेतेषु गुणसामान्यविशेषेषु, समवाये च अवितथस्वरूपज्ञानमुत्पद्यते, वियुक्तानां पुनः, आत्मा, मनः, इन्द्रियं, विषयः इत्येतेषां चतुष्टयेन सन्निकर्षात, योगजधर्मानुग्रहणसामर्थ्यात्, सूक्ष्मव्यवहितविप्रकृष्टेष्वर्थेषु प्रत्यय उत्पद्यते ज्ञानम्। सामान्यविशेषज्ञानोतपत्तौ अविभक्तमालोचनमात्रं प्रत्यक्षं प्रमाणम्। न तत्रान्यत्प्रमाणमस्ति । अफलस्वरूपत्वात्। "विलक्षणाह्येषां प्रबन्धृगामाध्यात्मकीशक्तिः। न तत्कार्यं किंचिज्जगति विद्यते। यज्जागरूकास्सन्तोऽमी भारतमानसराजहंसाः आर्यकुलानन्दनाः जातु, सत्वरं, निष्पादयेयुः।" इति हि तत्त्वदर्शिनामुद्घोषः। तथा च ॥

अथ किमु पृथुतन्त्रैर्धीमतो भूरितन्त्रैः
स्वकरकलितयष्टेर्दत्तमूलाग्रदृष्टेः ।

न तदविदितमानं वस्तु यदृश्यमानं
दिविभुवि च जलस्थं प्रोच्यतेऽथ स्थलस्थम् ॥

## पञ्चभूतानि.

खरद्रवचलोष्णत्वं भूजलानिलतेजसाम् ।
आकाशस्याप्रतीघातो दृष्टं लिंगं यथाक्रमम् ॥
लक्षणं सर्वमेतद्धि स्पर्शनेन्द्रियगोचरं ।
तन्मात्रापंचकं यत्तु तन्नूनं भूतपंचकम् ॥

अधिष्ठानभूतं सूक्ष्मशरीरम्। अस्मदादीनां स्थूलशरीरं पार्थिवमेव । अन्यानि भूतान्युपष्टम्भकानि ॥

## पृथिवी. (Earth)

पृथिव्यादीनां चतुर्णां कार्यभूतानां भूतानां तत्तत्परमाणवः कारणानि। परमाणूनां स्वरूपं परिमण्डलमिति पारिभाषिकम्। परमाणुः—निरवयवः, क्रियावान् इति केचित् । परमाणवः—सततगतिशीलाः (Always in vibratory motion); तत्र पारिमाण्डल्यशक्तिः स्पन्दशक्तिश्च वर्तत इति । (Electrons and protons) इति केचि । वस्तुशक्तिरेव तत्र स्पंदनिबन्धनमित्यन्ये। (We learn that all matter is made up of exceedingly small particles, called molecules. Atoms are indivisible; they are concerned in the combination of molecules. Sir James Walker. The atoms in the present state of physical science must be regarded as structures of positive and negative electricity.) तेष्वदृष्टकारितेन परिस्पंदेन, द्व्यणुकत्र्यणुकादिक्रमुत्पद्यते । एवं क्रमेण गिरितरुपाषाणादि पृथिवीकार्यमुत्पद्यते । तथैवान्यभूत-

मात् । अत्र तार्किकैः अङ्गीकृतमदृष्टमेव परमात्मशक्तिरिति मन्यन्ते वेदान्तिनः । तथैवोक्तं भगवता श्रीकृष्णेन ॥

"परमाणुमये चित्तं भूतानां मयि रञ्जयन् ।
कालसूक्ष्मार्थतां योगी लघिमानमवाप्नुयात्" ॥

वाय्वादिभूतानां ये परमाणवः तन्मये तदुपाधिभूते मयी· त्यर्थः । (भा—स्कं. अ १५ श्लो १२)

अस्मिन्न्यायमते परमाणवः नित्याः । तथाचोक्तं—

"सदकारणवन्नित्यं" .... (क.सू ४—१—१).
"नाणुनित्वात्" .... (गौ.सू २—२—२४),
"श्रुतिप्रामाण्याच्च" .... ( ,, ३—१—२१)

श्रुतिस्तु—विश्वतश्चक्षुरुतविश्वतोमुखो विश्वतोबाहुरुतविश्व-तस्पात् । संबाहुभ्यां धमति संपतत्रैर्द्यावाभूमी जनयन्देव एकः" पतत्रैः परमाणुभिः, संधमति संयोजयति, संजनयन् समुत्पादयन् । एवं वैशेषिकीप्रक्रिया ॥

अपकर्षपर्यन्तं परमाणुः । सत्वरजस्तमसां अपकर्षकाष्ठा-मापन्नः सङ्घातः परमाणुः । (Infinitesimally small particles of matter) लोष्टस्य हि प्रविभज्यमानस्य यस्मिन्नवयवे अल्पत्व तारतम्यं व्यपतिष्ठते, सः अपकर्षपरमाणुः (Indivisible particle). अस्मिन्मते परमाणवः,—अण्व्यः, मात्राः, विनाशिन्यः । दशार्धानां जयः स्मृतः । (Binary molecule) आरम्भपरमाणुः स एव । तेषां संगः (Combination), तेषां व्यूहः इत्येवं क्रमेण महाभूतोत्पत्तिः । तत्कार्यद्रव्याणां च (Compounds) उत्पत्ति-रिति सांख्यप्रक्रिया ॥

परमाणुपरिमाणं च—एकयवपरिमाणे अष्टषष्ट्याधिक सप्तश-तयुतद्वात्रिंशत्सहस्रसंख्याताः (32,768) परमाणवः भवन्ति-परमाणुकालः ($\frac{1}{300}$ of a Nimesha) निमेषस्य शतत्रयतमोभागः अथवा ($\frac{1}{200000}$ of a second) सेकेण्डाख्यकालस्य विंशतिसहस्रतमोभाग इति परिगणितः ॥

सू "रूपरसगन्धस्पर्शवती पृथिवी" । पार्थिवपरमाणानां एकजातीयत्वेपि पाकमहिम्ना विजातीयद्रव्यान्तरानुभवः यथा—तृणात् क्षीरम्। पार्थिवास्तु—सुवर्ण रजत मणि मुक्ता मनश्शिला मृत् कपाललोहमल सिकतामुधा हरिकाल लवण गैरिक रसादयः । भूतानामिव स्थावरजङ्गमानां नानावर्णाकृति विशेषा भवन्ति । तत्र कृष्णवर्णं पृथिव्याः स्वाभाविकं। श्रु॥ "यत्कृष्णं तदन्नस्य" नैमित्तिकमन्यत्। गन्धोनैजोगुणः॥

## कार्यद्रव्येषु कर्मोत्पत्तिः.

स्पर्शवद्द्रव्यसंयोगविशेषः नोदनं । (Energy, power or force) स्पर्शवेगोभयद्द्रव्य संयोगविशेषः अभिघातः (Pressure gravitation, etc.).

नोदनं—दक्षिणहस्ततलेन वामबाहुमूलादग्रं यावत् प्रदेशे परामृश्यमाने, दक्षिणहस्तमात्रोत्पन्ना क्रिया नोदनेत्युच्यते। अभिघातः=तेनैव हस्तेन वामबाहोः कस्मिंश्चित् प्रदेशे प्रहरणे कृते स अभिघात इत्युच्यते। अत्र प्रहरणोद्यमे दक्षिणहस्ते यथा क्रिया सञ्जाता तथैवनिरोधरूपप्रतिक्रिया, वामबाहुस्थलेपि सञ्जाता इत्युन्नेयं—अनेन नोदने सामान्यस्पर्शः, अभिघाते विशेषस्पर्श इति फलितं—(These statements will serve for Newton's three laws of Motion). गुरुत्वात्पतनं (Gravitation by weight) संयोगाभावे, संस्काराभावे वा गुरुत्वात्पतनं, गुरुत्वजन्यतावच्छेदकपतनत्वजात्यवच्छिन्नं। (A body thrown up into the air or deprived of its support will fall back upon the Earth). यत्किंचिद्वस्तु यथा यथा, कर्मात्मकं कार्यं करोति, तथा तथा, अस्यकर्मसन्तानलक्षणबहुकार्यकरणात् शक्तिरपक्षीयते । यथा यथा शक्तिरपक्षीयते तथा तथास्यकार्यं मन्दतरतमादिभेदाभिन्नमुपजायते । सर्वथाऽपक्षीयमाणशक्तिरन्ते

स्वयमेव नश्यति । तन्नाशे तद्वस्तु अवश्यं आत्मगताद्गुरुत्वात्पतति । प्रतिबन्धकाभावे गुरुत्वादसमवायिकारणात्पतनम् । गुरुत्त्वाकृष्यते पृथिव्येतिनियमात् । (Gravitation is the force caused by the attraction of the Earth) सर्वमेतत्तत्वपरीक्षामुसलकर्मणि यथा—

क. सू. ५—१—१. "आत्मसंयोगप्रयत्नाभ्यां हस्ते कर्म"।
"येनेन्द्रियेण येनाङ्गेन मनस्संयुज्यते तदङ्गक्रिया हेतुः प्रयत्नः"—

,, २. "तथा हस्तसंयोगाच्च मुसले"

,, ३. "अभिघातजे मुसलादौ कर्मणि व्यतिरेकादकारणं हस्तसंयोगः" ॥

,, ४. "तथा आत्मसंयोगो हस्तकर्मणि" ॥

,, ५. "अभिघातान्मुसलसंयोगाद्धस्ते कर्म" ॥

,, ६. "आत्मकर्महस्तसंयोगाच्च" ॥

,, ७. "संयोगाभावे गुरुत्वात्पतनम्" ॥

,, ८. "नोदनविशेषाभावान्नोर्ध्वं न तिर्यग्गमनं" ॥

,, ९. "प्रयत्नविशेषान्नोदनविशेषः" ॥

,, १०. "नोदनविशेषादुदसनविशेषः" ॥

,, ११. "हस्तकर्मणा दारककर्म व्याख्यातम्" ॥

,, १२. "तथा दग्धस्य विस्फोटने" ॥

इति द्वादशसूत्रैः कणादमुनिभिस्सम्यक्प्रदर्शिता । तद्विवरणमन्यत्र तद्भाष्यादिषुद्रष्टव्यम्। तादृशी परीक्षा धूमशकटगमने यथा काष्ठेन्धनशिलाद्रांगारेन्धनादिभिः जनितेन वह्निसंयोगेन जले बाष्पाविर्भावः । बाष्पसंयोगविशेषेण विद्युच्छक्तिसंयोगविशेषेण वा जनितेन नोदनविशेषेण चक्रेषु भ्रमणं, अनन्तरं संयुक्तसंयोगवशात् यावच्छकटे वेगाख्यसंस्कारोत्पत्तिः तेनशकटगमनम् । तेनैव बहुविधसंभारसंयुक्तशकटपरंपरायाः यातायातप्रसंगः, इति विदितं खलु । तत्र शकटद्रव्यं समवायिकारणं बाष्पोत्पत्तिः,

वेगः, संस्कारः, नियन्त्रादयः निमित्तकारणम् । एवमेव पत्कंदुक, हस्तकंदुक, यष्टिकन्दुक प्रक्षिप्तकन्दुकादिदारकक्रीडासु, अयोगोळकाश्म मृत्पिंडादि प्रक्षेपव्यापारेषु च, कार्यकारणव्यवस्था विद्वद्भिरुन्नेया । विविधयन्त्रक्रियासु च तथैवनियमाः भवन्ति ॥

वह्निसंयोगेन दग्धकल्पस्य अश्मफलादेः विस्फोटने (Volcanic eruption, etc.) यत्तदवयवानां उर्ध्वाधस्तिर्यग्गमनादिलक्षणं कर्म तन्नोदनमात्रात जनितमित्यर्थः (By some cause, the potential energy of heat is converted into kinetic one).

क. सू. ५—१—१३. "यत्नाभावे प्रसुप्तस्य चलनं वायुसंयोगाद्भवति" ।

(प्रसुप्तस्येत्यनेन अचेतनावस्थामुपलक्षयति—एतदेव भूकंपादीनां लिंगम्.)

क. सू. १४. "तृणे कर्म वायुसंयोगात्" ॥

क. सू. १६. "इषौ अयुगपत्संयोगविशेषाः" कर्मान्यत्वे हेतुः नोदनाभिघातादि संयोगविशेषेण आद्यं कर्म, विभागः, पूर्व संयोगनाशः, उत्तरसंयोग इति क्रियाहि चतुःक्षणावस्थायिनी पंचमक्षणे तस्याः नाशः ॥

सू, १७. "नोदनादाद्यमिषोः कर्म, तत्कर्मकारिकाच्च संस्कारात् (Acceleration) उत्तरं तथोत्तरमुत्तरं च" ॥

इदमेव तत्त्वं अयोदारुमुखादिद्रव्यविशेषनिर्मितबहुविधविचित्रयन्त्रसामग्रीगमनादौ योज्यम् । गमनग्रहणात् भ्रमणरेचनस्यन्दनोर्ध्वज्वलनतिर्यक्पतननमनोन्नमनादयः गमनविशेषाः परिगृह्यन्ते (Application of force with requisite momentum in throwing an arrow, in shooting a bullet through

the gun, etc.) तिर्यग्गमनं वक्रगमनं प्रतिनियतदिग्गमनमिति यावत् । अन्यच्छरगमनादिकं तु नियतदिग्गमनम् ॥

क. ५—१—१८ "संस्काराभावे गुरुत्वात्पतनम्" ।

पतनानन्तरं वेगाख्यसंस्कारः (Impact) कंचित्कालमनुबध्नाति । यथा—भूमौ पातितकन्दुके । यथा च उपरते च कुलालव्यापारे चक्रं संस्कारवशात् भ्रमत्तिष्ठति—कालपरिपाकवशात् उपरते संस्कारे निष्क्रियं भवति । तथैव धूमशकटादिकम् ॥

## भूभ्रमणम् (Rotation of the Earth).

५—२—२. सू. "तद्विशिष्टेनादृष्टकारितम् ॥

(W. SIMON:—No one knows why the earth attracts bodies, although we say that it is due to gravitation. This is simply equivalent to saying that an attractive force exists between the earth and bodies upon it, a fact which anyone can observe. But no one knows why the force exists or its nature. This is true in all cases of attraction, affinity, etc. Therefore Kaṇāda calls that unknown cause as अदृष्ट . . . ).

कर्मवैचित्र्यात् सृष्टिवैचित्र्यमिति वैदिकानां राद्धान्तः । अतः जीवादृष्टकारिता वस्तुशक्तिरेतादृशी ; यतः स्वाक्षं विवस्वानं वा परितो भ्रमन्ती पृथ्वीयं सूर्यमण्डलाकृष्टा खलु (Attracted by the Sun) अनिशं परिभ्रमति (Rotates)। तत्र पृथिवी समवायिकारणं (Inherent cause) । आकर्षणक्रियाप्रयोजकादित्यसंयोगविशेषः असमवायिकारणं (Accidental cause) अदृष्टं(Nature) निमित्तकारणं (Instrumental cause) अत्र श्रुतिरपि यथा—

"तयोरिद्घृतवत् पयोविप्रारिहन्तिधीतिभिः । गन्धर्वस्य ध्रुवेपदे ॥

भाष्यं—गन्धर्वस्य ध्रुवं पदमन्तरिक्षं—तथा च तापनीयशाखायां समाम्नायते । "यक्षगन्धर्वाप्सरोगणसेवितमन्तरिक्षमिति" तेनान्तरिक्षेणोपलक्षिते आकाशे वर्तमानयोरित्— द्यावापृथिव्योरेवसंबंधि पयः जलं घृतवत् घृतसदृशं विप्राः मेधाविनः प्राणिनः (घृतसारं तेनोपेतं वा) धीतिभिः कर्मभिः रिहन्ति लिहन्ति। अत्र तयोः इति पदेन आकृष्टे पूर्वमन्त्रोक्तद्यौःपृथिवीपदे अभिधीयते—तत्र पृथिवी भूमिः इति सामान्येन विदितं भवति । द्यौः पदेन, चन्द्रसूर्यनक्षत्रादिमण्डलं उपलक्षितमिति ज्ञेयम् । अन्यथा तस्य पदस्य सामान्यतः विदितः आकाश इति अर्थो अवबुध्येत चेत्, आकाशे वर्तमानः आकाश इति अन्वयस्संभवेत्। किं च गन्धर्वस्य ध्रुवे पदे इति पदसमूहेन उपलक्षिते आकाशे पृथिवी वर्तमाना भवतीत्युक्तत्वात्, पृथिवी स्थिरा, शेषफणामण्डलेन वा कूर्मपृष्ठेन वा ऊढा भवतीति पुराणादिवचनं निरस्तम्। अपि तु आकाशे चन्द्रसूर्यनक्षत्रमण्डलानीव भूमण्डलमपि भ्रमतीति ज्योतीरहस्यं प्रकाशितम्। ज्योतिश्शास्त्रेप्येवमुक्तम् । यथा—

भूमेः पिण्डश्शशाङ्कज्ञकविरविकुजेज्यार्किनक्षत्रकक्ष्या
वृत्तैर्वृत्तोवृतस्सन् मृदनिलसलिलव्योमतेजोमयोयम् ।
नान्याधारः स्वशक्त्यैव वियति नियतं तिष्ठतीहास्यपृष्ठे
निष्ठं विश्वं च शश्वत् सदनुजमनुजादित्यदैत्यं समंतात् ॥

## भूकंपः (Earthquake).

क.सू. ५—२—१. "नोदनाभिघातात्संयुक्तसंयोगाच्चपृथिव्यां कर्म ॥"

महेश्वरेच्छासहितैः आत्मपरमाणुसंयोगजैः, जनितेभ्यः परमाणुकर्मभ्यः पृथिव्यां कर्म इत्यर्थः । अभ्यन्तरवस्तूनां नोदनाभिघाताच्च संयोगात् वस्तुसंयुक्तपृथिवी संयोगाच्च, भू भूधरादि

# भू मि का.

विष्णुसिन्धुतटीराजद्वेलापुरविभूषणम् ।
सौम्यकेशवमीडेऽहं रूपनिर्जितमन्मथम् ॥

नेदं तिरोहितं नाम सर्वेषां प्रेक्षावताम् । यद्बहुतररुचिरविषय परिमण्डितेऽप्यत्र धरणितले कर्णाटजनपद एव बहुविध-बहुतमसंपदामाश्रयो विविधपृथुलमञ्जुलशिल्पयन्त्राचिकित्सितकला-निलयानामालयस्तुङ्गतमशृङ्गसौधश्चित्रतमरुच्यमृगशकुनिगणनिना दितकुसुमफलभरनमिततरुनिवहविलसितवनोपवनः कवेरदुहितृ-व्यायतदुर्भेदसेतुभ्रमनिस्सृतबहुदूरगागाधकुल्यासलिलपूरसमेधि-तसस्यमांसलकेदारो विदुषामावासः प्रकृतीनां विश्रमनिकायो लोच-नासेचनकरामणीयकस्समिन्ध—इति ॥

तस्य च शिरोभूषणं वेलापुरं संप्रति बेलूरुनाम्ना प्रथितं तादृशदेशान्तर्गत—हासनाभिधानमण्डलस्योदीच्यां दिशि नाति-दूरे विराजमानम् । इदं च पुरं बहोः कालात् "होयिसळ" राज-प्रधाननगरमास्त । अस्य च नामान्तरं शासने स्थलपुराणे चोप-लभ्यते त्रिलोकमहास्थानमभिनवक्षोणीवैकुण्ठो दक्षिणवाराणसी चेति ॥

अत्रेयं कथा श्रूयते । सर्गादावादिकेशवरूपश्श्रीशः परम-पुरुषो विरिञ्चिना साक्षात्कृतस्तस्मै सर्वमुपादिक्षत्सर्गकर्म । तदनु कमलभुवा सभक्तिप्रकर्षं स प्रार्थितस्सत्यलोके सुचिरमाराधितोऽ-भूत्तेन । अथैवमतीतेषु षट्सु मन्वन्तरेषु धरणितले कमलासना-दाजगाम सम्राजमिन्द्रद्युम्नं स केशवस्त्रिलोकेशः ॥

अथेन्द्रद्युम्नस्सार्वभौमो वैवस्वतमन्वन्तरेऽष्टाविंशे कृतयुगे समवस्थापयत् संप्रति बाबाबुडन्गिरिनाम्ना प्रतीते चन्द्रद्रोणाचले दिव्यरथे श्रीसौम्यकेशवदेवम्। तदनु ततः प्रतस्थे स महानृपश्श्रीवैकुण्ठम्। अनन्तरमाकलियुगोपक्रममारराधुरमरादयस्तत्र गिरौ श्रीकेशवम्। समुपनतेऽपि कलौ तं देवाधिराजमानर्चुर्मुनिपुङ्गवाः॥

एवं व्यतीते बहुतिथे समये कदाचन मृगयामातन्वानो विष्णुवर्धनो नाम महीपालो विष्णुसमुद्राभ्यर्णगं तत्तटाकाप्लावापगताश्वित्रं निजं सेवकमवलोकमानस्तादृशस्थलानुभावविस्मितमनास्तत्र यावद्व्यचिन्तयत् किमपि देवालयनिर्माणं तावत् स्वप्ने कृतसान्निधानो विप्राकृतिश्श्रीसौम्यकेशवदेवस्समादिदेश तस्मै स्वस्य कश्चिद्देवालयो नूनं भवता निर्मापणीय इति। एवमेव स भगवानाज्ञापयामास श्रीभगवद्रामानुजाचार्यस्यापि स्वप्ने भवच्छात्रेण विष्णुवर्धनेनालयः कारयितव्य इति॥

अथ स नृपो विष्णुवर्धनश्श्रीरामानुजाचार्यसंनिधिमधिगम्य तस्मै स्वं स्वप्नोदन्तमावेद्य तेनानुज्ञातः प्रतस्थे चन्द्रद्रोणगिरिं सार्धं बहुभिश्श्रीवैष्णवैः। अयमत्र विष्णुवर्धनश्रीरामानुजाचार्ययोस्संश्लेषहेतुः। ऐरङ्गजैनभूपात्मजः पूर्वं बिट्टदेवसंज्ञोऽयं राजा विष्णुवर्धनश्चोलभूपोद्भवदुस्सहबाधायै स्वमधिश्रितस्य वेलापुरमधितिष्ठतश्श्रीरामानुजाचार्यस्य तत्त्वोपदेशमहिम्ना प्रपेदे श्री वैष्णवदीक्षाम्। तदनु चन्द्रद्रोणशैलमुपेयिवान् स तु भूपस्तस्माद्रिरेर्भगवन्तं श्रीकेशवं निनाय श्रीनारायणपुरं सद्भिः परिवृतः॥

ततो व्यतीते गणरात्रे स नृपालस्तस्मान्नगराद्वारिजाक्षमानयन् सुमुहूर्ते प्रावेशयद्वेलापुरीम्। तदात्वे तेन नृपतिना समाज्ञप्तः कश्चन शिल्पिवरस्सप्तभिरेव निशाभिर्निर्ममे कमपि कान्ततमं देवालयम्। अथो विष्णुवर्धनो देवावसथमभितो निर्मापयामास वेला-

पुरं नाम प्रभूतं पत्तनम्। स महीशस्तत्र कारयामास विष्णुसमुद्रं नाम विपुलतमं तटाकम्। अनन्तरमसौ भूपालो वेलापुर्यामिन्द्वक्षिदश (१०२१) मिते शालिवाहशके (क्रिस्तशके १०९९) हेमलम्बवत्सरे चैत्रशुक्लपञ्चमीशनिवासरादितस्तन्मासशुक्लत्रयोदशीमन्ददिनं यावदखिलभुवनेशितुस्सौम्यकेशवस्य प्रतिष्ठाकर्माणि सर्वाभिसारेण निर्वर्तयामास सभक्त्युन्मेषं जगतां क्षेमाय। तत् प्रतिष्ठाकर्म तु तादृशमाससितत्रयोदश्यां शनेरह्नि हस्तर्क्षे वृद्धियोगे अभिजिन्मुहूर्ते समाप्तिमगात्। ततस्स नृपवरो निरन्तरायं भगवतः प्रात्यहिकोत्सवनिर्वर्तनाय वेलापुरे दिदेश विप्राणां भूयसीर्वृत्तीः ॥

परं शासनान्तरादिदमवगम्यते। वैष्णवमणिर्विष्णुवर्धनोऽयं शैलाशिवेन्दु (१११७) मिते क्रिस्तशके (११९५) शिल्पीन्द्रैरचीकरत् पञ्च नारायणदेवालयान् बेलूरु, तलकाडु, मेलकोट, गुण्डलपेट नामसु पञ्चसु स्थलेषु। असौ प्राविक्षद्वैष्णवमतं प्रायो रसभूरुद्र (१११६) समे क्रिस्ताब्दे। भूपोऽयं शशीन्दुशिव (११११) मितक्रिस्तशकादितो धरामनुभू (११४१) मितक्रिस्तशकं यावद्वेलापुरीराज्यं शासदास्तेति ॥

यद्यपि शासनभेदेन राज्ञो वैष्णवमतप्रवेशनकेशवालयस्थापनकालयोरष्टादशैकोनविंशतिवत्सरव्यत्ययस्तथापि विष्णुवर्धनो वैष्णवो भूत्वा व्यररचत् केशवदेवानिलयमित्यत्र न स्तोकमात्रोऽपि सन्देहः ॥

विष्णुवर्धनात्परं राज्यमिदं दुर्विधिना द्वारसमुद्र (हळेबीडु) मधितस्थिवद्भिर्यवनैरधिष्ठितं विनाशितं च। तदनु तद्राज्यं महति गते काले बभूवायत्तं विजयनगराधीशितुः कृष्णदेवरायस्य। स च तददात् स्वस्य ताम्बूलवीवी (हडप) वाहकाय कृष्णप्पनायकाय। राज्यमिदमेतद्वंशीयाश्शशासुर्वत्सरशतद्वयम्। अथ शरा-

ब्धिरसभू (१६४५) समे क्रिस्तवत्सरेऽवस्कन्द्य तदिक्केरीपुराधिपश्शिवप्पनायकः प्रददे श्रीरङ्गरायाय ॥

ततः कालक्रमेण तदपि हूणसात्कृतमासीत्। अथ दिष्ट्या वेलापुरराज्यमधिजगाम भारतसार्वभौमस्यानुमत्या धार्मिकमणिश्चिन्नकृष्णनायको वेदवस्वद्रिभू (१७८४) मिते शालिवाहशके दुन्दुभिवत्सरे नेत्ररसधृति (१८६२) समे क्रिस्तहायने। नृपालोऽयं धर्म्येण पथा सञ्चरमाणश्श्रीसौम्यकेशवदेवपदनलिनयुगनिरुपमभक्तिमांसलस्तदुत्सवानभूतपूर्वं प्रवर्तयन् प्रकृतीरनुरञ्जयन् राज्यमशिषत् ॥

अथ कदाचिदस्य समजनि मनीषा वेलापुरललामायमानं विचित्रतमपुत्रिकापरिकर्मितं काप्यदृष्टचरं श्रीकेशवसदनं तन्महोद्भवसंभ्रमं चाधिकृत्य कारयितव्यः कश्चन चम्पूप्रबन्ध इति। तत्रस्तेन संप्रार्थिता नेत्ररसधरधरा (१७६२) समे शालिवाहशके (क्रिस्तशके १८४०) विकारिशरदि निजज्येष्ठमासे समुद्भूता मद्गुरुचरणाश्श्रीकृष्णब्रह्मतन्त्रपरकालसंयमिवराश्चतुर्विंशे वयसि पूर्वाश्रमे विदधिरे शराष्टद्वीपेन्दु (१७८५) मिते शकनृपसमये (क्रिस्ताब्दे १८६३) रुधिरोद्गारिवत्सरे श्रावणशुक्लदशम्यामेकस्मिन् दिवसे श्रीकेशवोत्सवमालिकाभिधं सरसं गभीरं षष्ठं चम्पूप्रबन्धम्। इदमेतैरभ्यधायि ग्रन्थान्ते—

श्रीचिन्नकृष्णनायकदत्तानुज्ञः प्रबन्धमेकदिनम्।
रुधिरोद्गारिनभस्सितदशमीं कृष्णकविरेनमाचख्यौ ॥

इति। इमे खलु गार्हस्थ्ये कर्णाटदेशीयचित्रदुर्गमण्डलासन्ननव्यदुर्ग(हॉसदुर्ग) कृतनिलयास्सरसकविचक्रवर्तितातार्यद्वितीयनन्दनाश्श्रीशठमर्षणकुलवतंसाश्श्रीनिवासब्रह्मतन्त्रपरकालगुरुवरानुग्रहलब्धकवनवैशद्यास्सहृदयवरश्रीसज्जयार्यकरुणोत्तम्भितसाहिती —

धियः कविसार्वभौमविरुदाः कृष्णाम्बागर्भसंभूताश्श्रीमद्वेङ्कटाचार्य-
पौत्राश्श्रीवेङ्कटार्यावरजाश्श्रीवात्स्यरामार्यदौहित्राश्श्रीरङ्गनाथार्य -
भागिनेया इति ग्रन्थान्तिमात् पद्यत्रयाद्वाक्याच्च स्पष्टमवगम्यते ।
ग्रन्थेऽत्र साधु सुस्पष्टं व्यरचि भस्मासुरनिबर्हणाय मोहिनीरूप-
जुषो भगवतः केशवस्य निरुपमसदनरामणीयकप्रशंसनं चापमास-
निवर्तनीयपाञ्चरात्रकथितकुठारसंज्ञमहोत्सववर्णनं च ॥

अथादौ ग्रन्थकृद्भिश्शासनैश्च समुद्घाटिता हृदयावर्जनचणाः
केचन देवसदनचमत्कारा निरूप्यन्ते—

१. पुरेऽत्र शङ्खचक्ररेखाङ्कितान्येव समुत्पद्यन्ते कूश्मा-
ण्डफलानि.

२. अस्याः पुर्या दक्षिणतो विलसति विष्णुसमुद्रे कासा-
रेऽद्यापि प्रजायन्ते दक्षिणावर्तशङ्खाः.

३. एतत्पुरस्य दाक्षिणात्ये विष्णुसमुद्रे न लक्ष्यते श्री-
केशवतुङ्गगोपुरच्छाया, हन्त सा तदुत्तराहे दवी-
यसि कुम्भतीर्थाह्वे सरसि परं दृश्यते.

४. चित्रोपलन्युप्तपुत्रिकासंवलितविचित्रशालाशतविरा-
जितं चानिरुद्धाह्वयं किमपि विमानमद्भुतमास्ते.

५. अहो मिथो विप्रकृष्टयोरन्तर्गृहद्वारबहिर्महाद्वारयो-
रन्तराले केनचन महामण्टपेनान्तरितेऽपि बाह्य-
महाद्वारे पिहितकवाटेऽपि गर्भगृहद्वार्यधोमुखी
निपतति गोपुरच्छाया.

६. कस्मिंश्चन शिलास्तम्भे खचितानि श्रीपतेरष्टोत्तर-
शतस्थानानि.

चणकप्रमाणे क्रमुकमात्रे चोपले वृषो दन्ती च
निर्मितः.

ईदृशं शिल्पसौष्ठवं वीक्ष्य भृशं विस्मयते कविः—

"परिपक्वमधूच्छिष्टैरपि वा शक्यं किमीदृशं रूपम् ।
कर्तुं यादृशमतनुत तत्रोपलपुत्रिकासु शिल्पीन्द्रः ॥" इति ॥

इदमप्यपरमुपायनीकुर्मः प्रियपाठकेभ्यः—

८. कुत्रचन स्थले वसनं वसानायास्तच्चेलगमक्षिकाजिघृक्षुवृश्चिकभीतायाया वनितायाया दृश्यते प्रतिकृतिः.

९. क्वचिद्भगवतस्त्रिविक्रमस्य वियति समुद्यतचरणाम्बुजं गङ्गाम्भसा क्षालयतः कमलासनस्य वर्तते प्रतिमा.

१०. कुहचित् सङ्गीतगोष्ठीमध्ये राजति कालियमर्दकस्य श्रीकृष्णस्य पुत्रिका.

११. क्वचन स्वस्वौपवाह्यानधितस्थुषां शक्रादिदिगधिपानां भान्ति पाञ्चालिकाः.

१२. क्वचिदवलोक्यते पन्नगपतिमधिशयितस्य श्रीरङ्गनाथस्य मूर्तिः.

एवं परस्सहस्रं हृदयसंवननिपुणाः पुत्रिकास्समुल्लसन्ति स्तम्भप्रतीहारवितानवातायनविमानादिषु.

ग्रन्थेऽत्र पद्यानां गद्यानां च शैली भृशं सरसा ललिता भावगभीरा सहृदयानां मुदमादधाति । प्रायोऽत्रोत्प्रेक्षा हृद्यास्समुल्लसन्ति । हेमन्तसमयवर्णनं भृशं चमत्करोति । भगवतश्श्रीसौम्यकेशवस्य चापमासि प्रथमादिदिवसनिर्वर्तनीयानि मोहिनी, कोदण्डराम, नृसिंहार्जुन, सरस्वती, गरुडवाहन, रुक्मिणी, सत्यभामाश्रितकंसमर्दन, बालकृष्णाश्वारोहण, पट्टाभिरामालङ्करणानि सम्यगुपवर्णितानि । एकस्मिन् गद्य एकपञ्चाशत्शानजन्तपदैरुत्सववर्णनात् पदचमत्कृतिरपि प्रादर्शि। अकारि सपरिहासं भग-

वह्निवेदितदिव्यान्नापूपादीनां विनियोगकालिककलकलानुवर्णनम् ॥

अमुना कविसार्वभौमेन धनञ्जयबालकृष्णवेषजुषं श्रीकेशवमधिकृत्य समुदीरितानि कानि चन पद्यानि रसविदामुपहरामः ॥

अस्मत्तनूभवरिपोर्भगवान् दधाति
पाण्डोस्सुतस्य वररूपमिदं न शक्यम् ।
द्रष्टुं मयेत्यसहनादिव भानुमाली
पाश्चात्यसागरतरङ्गचये ममज्ज ॥ १ ॥

मम बदनरुचिहरोऽसाविति रोषात् पूर्णहिमकरमिवाश्नन् ।
रुरुचे स बालकृष्णो निस्तलनवनीतकबलमथ जक्षत् ॥ २ ॥

क्षीरपाणजातकौतुकाच्युताननोल्लसत्
फूत्कृतोत्थशर्करालिपुञ्जसंशयावहा ।
कम्प्यते स्म मन्दमन्दमिन्दुभानुसुन्दरं
चामरालिबृन्दमग्रसुन्दरीकराम्बुजैः ॥ ३ ॥

केनेदं नवनीतमत्र गिलितं मातर्विडालो महा-
नागत्यागिलदस्तु स क्व विवरं पैपीलिकं प्राविशत् ।
एतद्बाल कथं ध्रुवं गिरिकया कृष्टः कयापिच्छला-
दित्थं गोपवधूत्तरं समवताच्छ्रीबालकृष्णेरितम् ॥ ४ ॥

धन्या देवकनन्दनैव सुषुवे यत्सूनुमेतादृशं
बालोऽप्येष मनो ममाद्य हरते स्याद्यौवनेऽसौ कथम् ।
लभ्यः पुण्यवशादमूदृशसखः क्रीडार्थमित्यादरा-
द्दृष्टाभिर्युवतीभिरेषजगदे बालाभिरप्यच्युतः ॥ ५ ॥ इति ॥

एवमनेके चमत्कारा ग्रन्थेऽत्र तत्रतत्र निवेशिताः । ते सुधीभिर्विभावनीया इति सर्वं निरवद्यम् ॥

इति निवेदयिता,

करूरु शेषाचार्यः,

संस्थानमहाविद्वान्.

किं व्रजेन किमु वत्सधेनुभिः
किं पयोदधिनवोद्धृतैरपि ।
प्राणवायुभरणेन किन्नु हा
मुग्धमुग्धमिहकृष्णमन्तरा ॥ २१ ॥

आलुन्यस्तं नवपरिमळं यत्तु हय्यङ्गवीनं
पात्रे पूर्णं क्वथितपयसो मण्डमत्यन्तसारम् ।
भाण्डे भाण्डे घनतरदधिन्यस्तमस्तंगतेऽस्मि-
न्कृष्णे को वा स्पृशति तदितो नैव तन्नाशभीतिः ॥ २२ ॥

व्रजैकनेत्रं दैवेन हृतं कालीयरूपिणा ।
ये त्वाततायिनश्शौरेस्सुखं जीवन्तु तेऽधुना ॥ २३ ॥

अश्मन्ते क्वथितपयस्सतीक्ष्णबाष्पं
मद्भीत्या रहसि बिडालवत्पिपासुः ।
आदाय प्रसभमतिप्रतप्तपात्रं
प्रारोदीर्भुवि विनिपात्य कृष्ण धिग्माम् ॥ २४ ॥

उत्पाट्य स्वकरेण बालतृणमप्यत्यादरात्कोमलं
हे वत्साः कबळं विधाय भवतां वक्त्रे न्यधाद्यो मुदा ।
दुग्धं मह्यमिति प्ररुद्य शनकैर्मत्तो गृहीत्वा ददौ
सोऽयं मृत्युवशं गते भुवि पुनस्तत्तादृशं क्वाप्नुत ॥ २५ ॥

द्राक्षानुकार्यसितचूचुकमेकमास्ये
कृत्वा परं करसुखेन विचालयन्यः ।
मद्गण्डपातितसनूपुरपादपद्मः
स्तन्यं पपौ सविषरूक्षजलेऽद्यशेते ॥ २६ ॥

स्रस्तोऽपि वेणो करपल्लवात्त्वं
  कृष्णस्य पार्श्वे प्लवसे सकम्पम् ।
को वा विमुञ्चेदिह मां विनैका-
  मास्वाद्य कृष्णाधरपल्लवं तम् ॥ ३७ ॥

शश्वद्रन्ध्रवमज्जलौघमिषते नेत्राम्बुमुञ्चस्यहो
  शैवालाख्यविमुक्तकेशनिवहा प्राक्प्राप्तपाणिग्रहा ।
रन्ध्राध्मातसमीरकैतवगलच्छ्वासा च सक्रन्दसि
  द्राक्स्त्रीवन्मुरलि त्वयापि रचितं भुक्ताधरास्वादया ॥ ३८ ॥

व्रजे तेऽङ्घ्रिपद्मस्फुरच्चक्रशङ्ख-
  ध्वजच्छत्ररेखाङ्कितं चत्वरं तत् ।
कथं चक्षुषानेन पश्यामि कृष्ण
  त्वया हीनमद्यालयं वा कथं हा ॥ ३९ ॥

प्ररोहैर्न्यग्रोधप्रभवविततैराक्षितिगतै-
  र्वने डोलालीलां सुचिरमनुभूयात्मसुहृदा ।
व्रजे तत्क्षीराक्तां तनुमथरुदन्मह्यमसकृ-
  त्प्रदर्श्याभ्यक्तोद्यस्स्नपित इह शेषेऽद्य किमिदम् ॥ ४० ॥

वक्त्राब्जसौरभसमागतभृङ्गपादं
  बध्वा गुणेन विहसन्वियति प्रचाल्य ।
श्रुत्वा च झङ्कृतिमये परिखेदयंस्तां-
  श्चिक्रीडिथाद्य किमु तत्फलमापिथेदम् ॥ ४१ ॥

पांसुक्रीडामलिनवपुषा पङ्किलेनात्मसूत्रे-
  र्मन्दं मन्दं रहसि सविधं पृष्ठतो मे समेत्य ।

मामाश्लिष्य त्वरितमतनोः पङ्किलं पृष्ठदेशं
वत्सैवं त्वं रचय कृपयोत्तिष्ठ मामेकवारम् ॥ ४२ ॥

लालाजलामृतमयं किसलातिशोणं
बिम्बाधरोष्ठयुगलं मम वक्त्रदेशे ।
संप्रार्थितस्त्वमसकृद्विनिवेश्य चुम्ब-
न्नामोदयः कुरु तथा सकृदद्य तात ॥ ४३ ॥

सक्तायां मयि सद्मकार्यकरणो क्षुत्पीडितस्त्वं रुद-
न्सर्पन्मामनुजानुपाणियुगलेनाम्बेति मामाह्वयन् ।
स्तन्यस्य प्रतिदर्शितैकपतगप्रीतो मयाऽऽश्वासितो
धिक्मां हन्त तदान्यदां स्तनभवं क्षीरं न ते निर्घृणा ॥ ४४ ॥

लीलायैत्वलगर्दडिम्भनिकरं विन्यस्य पत्रोदरे
बध्वा तल्लतयाम्ब पुष्पमिदमित्यत्यादरान्मत्करे ।
विन्यस्याथ हसन्करेण सहसोद्घाट्य प्रदर्श्यार्भकां-
स्तान्मां भीषयसे स्म वत्स पुनरप्येवं कुरूत्तिष्ठ हा ॥ ४५ ॥

खद्योतान्मृदुसितचीनचेलबद्धा-
न्गुञ्जाढ्ये शिरसि निधाय बर्हपार्श्वे ।
सन्ध्यायां विविधमणिज्वलत्किरीटं
दृष्टस्त्वं दधदिव दर्शयाद्य तन्नः ॥ ४६ ॥

तिष्ठति तिष्ठन्कृष्ण प्रचलति विचलन्प्रलम्बघ्ने ।
सुप्ते च निद्रितोऽभूस्तादृक्क्कगतोऽद्य ते स्नेहः ॥ ४७ ॥

चलदलकविलोलमौलिरत्नं
समभुवि रिङ्खणझङ्कृताङ्घ्रिभूषम् ।

मणिगणरमणीयकिङ्किणीकं
    मम दहति स्मृतिमेत्य ते तु बाल्यम् ॥ ४८ ॥

यवनिकान्तरितो मुहुराननं
    प्रकटयन्द्रुतमन्तरयन्हसन् ।
मम पुरः कृतवान्ननु कुर्दनं
    स्वपिषि सम्प्रति मीलितलोचनः ॥ ४९ ॥

दुग्धं दुहानां ननु कृष्णधेनुं
    मामेत्य पश्चाच्चषकं गृहीत्वा ।
दैन्येन तद्याचितवान्पयस्त्वं
    नापेक्षसे सम्प्रति तत्किमर्थम् ॥ ५० ॥

बाल्यात्सर्वो हरणनिपुणो दण्डशृङ्गेण भाण्डं
    शिक्ये न्यस्तं सुषिरमचिरात्पृष्ठदेशे विधाय ।
तद्रन्ध्रेण स्रुतबहुपयस्सन्ततिर्न्यस्तवक्त्रः
    पीत्वा भीत्या मदिह सलिलं किं शयानोऽसि वत्स ॥ ५१

गते च पुरतो हलिन्यनुगतो हि शौरेहस-
    न्यथाञ्जनगिरेश्शिशू रजतशैलपोतं यदि ।
व्रजेत्प्रकुपितोऽधुना हलधराय शेषे ह्रदे
    द्रुतं वद तनोम्यहं धुरि च तस्य शिक्षां क्षणात् ॥ ५२ ॥

अलकेशयगोखुरोत्थरेणु-
    र्बहुवर्णोज्ज्वलवन्यपुष्पमालः ।
विपिनात्पुनरेष्यसीति मेने ।
    न हि पूर्वेद्युरिवागतोऽसि शौरे ॥ ५३ ॥

उलूखलमधोमुखं त्वमधिरुह्य शिक्यान्तरा-
दुपर्युपरिभाजनं निहितमन्तराऽऽवर्जयन् ।
निपात्य सकलं पयोदधिघृतैस्स्रुतैस्स्नापितो
रुदन्नथ ममान्तिकं समगमस्तथाह्याचर ॥ ५४ ॥

कौमुदीविशदचत्वरे चरन्
जानुपाणियुगलेन सत्वरम् ।
आत्मनः प्रतिकृतिं धरागतां
त्वं जिघृक्षुरभवोऽद्यतत्स्मृतम् ॥ ५५ ॥

दुग्धं नष्टं नवदधिघृतं नष्टमद्यागतोऽयम्
कृष्णस्ते नस्तव सुत इति प्रोज्झितागारकार्याः ।
उक्ता मात्रा दह्यशिमतनैताहित त्वं गुणेन
क्रूरास्सर्वाधिगातिपिशुनास्त्वामृते किं पयोभिः ॥ ५६ ॥

कल्याणीति सुमध्यमेति कमलेत्यामोदिनीत्यादरा-
त्कावेरीति सुभद्रकेति कपिलेत्यालोलवालेति च ।
लोलाक्षीति मनोरमेति च कृतं यासां त्वया नामता-
स्तिष्ठन्त्यश्रुविलोचनास्सुरभयस्ताः किं न पश्यस्यमूः ॥ ५७ ॥

अङ्कादङ्कतलं बाल्ये गच्छन्नस्माकमादरात् ।
योऽतनोत्क्षणवत्कालान्सोऽद्य शेते ह्रदाम्भसि ॥ ५८ ॥

क्रीडैकतानाः पथि गोपबाला-
स्त्वया समुद्धूलितमस्तकाये ।
मामेत्यमन्दं तव दौष्ट्यमूचु-
स्तिष्ठन्ति दीना अवलोकयैतान् ॥ ५९ ॥

आदाय लालितोवल्गन्नस्मत्स्तनतटोपरि ।
ताटयन्पाणिनास्माभिश्चुम्बितोऽद्य कथं गतः ॥ ६० ॥

उत्तिष्ठ वत्स कमलेक्षण नन्दसूनो
चुम्बामि मूर्धनि चिरेण परिष्वजे त्वाम् ।
वार्तां श्रृणोषि न हि मे किमु यत्त्वयाद्य
संप्रार्थ्यते तदिह तुभ्यमहं ददामि ॥ ६१॥

अल्पेतरत्वादलिकोर्ध्वदेशे
कृतां कचैर्वर्तुलबद्धवेणीम् ।
कुन्दाञ्चितं तां मुकुरे विलोक्य
हृष्टोऽयमासीन्ननु योषितोहा ॥ ६२ ॥

सुतस्नेहात्कृष्णो मम गृहमुपेत्योज्ज्वलमणिं
विलोक्यास्मद्गेहेप्यतिरुचिरभूषाऽस्त्यहममुम् ।
क्षणाद्धृत्वाऽऽयामीत्ययमनुलपन्वेश्म निरगा-
दलङ्कारेतर्षो ननु तव सुतस्यास्य रमणि ॥ ६३ ॥

स्खलद्गतिश्शश्वदधोमुखं यः
पतन्करेणाशुगृहीतभित्तिः ।
मन्दं समञ्जीररवंससर्प
स सर्पबद्धस्सलिलेऽद्य शेते ॥ ६४ ॥

त्वद्दौष्ट्यं पिशुनयति व्रजार्भकौघे
मां भीत्या विततविलोलपङ्कजाक्षः ।
अद्राक्षीः पुनरपि मीलितं दृगब्जं
प्रोद्धाट्य क्षणमिव पश्य मां तथैव ॥ ६५ ॥

साश्रुस्थितायां मयि मामुपेत्य
कुतोऽम्ब दुःखाकुलितासि मेति ।
आश्लिष्य कंठं परिसान्त्वयन्मा-
मामोदयस्त्वं किमुपेक्षसेऽद्य ॥ ६६ ॥

दण्डं गृहीत्वा चलितात्मपाणि-
स्सकम्पशीर्षो नमितोर्ध्वकायः ।
विडम्बयामासिथ वत्सवृद्धा-
न्यान्हासयंस्त्वं विलपन्ति तेऽद्य ॥ ६७ ॥

मुकुरे प्रतिबिम्बमात्मनस्त्वं
सफलं वीक्ष्य तदम्ब देहि मह्यम् ।
इति याचितवान्स्वपाणिसंस्थं
फलमेवाद्य कथं सहे स्मृतं तत् ॥ ६८ ॥

पश्याम्बायतशिक्यमूर्ध्वनिहितं नो वत्स शिक्यं किमु
ब्रूहीन्दोः परिधिर्नवोद्धृतबृहत्पिण्डः कुतस्स्थापितः ।
नैवायं नवनीतपिण्ड इह तत्स्फीतेन्दुबिम्बं यदि
द्रागदेहीति रुदन्नयाचत विधुं यस्तं विधिः प्राग्रहीत् ॥६९॥

प्रातर्गृहात्प्रतिगृहं समुपेत्य सुप्ता-
न्बालान्प्रबोध्य सहतैरवनाय धेनोः ।
योनिर्जगामविपिनं स गतोद्य कृष्णो
हा हन्त रक्षति पशून्क इतः परं नः ॥ ७० ॥

सुहृद्भिः कौमुद्यां दधिघृतपयोनातिलवण-
प्रमृष्टान्नं शश्वत्कबळनिहितं पाणिकमले ।

त्वया भुक्तं मातः पुनरपि च देहीति वदता
स जग्धौतर्षस्ते क्व गत इह शेषेऽद्य सलिले ॥ ७१ ॥

मृगमदतिलकन्तु ते ललाटे
निहितमयेन मयात्र गोमयेन ।
अलिकतलमलङ्कृतं स्वयं हा
किमु तव सौख्यमुपेत्य मातरं माम् ॥ ७२ ॥

अनिमित्तमन्दहसिताननान्तर-
प्रकटोपलक्षितरदाङ्कुरावालः ।
सितकुन्दपुष्पमुकुळावळिप्रभा
तुदति स्मृताद्य ननु वत्स मे मनः ॥ ७३ ॥

लीलायै रहसि समेत्य पृष्ठतो मे
दृग्युग्मं करयुगलेन संपिधाय ।
योऽप्राक्षीन्ननु वद कोहमित्यभीक्ष्णं
तन्नेत्रं विधिहतकेन हा पिनद्धम् ॥ ७४ ॥

यासामङ्गुळिपल्लवं करतलेनालम्ब्यवल्गान्हस-
न्मन्दं मन्दमटन्स्खलद्गतिरये चिक्रीडिथास्मद्गृहे ।
तास्सर्वा विलपन्ति गोपवनिता हा हा यशोदात्मज
द्रागुत्तिष्ठ समन्दहासवचनं ब्रूहीति तन्नश्रुतम् ॥ ७५ ॥

कठिनं विधिहन्मृदूपधाने
शयनीय सुसुखं गृहे प्रसुप्तः ।
विपिने विषरूक्षपङ्कपूर्णे
बत तेनाम्भसि शयितोऽसि कृष्ण ॥ ७६ ॥

दूरदर्शितफलाजिघृक्षया
त्वं भुजोदरबलाद्भुवि स्रवन् ।
देहळीं ननु विलङ्घ्य मोदकै-
र्मोदमापिथ तदद्य संस्मृतम् ॥ ७७ ॥

अभुक्त्वासुप्तत्वात्त्रिवलिलुलितक्लान्तजठरं
मुहुश्श्वासोच्छ्वासस्फुरितवरनाभिस्थलमहम् ।
विहाय त्वां निद्रापरवशमभूवं हि कठिना
गृहे कार्यासक्ता बत न तु भवत्पोषणपरा ॥ ७८ ॥

तिरोधिनामकुर्दने परालये निलीय य-
न्नवोद्धृतं निगीर्य कैतवादुपह्वरे क्षणात् ।
तदा वधूवशङ्कतो विलुण्ठनाय नागतो
रुदन्नवोच इत्ययं न विस्मृतं तदद्य हा ॥ ७९ ॥

आनीतान्द्रागपूपान्सकलशिशुजनैर्भोक्तुकामैररण्ये
युक्त्या तान्भोक्तुकामो झष इव सलिले मग्न एवाद्य भुङ्क्ते ।
तस्मात्तान्खण्डशोऽस्मिन्विसृजत पयसीत्यञ्जसोक्त्वानिमग्नः
सर्वान्भुक्त्वातितुष्टस्त्वमभव इह तन्नेच्छासि ब्रूहि कृष्ण ॥

क्षुत्पीडितास्त्वत्पथदत्तनेत्रा
हुंकारगर्भं मुखमुन्नमय्य ।
निष्कम्पकर्णाश्श्रवणायवेणो-
स्तिष्ठन्ति वत्सा न दयाऽस्ति तेषु ॥ ८१ ॥

वोद्धृतमिदं कुतो वलय नीलरत्नौजसः
परीक्षणकृते भवेत्पयसि तस्य कान्तिः किल ।

तदुद्धृतसुसारमित्ययिगृहीतमित्याशु यो
· विलुंठितनवोद्धतस्समवदच्च सोऽयं गतः ॥ ८२ ॥

गृहाद्बहिः कापि वधूर्व्रजेच्चेत्
स्तेनस्समागच्छति बालकृष्णः ।
गृहं प्रपश्येत्यवदत्स्वपुत्रीं-
स्तस्या इतो नास्ति भयं हि कृष्णात् ॥ ८३ ॥

रोमन्थकाले चलिताधरासु
सुप्तासु गोषु त्वमपि प्रसुप्तः ।
विडम्बयामासिथ चालितास्य-
स्ता अद्य ते कृष्ण विडम्बनं क ॥ ८४ ॥

आयातः कृष्ण इत्युच्चैः पञ्जरेषु गृहेगृहे ॥
शुका वदन्ति ते नाम तच्छ्रोष्यामः कथं वयम् ॥ ८५ ॥

दुग्धोत्थमण्डेन सितं विमिश्रय
निधेह्यरण्यादधिगत्य गेहम् ।
भोक्ष्ये तदम्बेति निगद्य कृष्ण
गतोऽत्र शेषे बत दैवचेष्टा ॥ ८६ ॥

जम्बूफलानि विक्रेतुरादाय करयोजितम् ।
सौवर्णं वलयं तस्मै यो ददौ सोऽद्य द्रा गतः ॥ ८७ ॥

अयं सदुग्धस्नपितो विलुंठने
घृतेषु मग्नो नवनीतपिण्डभाक् ।
दधिप्रलिप्तस्सलिलेऽद्यशैवलै-
स्समाचिताङ्गः प्लवते ममात्मजः ॥ ८८ ॥

स्त्रीवेषं परिगृह्य गेहमितरत्संविश्य मथ्नाम्यहं
दध्यन्यद्गृहकार्यमाचरवधूमित्याशु सम्प्रेष्य तत् ।
यो मथ्नन्नवनीतमागतमसावादाय खादन्मुहुः
नायातं नवनीतमित्यनुलपंस्त्यक्त्वा बहिर्निर्गतः ॥ ८९ ॥

ऊधस्स्थदुग्धं विपिनेऽन्यधेनोः
पीत्वा प्रदोषे गृहमेत्य वत्सम् ।
विमुच्य यो गेहवधूमवोच-
द्वत्सोऽपिबत्क्षीरमिहेति धेनोः ॥ ९० ॥

(अनुवर्तते)

## उपपत्तिगोपनम्

---

दीनानाथशरण्यं सद्वेश्म भाति न भात्यपि ।
अत्रोपपत्तिं जानीते मेदिन्यां कोऽपि पण्डितः ॥

गुप्तिकृत्
ति. स. श्रीनिवासदेशिकाचार्यः.

अनेकाः प्रजाः प्रभुसम्मितवेदशास्त्रमार्गानुसरणेन विवेकादिपरिज्ञान-सम्पादनापेक्षया मित्रसम्मितोपदेशवाक्येभ्य एव तत्परिज्ञाने परमुत्सुका भवन्ति । इतराश्च काश्चित् बह्व्यः प्रजा अपामार्गप्रवृत्त्युत्सुका अपि कान्तासम्मितोपदेशयुजां सरसग्रन्थानां पठनेन सद्धर्मप्रवर्तका भवन्तीत्यतो निखिलानां विवेकजिज्ञासूनां रसिकानां च अखिलेष्टसिद्धिः साहित्यादेव जायते ॥

'एकः शब्दः सम्यग्ज्ञातः सुष्ठु प्रयुक्तः शास्त्रान्वितः स्वर्गे लोके कामधुग्भवति' इति श्रुतिपरिशीलनया भगवन्नारायणदिव्य-चरणारविन्दस्तुतिपाठादिना धर्मप्राप्तिः, अनेकग्रन्थरचनादिभिः महा-राजादिभ्यः श्रीहर्षादेः धावकादीनामिव भोजराजात्तदास्थानपण्डितानामिव च अधीतसाहित्यशास्त्राणां धनप्राप्तिः, अर्थप्राप्त्या च काम-संपूर्तिः, मोक्षोपयोगिवेदान्तवाक्येषु व्युत्पत्त्याधायकत्वान्मोक्षप्राप्तिश्चेति चतुर्वर्गफलप्राप्तिः काव्यादेव भवति तदुक्तं विश्वनाथपण्डितेन ॥

चतुर्वर्गफलप्राप्तिस्सुखादल्पधियामपि ।
काव्यादेव यतस्तेन तत्स्वरूपं निरूप्यते ॥ इति ॥

तथैव भामहमहाकविनापि——

धर्मार्थकाममोक्षेषु वैचक्षण्यं कलासु च ।
करोति कीर्तिं प्रीतिं च साधुकाव्यनिषेवणम् ॥

इति च प्रतिपादितम् । अतः परिणतबुद्धीनामेव नीरसेभ्यो वेदशास्त्र दिभ्यः बहुना आयासेन चतुर्वर्गफलप्राप्तौ संभवन्त्यामपि सरसैः का परमानन्दसन्दोहजनकतया सुकुमारबुद्धीनां राजकुमाराणामप्यनायासे तत्प्राप्तिर्भवति ॥

नन्वेवंसति परिणतबुद्धीनां चतुर्वर्गफलप्राप्तेः शास्त्रादेव ल तान् प्रति काव्यादिकमनर्थकमिति चेन्न । यस्य कस्य वा रोगिणं आ शर्करोपशमनीये सति कस्य वा तदुपशमनार्थं कटुकौषधपाने प्रवृ

स्यात्? अतस्तेषामपि शास्त्राध्ययनापेक्षया काव्याध्ययन एव प्रवृत्तिरवश्यमुदेत्येव ॥

इतरशास्त्राध्ययने कामोत्सवादिविषये वैराग्यं प्रायशः समुत्पद्यते इन्द्रियाणामवष्टम्भनस्य जननात् । रसवत्काव्यपठने तु षण्डानामपि वर्णनावैचित्र्यादिना कामोद्दीपनस्य जायमानत्वेन तेऽपि रसिकशिखामणयः प्रजायन्ते । किमुतान्ये? एतादृशरसिकतापुरस्कारेण कामोत्सवेऽनुभूते सति कामुकानां स्त्रीपुंसानामारोग्यरक्षणपूर्वकमानन्दानुभव उत्पद्यत इति तदपि सहृदयहृदयाह्लादकरसवत्काव्यपरिचयस्य फलमिति सर्वैरपि साहित्यमभ्यसनीयमेव ॥

## साहितीयदोषतत्परिहारौ.

ननु साहित्यग्रन्थेषु प्रायशः शृङ्गारादिरसाः कचकुचादिवर्णनापुरस्सराः विदग्धयुवमनोरञ्जका एव सर्वत्रोपवर्ण्यन्त इति व्यक्तम्, एतादृशग्रन्थानामध्ययने कविनिगूढाशयपरवशहृदयाः मनोमोहकसामग्रीस्वारस्याकृष्टचित्तास्तरुणाः उपवर्णितरीत्या समुपचितावयवसौन्दर्यशालिनां परदाराणामपिविषये उच्छृङ्खलाः कामदूषिताः प्रवर्तेरन् । कवयितापि वर्णनासमये वर्ण्यवस्त्ववयवसन्निवेशाकृष्टचित्तत्वेन कृत्याकृत्यविवेकविरहितस्सन् जननीभगिन्यादेरप्यन्तरङ्गावयवस्यापि वर्णने प्रयतेत । तथाचोक्तम्—

कायेन वाचा मनसापि कामं शृङ्गारशृङ्गाररसेषु सक्ताः ।
रतिं गुरूणामपि वर्णयन्तो विशृङ्खलाः किं कवयो विभान्ति ॥ इति

किञ्च सर्वशास्त्रबोध्यानां विषयाणामल्पशोऽत्र घटनात् नैकस्यापि विषयस्य सामग्र्येणावर्णनात् साहित्याध्येतॄणां "Jack of all trades and master of none" इत्यादिपाश्चात्यगाथारीत्या न कुत्रापि कूलङ्कषं सम्पूर्णज्ञानमुदियात । पठनसमये यत्किंचित्तप्त्यत्पत्ता-

वपि स्वाभाविकाभिप्रीतस्साहित्येनानुत्पद्यमानत्वात्कालयापनं परं जायते नकुत्रापि सज्ज्ञानमुदेति । किंच आलङ्कारिकास्तावदुत्प्रेक्षातिशयोक्त्याद्यलङ्कृतानामेव अनृतासंबद्धार्थप्रतिपादकानां कव्यानामुत्कर्षमभिद्धति । अत एव काव्यप्रकाशे मम्मटमहाकविना विशेषालङ्कारप्रसङ्गे "सर्वत्र एवंविधविषये अतिशयोक्तिरेव प्राणत्वेनावतिष्ठते, तां विना प्रायेणालङ्कारत्वायोगात् अत एवोक्तम्—

सैषा सर्वत्र वक्रोक्तिरनयार्थो विभाव्यते ।

यत्नोऽस्यां कविना कार्यः कोऽलङ्कारोऽनया विना ॥ इत्यभिहितम् ॥ (वक्रोक्तिः अतिशयोक्तिः) ॥

तथैव दण्डिनापि—

अलङ्कारान्तराणामप्येकमाहुः परायणम् ।

वागीशसहितामुक्तिमिमामतिशयाह्वयाम् ॥

इत्यभिहितम् । एवं चैतादृशकाव्यपठनेन सर्वेषामपि हृदये असत्यवदनेपि न दोष इति मनीषायाः प्रवेशेन सर्वेऽप्येवमेव प्रवर्तेरन् तथैव वर्णनासमये कविभिर्विवक्षितोऽर्थः संबद्धोऽसंबद्धो वा, दुष्टोऽदुष्टो वा इत्यादिविचाराणामप्यकृतत्वेन तत्तत्पाठकानामप्येवमेव निरङ्कुशा प्रवृत्तिः स्यादिति साहित्यविद्याभ्यासः परं हेय एव ॥

यद्यपि "निरङ्कुशाः कवय" इति सर्वसम्प्रतिपन्नमेव, तथाप्येतेषां दोषाणां नावकाशः । तथा हि —बहुषु काव्येषु श्रृङ्गारादिरसप्रतिपादनौपयिकतया कचकुचादिवर्णनमपि लोकानामन्तरङ्गस्य अनिर्वचनीयस्य च तत्स्वरूपस्य बोधनद्वारा आरोग्यसंरक्षणपूर्वकं परमानन्दानुभवस्सम्पद्येतेति तात्पर्येणैव कृतम्, महर्षिप्रणीतकामशास्त्रवत्; नत्वनवस्थया सर्वत्र उच्छृङ्खलतया प्रवृत्तिबोधनार्थमिति विज्ञेयम् । यद्युच्छृङ्खला प्रवृत्तिर्दुरदृष्टवशादन्यथा वा अनिवार्या स्यात्तदा सा साहित्यानध्येतृणामपि संभवत्येवेत्येतत्साहित्याध्यनं न तत्र कारणम् । तदुक्तम् काव्यालङ्कारे रुद्रटकविना ॥

न हि कविना परदारा एष्टव्या नापि चोपदेष्टव्याः ।
कर्तव्यतयाऽन्येषां न च तदुपायोऽभिधातव्यः ॥
किन्तु तदीयं वृत्तं काव्याङ्गतया स केवलं वक्ति ।
आराधयितुं विदुषस्तेन न दोष. कवेरत्र ॥ इति ॥

तथा कामसूत्रकृतापि—

धर्ममर्थं च कामं च प्रत्ययं लोकमेव च ।
पश्यत्येतस्य तत्त्वज्ञो न च रागात्प्रवर्तते ॥
अधिकारवशादुक्ता ये चित्रा रागवर्धनाः ।
तदनन्तरमत्रैव ते यत्नाद्विनिवारिताः ॥
तदेतद्ब्रह्मचर्येण परेण च समाधिना ।
विहितं लोकयात्रायै न रागार्थोऽस्य संविधिः ॥
सन्दृश्य शास्त्रतो योगान् पारदारिकलक्षितान् ।
न याति च्छलनां कश्चित्स्वदारान् प्रति शास्त्रवित् ॥
पाक्षिकत्वात्प्रयोगाणामपायानां च दर्शनात् ।
धर्मार्थयोश्च वैलोम्यान्नाचरेत्पारदारिकम् ॥
तदेतद्दारगुप्त्यर्थमारब्धं श्रेयसे नृणाम् ।
प्रजानां दूषणायैव न विज्ञेयोऽस्य संविधिः ॥ इति ॥

अथवा कवीनां लौकिकानां सर्वेषामपि विषयाणां प्रदर्शने प्रवृत्तेः लोकान्तर्वर्तिनीभिः अष्टादशकलाकुशलाभी रूपाजीवाभिस्सार्धमानन्दमनुभवितुस्सकलैश्वर्यसंपन्नस्य मनोरञ्जनार्थमेव प्रतिपाद्यत इति तादृशा विषयास्तदुद्देशेनैव प्रवृत्ताः । अतो हंसक्षीरन्यायेन सर्वेपि साहितीपिपठिषवः पण्डिताश्च स्वस्वयोग्यानेव विषयान् स्वीकुर्युः । परिग्रहार्थं परित्यागार्थं वा सर्वेषामपि विषयाणां परिज्ञानं निखिलानामावश्यकम् । आचरणं तु विवेककुशलानां स्वोचितविषयेष्वेवेतीदं शास्त्रं न कमपि दुर्मार्गे प्रवर्तयति ॥

कवयस्तत्र तत्र असंबद्धानां विषयाणामनिबन्धने लोकानां चमत्कारस्याप्रतीत्या तदर्थमेव तादृशान् विषयानुपनिबध्नन्ति । क्वचिद्व्याकरणदुष्टादिपदप्रयोगे संदर्भानुगुण्येन कृतेऽपि व्याकरणशास्त्रप्रवर्तकैरेवाचार्यैः "सप्तद्वीपा वसुमती त्रयो लोकास्साङ्गास्सरहस्याः" इत्यादिना प्रदर्शितेषु बहुषु स्थलेषु प्रयुज्यमानानां शब्दानामानन्त्येन सर्वत्र प्रयुज्यमानलक्ष्यसाधनार्थं पृषोदरादिगणसंदर्शनेन बहुलग्रहणादिना च साधुत्वप्रतिपादने महापथस्य प्रदर्शनात् सर्वेषामपि साधुत्वं यथाकथंचित्कर्तुं शक्यते । शब्दचित्रादिकाव्येषु तादृशवैचित्र्यादिप्रदर्शनद्वारा कविरात्मसामर्थ्यं पाण्डित्यं च सर्वेषामपि तथैव बुद्धिवैशद्यं यथास्यादिति प्रदर्शयतीति तत्त्वम् । एवमादितत्त्वपरिशीलनेन दोषाभावात्सर्वतोमुखप्रतिभोत्तेजकत्वाद्गुणबाहुल्याच्च सर्वैरपि साहित्यशास्त्रमवश्यमभ्यसनीयमेव ॥

## साहित्यस्य माहात्म्यम्.

प्रायशस्साहित्यप्रबन्धास्सर्वेऽपि व्याकरणादिग्रन्था इव नातिदुरूहार्थप्रतिपादनशीलाः । परन्तु ललितपदकदम्बगुम्फिताः बालयुववृद्धानां सर्वेषामप्यनायासेन अनुरूपार्थप्रतिपादनसमर्थाः रसास्वादनचतुराश्चेति पठितॄणां श्रोतॄणां चाहारनिद्रादिष्वप्यासक्तिं निवार्य स्वाभिमुखकिरणेन तान् प्रीणयन्ति । पीयूषपयोनिधिसञ्जातसुधा तु तृषार्तान् पातॄनेव क्षुत्तृष्णानिवृत्तिद्वारा स्थिरमानन्दयति । साहित्यपाथोनिधिमन्थनोत्थं काव्यकर्णामृतं तु पठितॄणां श्रोतॄणां चाविच्छिन्नानन्दाऽऽधानेन समस्तक्लेशतापादिपरिहारपूर्वं परमाह्लादमुपसंजनयतीति वास्तवाऽमृतापेक्षया काव्यामृतमतीव श्लाघनीयम् । तदुक्तं बिल्हणेन—

साहित्यपाथोनिधिमन्थनोत्थं
कर्णामृतं रक्षत हे कवीन्द्राः ।

न हि कविना परदारा एष्टव्या नापि चोपदेष्टव्याः ।
कर्तव्यतयाऽन्येषां न च तदुपायोऽभिधातव्यः ॥
किन्तु तदीयं वृत्तं काव्याङ्गतया स केवलं वक्ति ।
आराधयितुं विदुषस्तेन न दोष. कवेरत्र ॥ इति ॥

तथा कामसूत्रकृतापि—

धर्ममर्थं च कामं च प्रत्ययं लोकमेव च ।
पश्यत्येतस्य तत्त्वज्ञो न च रागात्प्रवर्तते ॥
अधिकारवशादुक्ता ये चित्रा रागवर्धनाः ।
तदनन्तरमत्रैव ते यत्नाद्विनिवारिताः ॥
तदेतद्ब्रह्मचर्येण परेण च समाधिना ।
विहितं लोकयात्रायै न रागार्थोऽस्य संविधिः ॥
सन्दृश्य शास्त्रतो योगान् पारदारिकलक्षितान् ।
न याति च्छलनां कश्चित्स्वदारान् प्रति शास्त्रवित् ॥
पाक्षिकत्वात्प्रयोगाणामपायानां च दर्शनात् ।
धर्मार्थयोश्च वैलोम्यान्नाचरेत्पारदारिकम् ॥
तदेतद्दारगुप्त्यर्थमारब्धं श्रेयसे नृणाम् ।
प्रजानां दूषणायैव न विज्ञेयोऽस्य संविधिः ॥ इति ॥

अथवा कवीनां लौकिकानां सर्वेषामपि विषयाणां प्रदर्शने प्रवृत्तेः लोकान्तर्वर्तिनीभिः अष्टादशकलाकुशलाभी रूपाजीवाभिस्सार्धमानन्दमनुभावितुस्सकलैश्वर्यसंपन्नस्य मनोरञ्जनार्थमेव प्रतिपाद्यत इति तादृशा विषयास्तदुद्देशेनैव प्रवृत्ताः । अतो हंसक्षीरन्यायेन सर्वेपि साहितीपिपठिषवः पण्डिताश्च स्वस्वयोग्यानेव विषयान् स्वीकुर्युः । परिग्रहार्थं परित्यागार्थं वा सर्वेषामपि विषयाणां परिज्ञानं निखिलानामावश्यकम् । आचरणं तु विवेककुशलानां स्वोचितविषयेष्वेवेतीदं शास्त्रं न कमपि दुर्मार्गे प्रवर्तयति ॥

कवयस्तत्र तत्र असंबद्धानां विषयाणामनिबन्धने लोकानां चमत्कारस्याप्रतीत्या तदर्थमेव तादृशान् विषयानुपनिबध्नन्ति। कचिद्व्याकरणदुष्टादिपदप्रयोगे संदर्भानुगुण्येन कृतेऽपि व्याकरणशास्त्रप्रवर्तकै रेवाचार्यैः "सप्तद्वीपा वसुमती त्रयो लोकास्साङ्गास्सरहस्याः" इत्यादिना प्रदर्शितेषु बहुषु स्थलेषु प्रयुज्यमानानां शब्दानामानन्त्येन सर्वत्र प्रयुज्यमानलक्ष्यसाधनार्थं पृषोदरादिगणसंदर्शनेन बहुलग्रहणादिना च साधुत्वप्रतिपादने महापथस्य प्रदर्शनात् सर्वेषामपि साधुत्वं यथाकथंचित्कर्तुं शक्यते। शब्दचित्रादिकाव्येषु तादृशवैचित्र्यादिप्रदर्शनद्वारा कविरात्मसामर्थ्यं पाण्डित्यं च सर्वेषामपि तथैव बुद्धिवैशद्यं यथास्यादिति प्रदर्शयतीति तत्त्वम्। एवमादितत्त्वपरिशीलनेन दोषाभावात्सर्वतोमुखप्रतिभोत्तेजकत्वाद्गुणबाहुल्याच्च सर्वैरपि साहित्यशास्त्रमवश्यमभ्यसनीयमेव ॥

## साहित्यस्य माहात्म्यम्.

प्रायशस्साहित्यप्रबन्धास्सर्वेऽपि व्याकरणादिग्रन्था इव नातिदुरूहार्थप्रतिपादनशीलाः। परन्तु ललितपदकदम्बगुम्फिताः बालयुववृद्धानां सर्वेषामप्यनायासेन अनुरूपार्थप्रतिपादनसमर्थाः रसास्वादनचतुराश्चेति पठितॄणां श्रोतॄणां चाहारनिद्रादिष्वप्यासक्तिं निवार्य स्वाभिमुखकिरणेन तान् प्रीणयन्ति। पीयूषपयोनिधिसञ्जातसुधा तु तृषार्तान् पातॄनेव क्षुत्तृष्णानिवृत्तिद्वारा स्थिरमानन्दयति। साहित्यपाथोनिधिमन्थनोत्थं काव्यकर्णामृतं तु पठितॄणां श्रोतॄणां चाविच्छिन्नानन्दाऽऽधानेन समस्तक्लेशतापादिपरिहारपूर्वं परमाह्लादमुपसंजनयतीति वास्तवाऽमृतापेक्षया काव्यामृतमतीव श्लाघनीयम्। तदुक्तं बिल्हणेन—

साहित्यपाथोनिधिमन्थनोत्थं
 कर्णामृतं रक्षत हे कवीन्द्राः।

न हि कविना परदारा एष्टव्या नापि चोपदेष्टव्याः ।
कर्तव्यतयाऽन्येषां न च तदुपायोऽभिधातव्यः ॥
किन्तु तदीयं वृत्तं काव्याङ्गतया स केवलं वक्ति ।
आराधयितुं विदुषस्तेन न दोष. कवेरत्र ॥ इति ॥

तथा कामसूत्रकृतापि—

धर्ममर्थं च कामं च प्रत्ययं लोकमेव च ।
पश्यत्येतस्य तत्त्वज्ञो न च रागात्प्रवर्तते ॥
अधिकारवशादुक्ता ये चित्रा रागवर्धनाः ।
तदनन्तरमत्रैव ते यत्नाद्विनिवारिताः ॥
तदेतद्ब्रह्मचर्येण परेण च समाधिना ।
विहितं लोकयात्रायै न रागार्थोऽस्य संविधिः ॥
सन्दृश्य शास्त्रतो योगान् पारदारिकलक्षितान् ।
न याति च्छलनां कश्चित्स्वदारान् प्रति शास्त्रवित् ॥
पाक्षिकत्वात्प्रयोगाणामपायानां च दर्शनात् ।
धर्मार्थयोश्च वैलोम्यान्नाचरेत्पारदारिकम् ॥
तदेतद्दारगुप्त्यर्थमारब्धं श्रेयसे नृणाम् ।
प्रजानां दूषणायैव न विज्ञेयोऽस्य संविधिः ॥ इति ॥

अथवा कवीनां लौकिकानां सर्वेषामपि विषयाणां प्रदर्शने प्रवृत्तेः लोकान्तर्वर्तिनीभिः अष्टादशकलाकुशलाभी रूपाजीवाभिस्सार्धमानन्द-मनुभवितुस्सकलैश्वर्यसंपन्नस्य मनोरञ्जनार्थमेव प्रतिपाद्यत इति तादृशा विषयास्तदुद्देशेनैव प्रवृत्ताः । अतो हंसक्षीरन्यायेन सर्वेपि साहितीपि-पठिषवः पण्डिताश्च स्वस्वयोग्यानेव विषयान् स्वीकुर्युः । परिग्रहार्थं परित्यागार्थं वा सर्वेषामपि विषयाणां परिज्ञानं निखिलानामावश्यकम् । आचरणं तु विवेककुशलानां स्वोचितविषयेष्वेवेतीदं शास्त्रं न कमपि दुर्मार्गे प्रवर्तयति ॥

कवयस्तत्र तत्र असंबद्धानां विषयाणामनिबन्धने लोकानां चमत्कारस्याप्रतीत्या तदर्थमेव तादृशान् विषयानुपनिबध्नन्ति । कचिद्व्याकरणदुष्टादिपदप्रयोगे संदर्भानुगुण्येन कृतेऽपि व्याकरणशास्त्रप्रवर्तकै रेवाचार्यैः "सप्तद्वीपा वसुमती त्रयो लोकास्साङ्गास्सरहस्याः" इत्यादिना प्रदर्शितेषु बहुषु स्थलेषु प्रयुज्यमानानां शब्दानामानन्त्येन सर्वत्र प्रयुज्यमानलक्ष्यसाधनार्थं पृषोदरादिगणसंदर्शनेन बहुलग्रहणादिना च साधुत्वप्रतिपादने महापथस्य प्रदर्शनात् सर्वेषामपि साधुत्वं यथाकथंचित्कर्तुं शक्यते । शब्दचित्रादिकाव्येषु तादृशवैचित्र्यादिप्रदर्शनद्वारा कविरात्मसामर्थ्यं पाण्डित्यं च सर्वेषामपि तथैव बुद्धिवैशद्यं यथास्यादिति प्रदर्शयतीति तत्त्वम् । एवमादितत्त्वपरिशीलनेन दोषाभावात्सर्वतोमुखप्रतिभोत्तेजकत्वाद्गुणबाहुल्याच्च सर्वैरपि साहित्यशास्त्रमवश्यमभ्यसनीयमेव ॥

## साहित्यस्य माहात्म्यम्.

प्रायशस्साहित्यप्रबन्धास्सर्वेपि व्याकरणादिग्रन्था इव नातिदुरूहार्थप्रतिपादनशीलाः । परन्तु ललितपदकदम्बगुम्फिताः बालयुववृद्धानां सर्वेषामप्यनायासेन अनुरूपार्थप्रतिपादनसमर्थाः रसास्वादनचतुराश्चेति पठितॄणां श्रोतॄणां चाहारनिद्रादिष्वप्यासक्तिं निवार्य स्वाभिमुखकिरणेन तान् प्रीणयन्ति । पीयूषपयोनिधिसञ्जातसुधा तु तृषार्तान् पातॄनेव क्षुत्तृष्णानिवृत्तिद्वारा स्थिरमानन्दयति । साहित्यपाथोनिधिमन्थनोत्थं काव्यकर्णामृतं तु पठितॄणां श्रोतॄणां चाविच्छिन्नानन्दाऽऽधानेन समस्तक्लेशतापादिपरिहारपूर्वं परमाह्लादमुपसंजनयतीति वास्तवाऽमृतापेक्षया काव्यामृतमतीव श्लाघनीयम् । तदुक्तं बिल्हणेन—

साहित्यपाथोनिधिमन्थनोत्थं
कर्णामृतं रक्षत हे कवीन्द्राः ।

न हि कविना परदारा एष्टव्या नापि चोपदेष्टव्याः ।
कर्तव्यतयाऽन्येषां न च तदुपायोऽभिधातव्यः ॥
किन्तु तदीयं वृत्तं काव्याङ्गतया स केवलं वक्ति ।
आराधयितुं विदुषस्तेन न दोष. कवेरत्र ॥ इति ॥

तथा कामसूत्रकृतापि—

धर्ममर्थं च कामं च प्रत्ययं लोकमेव च ।
पश्यत्येतस्य तत्त्वज्ञो न च रागात्प्रवर्तते ॥
अधिकारवशादुक्ता ये चित्रा रागवर्धनाः ।
तदनन्तरमत्रैव ते यत्नाद्विनिवारिताः ॥
तदेतद्ब्रह्मचर्येण परेण च समाधिना ।
विहितं लोकयात्रायै न रागार्थोऽस्य संविधिः ॥
सन्दृश्य शास्त्रतो योगान् पारदारिकलक्षितान् ।
न याति च्छलनां कश्चित्स्वदारान् प्रति शास्त्रवित् ॥
पाक्षिकत्वात्प्रयोगाणामपायानां च दर्शनात् ।
धर्मार्थयोश्च वैलोम्यान्नाचरेत्पारदारिकम् ॥
तदेतद्दारगुप्त्यर्थमारब्धं श्रेयसे नृणाम् ।
प्रजानां दूषणायैव न विज्ञेयोऽस्य संविधिः ॥ इति ॥

अथवा कवीनां लौकिकानां सर्वेषामपि विषयाणां प्रदर्शने प्रवृत्तेः लोकान्तर्वर्तिनीभिः अष्टादशकलाकुशलाभी रूपाजीवाभिस्सार्धमानन्दमनुभवितुस्सकलैश्वर्यसंपन्नस्य मनोरञ्जनार्थमेव प्रतिपाद्यत इति तादृशा विषयास्तदुद्देशेनैव प्रवृत्ताः । अतो हंसक्षीरन्यायेन सर्वेपि साहितीपिपठिषवः पण्डिताश्च स्वस्वयोग्यानेव विषयान् स्वीकुर्युः । परिग्रहार्थं परित्यागार्थं वा सर्वेषामपि विषयाणां परिज्ञानं निखिलानामावश्यकम् । आचरणं तु विवेककुशलानां स्वोचितविषयेष्वेवेतीदं शास्त्रं न कमपि दुर्मार्गे प्रवर्तयति ॥

कवयस्तत्र तत्र असंबद्धानां विषयाणामनिबन्धने लोकानां चमत्कारस्याप्रतीत्या तदर्थमेव तादृशान् विषयानुपनिबध्नन्ति । कचिद्व्याकरणदुष्टादिपदप्रयोगे संदर्भानुगुण्येन कृतेऽपि व्याकरणशास्त्रप्रवर्तकैरेवाचार्यैः "सप्तद्वीपा वसुमती त्रयो लोकास्साङ्गास्सरहस्याः" इत्यादिना प्रदर्शितेषु बहुषु स्थलेषु प्रयुज्यमानानां शब्दानामानन्त्येन सर्वत्र प्रयुज्यमानलक्ष्यसाधनार्थं पृषोदरादिगणसंदर्शनेन बहुलग्रहणादिना च साधुत्वप्रतिपादने महापथस्य प्रदर्शनात् सर्वेषामपि साधुत्वं यथाकथंचित्कर्तुं शक्यते । शब्दचित्रादिकाव्येषु तादृशवैचित्र्यादिप्रदर्शनद्वारा कविरात्मसामर्थ्यं पाण्डित्यं च सर्वेषामपि तथैव बुद्धिवैशद्यं यथास्यादिति प्रदर्शयतीति तत्त्वम् । एवमादितत्त्वपरिशीलनेन दोषाभावात्सर्वतोमुखप्रतिभोत्तेजकत्वाद्गुणबाहुल्याच्च सर्वैरपि साहित्यशास्त्रमवश्यमभ्यसनीयमेव ॥

## साहित्यस्य माहात्म्यम्.

प्रायशस्साहित्यप्रबन्धास्सर्वेपि व्याकरणादिग्रन्था इव नातिदुरूहार्थप्रतिपादनशीलाः । परन्तु ललितपदकदम्बगुम्फिताः बालयुववृद्धानां सर्वेषामप्यनायासेन अनुरूपार्थप्रतिपादनसमर्थाः रसास्वादनचतुराश्चेति पठितॄणां श्रोतॄणां चाहारनिद्रादिष्वप्यासक्तिं निवार्य स्वाभिमुखकिरणेन तान् प्रीणयन्ति । पीयूषपयोनिधिसञ्जातसुधा तु तृषार्तान् पातॄनेव क्षुत्तृष्णानिवृत्तिद्वारा स्थिरमानन्दयति । साहित्यपाथोनिधिमन्थनोत्थं काव्यकर्णामृतं तु पठितॄणां श्रोतॄणां चाविच्छिन्नानन्दाऽऽधानेन समस्तक्लेशतापादिपरिहारपूर्वं परमाह्लादमुपसंजनयतीति वास्तवाऽमृतापेक्षया काव्यामृतमतीव श्लाघनीयम् । तदुक्तं बिल्हणेन—

साहित्यपाथोनिधिमन्थनोत्थं
कर्णामृतं रक्षत हे कवीन्द्राः ।

यदस्य दैत्या इव लुण्ठनाय
काव्यार्थचौराः प्रगुणीभवन्ति ॥ इति ॥

एतदेव च साहित्यशास्त्रं महाकविशिरोमणेः कालिदासस्य "भिन्नरुचिर्हि लोकः" इतिसूक्तिमनुरुध्य विविधवर्णनाचातुरी धुरीणानां निखिलानामपि महाकवीनां निरतिशयासु विभिन्नासु शैलीषु यथात्मकामं वर्णनायामानुकूल्यं संपाद्य लोकानामखिलानां नागरिकतां रसिकतां चापादयन् वैदग्ध्यवैशारद्यमातनोति । तदुक्तम्—

स्वस्वाभिलाषादिव यत्र सर्वे विद्याविलासा मिलिता लुठन्ति ।
तल्लोकवैदग्ध्यविधानयन्त्रं साहित्यतन्त्रं कलयन्ति कल्याः ॥ इति ।

साम्प्रतं सुव्यक्तमेवैतदेतावता विमर्शेन यत्साहित्यं रसभरितं गुणगणपरिपूर्णमखिलालङ्कारालङ्कृतं दोषविरहितं वाग्देवतात्मकं वाङ्म यमिति । इतराण्यप्यखिलानि शास्त्राणि वाग्देवतारूपाण्येव । निखिलानीमानि शास्त्राण्यपि सर्वाङ्गसौन्दर्यशालिन्यो युवतय इव सहृदयानां सर्वेषामपि चित्तसमाकर्षणकुशलानि । परन्तु सर्वाङ्गसुन्दर्यः हाराद्यलङ्कृताः परिपुष्टपयोधरसमृद्धाश्चेद्यथा रसिकानां यूनां मनांसि शीघ्रं सुश्लिष्टं च वशीकुर्वन्ति तथा रसभरितमलङ्कारभूषितं निखिल रीतिगुणगणगुणितं वाग्देवतापयोधरस्वरूपं साहित्यशास्त्रमपि सहृदयान् गाढमावर्जयति, नत्वितरा युवतयो न वेतरशास्त्राणि । प्राधान्येन रसप्रतिपादकत्वादेव चेदं साहित्यशास्त्रमभियुक्ताः वाग्देवतावक्षोजत्वेन वर्णयन्ति । यथा—

संगीतमपि साहित्यं सरस्वत्याः स्तनद्वयम् ।
एकमापातमधुरमन्यदालोचनामृतम् ॥ इति ॥

धेनूनां समक्षमाबद्धा वशाकृत्करयस्सर्वेऽपि पयःपारिपूर्णस्वमात्रापीनमेव सदा पश्यन्त स्तिष्ठन्ति । बन्धनान्मोचिताश्चेत् स्तनानेव गत्वा स्तन्यपानेन तृप्ता अतुलामानन्दसन्दोहसन्ततिं परां पुष्टिं

च भजन्ते, तद्वदेव वाग्देवतास्तनन्धयास्सर्वे वयमपि तत्स्तनभूतं साहित्यशास्त्रमेव सम्यक्परिशीलयन्तः तदभ्यासादिना परमानन्दमनु भूय पुरोभिवृद्धिं परां प्राप्नुम इत्यत्र न कोपि विशयलेशस्याप्यवकाशः। किंबहुना—

शास्त्रज्ञानं बहुक्लेशं बुद्धेश्चलनकारणम्।

इत्यभियुक्तोक्तदिशा इतरशास्त्राभ्यासोऽतीव क्लेशावहः। इतरेभ्यश्शास्त्रेभ्यः कूलङ्कषपाण्डित्यशालिनामेव तदीयानन्दानुभवः ग्रन्थरचनापाटवं वा भवति। साहित्यात्त्वर्थज्ञानविधुराणामपि श्रवणमात्रेणैव समुचितानन्दस्योदयेन सर्वेपि प्रायशस्तत्र प्रथमं प्रवृत्तिमुपलभ्य क्रमशो रसास्वादनादिना परममाह्लादं सहृदयहृदयसाक्षिकमनुभवन्ति। अत एव भगवान् भर्तृहरिरपि—

साहित्यसंगीतकलाविहीनस्साक्षात्पशुः पुच्छविषाणहीनः।

इत्यादिना साहित्यगन्धविधुरान् विषाणविहीनपशुवदपकृष्टानभिदधाति—

वेदादयस्तावदस्मदादिभिराधुनिकै र्बहून् वत्सरान्।
वेदस्याध्ययनं सर्वं गुर्वध्ययनपूर्वकम्॥

इति नियमानुसारेण आचार्यादेव सम्यगधीत्य पुनःपुनश्चर्वितचर्वणादिना दृढमायत्तीकृता अपि पुनःपुनरननुसन्धाने विस्मृता भवन्ति। अन्वर्थसंज्ञाः [ऋषन्ति प्राप्नुवन्ति (गत्यर्थानां ज्ञानार्थत्वात्सर्वान् मन्त्रान् ज्ञानेन पश्यन्ति;) ऋषीगतौ औणादिकः किन् प्रत्ययः] ऋषयस्तावत्तानेव वेदाननायासेन स्वतः प्रत्यक्षीकरणमात्रेणैव सर्वथा सर्वदा स्ववशे स्थापयन्ति। तथैव कवयोपि पूर्वजन्मसंस्कारात्मकतपोबलेन आलोचनामात्रेणैव प्रत्यक्ष, परोक्ष. अनुभूत, अननुभूत, वास्तव, अवास्तव, संबद्ध, असंबद्धादीन् अनन्तान् विषयान् सहृदयहृदयप्रीणनपूर्वकं परोपदेशमन्तरेणैव यथामनोरथं वर्णनायां निपुणा भवन्ति। तदुक्तं महाकविना भट्टश्रीतोतेन॥

नानृषिः कविरित्युक्तमृषिश्च किल दर्शनात् ।
विचित्रभावधर्मांशतत्त्वप्रख्या च दर्शनम् ॥
स तत्त्वदर्शनादेव शास्त्रेषु कथितः कविः ।
दर्शनाद्वर्णनाच्चाथ रूढा लोके कविश्रुतिः ॥
तथाहि दर्शने स्वच्छे नित्येप्यादिकवेर्मुनेः ।
नोदिता कविता लोके यावज्जाता न वर्णना ॥ इति ।

किंबहुना —स्वारसिकेऽस्मिन् रसिकप्रपञ्चे कविर्ब्रह्माणमप्यतिशेते इत्युक्तिरपि नातिशयोक्तिः । अत एवोक्तमाग्नेयपुराणे—

अपारे काव्यसंसारे कविरेव प्रजापतिः ।
यथास्मै रोचते विश्वं तथेदं परिवर्तते ॥
शृङ्गारी चेत्कविः काव्ये जातं रसमयं जगत् ।
स चेत्कवि र्वीतरागो नीरसं व्यक्तमेव तत् ॥ इत्यादि ।

एतादृशमहामहिमशालिसाहित्यशास्त्रविशारदता च प्राक्तनपुण्यविशेषैरेव लभ्यते । यत एवमुपश्लोक्यते---

प्रसन्नाः कान्तिहारिण्यो नानाश्लेषविचक्षणाः ।
भवन्ति कस्यचित्पुण्यै मुखे वाचो गृहे स्त्रियः ॥ इति ॥

## आनन्दानुभवः

शास्त्रविद्भ्योप्यतिशयिता अभिरतिस्साहित्यतन्त्रनिष्णातानां वाग्देवताया आन्तरङ्गिकानन्दानुभवे । तथाहि । बाह्यान्तराङ्गगर्भितेषु वस्तुषु यानि अन्तस्संदूषितावयवानि तानि बहिश्चारुदृश्यमानावयवान्यपि न केनापि परिगृह्यन्ते । यानि च बहिरसुन्दराण्यपि अन्तस्सुरसास्वादकुशलानि तानि परं सर्वैरप्यङ्गीक्रियन्त एव । तथैव वाग्देवताया बहिरवयवयोर्वाच्यवाचकयोर्मनोरमत्वे सत्यपि व्यङ्ग्यरसादिरूपान्तरवयववैधुर्ये सा न सहृदयहृदयाह्लादिका भवति ।

तथैव च वाच्यवाचकयोर्वैगुण्ये सत्यप्यन्तरङ्गव्यङ्ग्यरसादिसम्भृतत्वे सा सर्वैरपि सहृदयैरवश्यमङ्गीक्रियत एव। व्यक्तमानावलेपा आज्ञाभङ्गाऽसहिष्णवो नृपतयः आन्तरसुखदुःखादिविचारादिकमन्तरा स्वाज्ञा परिपालिता न वेति यथा शब्दमात्रप्रधाना भवन्ति तथैवेतरशास्त्रकुशला अपि आन्तरङ्गिकव्यङ्ग्यार्थपरिशीलनमकृत्वैव वाच्यवाचकमात्रे दत्तावधाना आत्मोचितमानन्दमनुभवन्तीति ते केवलं वाग्देवताबहिरवयववाच्यवाचकमात्रपरिशीलनेन आनन्दमनुभवन्ति। साहितीलब्धवर्णास्तु वाच्यवाचकयोः प्रकृतविरोधित्वमतिशयितत्वं वा अविचारयन्तः आपाततः प्रतीयमानवाच्यार्थविरुद्धेष्वपि कविप्रतिभापरिकल्पितव्यङ्ग्यरसादिषु दत्तमनसः ब्रह्मास्वादसहोदरमानन्दमनुभवन्तीति त एवेतरविद्वद्भ्योऽप्यतिशयेन वाग्देवतान्तराङ्गरसास्वादनपेशलाः। अत एव महाकविर्मम्मटः वाग्देवताऽपरावतारः वाच्यार्थापेक्षया व्यङ्ग्यार्थस्यातिशयितत्वे तत्काव्यमुत्तमत्वेन पर्यजीगणत्॥

"इदमुत्तममतिशयिनि व्यङ्ग्ये वाच्याद्ध्वनिर्बुधैः कथितः।"

इत्यादिना। अत एव तत्पुरस्सराः पण्डितप्रकाण्डाश्च अपकारिणमुद्दिश्य प्रयुक्ते अत्यन्ततिरस्कृतवाच्यध्वन्यात्मके काव्ये—

उपकृतं बहु तत्र किमुच्यते सुजनता प्रथिता भवता परम्।
विदधदीदृशमेव सदा सखे सुखितमास्स्व ततश्शरदां शतम्॥

इत्यादौ वाच्यवाचकयोरापाततो यथाकथंचित्सौष्ठवे प्रतीयमानेऽपि प्रकरणविरुद्धत्वाल्लक्षणादिना व्यज्यमानं तद्विरुद्धमपकारातिशयप्रत्यायकं व्यङ्ग्यार्थमेव पुरस्कृत्यैतत्काव्यमुत्तमं ध्वनिकाव्यमभाणिषुः॥

जगत्यामप्यस्यामनेके युवानः स्वोपभोग्यवस्तुनः अन्तरङ्गाण्यानन्दाधायकानि न वा? अवद्यान्युताहो अनवद्यानि? इत्यादि विचारमकुर्वन्तः केवलं बाह्याङ्गसौन्दर्यसमाकृष्टचित्तास्तदुपभोगेनादभ्रक्लेशं भजन्ति केचनाभजन्निति च श्रूयते। श्रूयते च केचित्सहृदया युवानः

बहिरवयवेष्वमनोरमेष्वपि अन्तरवयवानानन्दसम्पादनदक्षान् निर्दुष्टांश्च ज्ञात्वा निरन्तरं सौख्यमनुभवन्तीति च । अतो बाह्यमाधुर्यसौष्ठवाद्यपेक्षया आन्तरानन्दविधायकताद्येव समीचीनमिति सर्वसंप्रतिपन्नम् । आन्तरङ्गिकमनोहारिगन्धगन्धशून्या बहिश्चारुदृश्यमानावयवाः सुमनस इव व्यङ्ग्यार्थरहितानि निर्दुष्टवाच्यवाचकादीन्येव इतरशास्त्रज्ञाः सुमनसः परिपालयन्ति । साहितीविचक्षणास्तु बाह्यवाच्यवाचकापेक्षया आन्तरव्यङ्ग्यार्थानेव श्लाघमानाः तत्समृद्धानेव प्रबन्धान् संग्रथ्य लौकिकानानन्दयतीत्येतादृशग्रन्थकदम्बगुम्भितं साहित्यतन्त्रं कस्य वा सहृदयस्य मनो न रञ्जयेत्? तदुक्तमभियुक्तैः—

प्रतीयमानं पुनरन्यदेव वस्त्वस्ति वाणीषु महाकवीनाम् ।
यत्तत्प्रसिद्धावयवातिरिक्तं विभाति लावण्यमिवाङ्गनासु ॥ इति ॥

उत्तरमीमांसाशास्त्रप्रवर्तकाः शाखाचन्द्र—पञ्चकोशावतरणादिन्यायाननुसृत्य आदौ स्थूलपदार्थप्रदर्शनपुरस्सरं यथावाऽन्ते अतीन्द्रियं ब्रह्मस्वरूपं प्रतिपादयन्ति, तथैव साहित्यविबुधा अपि वागर्थरीतिगुणालङ्कारादीन् प्रथममुपायेनोपदिश्य क्रमशः 'रसो वै सः' इत्यादि श्रुतिमनुसृत्य रसात्मकपरब्रह्मस्वरूपं प्रतिपादयन्तः प्रजा आनन्देन रञ्जयन्ति ॥

## उपसंहारः.

एवं चैवं साहित्यतत्त्वपरिशीलनेनैतन्निर्णीतं यच्छास्त्रीयग्रन्थाः परं तत्तच्छास्त्रज्ञमनोरञ्जकानेव विषयानन्तर्भावयन्ति; साहित्यग्रन्थास्तु समस्तपण्डितपामरस्त्रीबालयुववृद्धमनस्समाकर्षकान् रसिकतापादकांश्च विषयान् बहुत्र विस्तरेण प्रतिपादयन्तीति । अतस्सर्वैरपि स्त्रीबालयुववृद्धैः पण्डितैः पामरैर्वा सकलशास्त्रीयलौकिकवैदिकविषयप्रतिपादनशीलं, सकलसहृदयहृदयाह्लादनतत्परं, चतुर्वर्गफलसाधकं, विश्वशास्त्रलतोपज्ञसूतं च साहित्यतन्त्रं को नाम श्लाघयितुं परावृत्तः स्यात्?

एतादृशं च साहित्यमेवंविधगुणगणविशिष्टमिति ज्ञात्वैव निखिलविद्यालयाधीशाः प्रथमं साहितीविदुषामेव वेतनादिकं दत्त्वा समस्तासु लौकिकविद्याप्रचारकविद्याशालासु तानेव प्राधान्येन अवस्थापयन्तीत्यामुष्मिकदृष्ट्या जीवनोपायदृष्ट्या च साहित्यविद्याभ्यास एव सर्वेषामावश्यक इति निर्विवादम्। इत्थं साहित्यतत्त्वपरिशीलने अष्टादशविद्यापरिपोषितं साहित्यतन्त्रमेव सकलविधविद्याचूडारत्नमिति अस्य महिमानं वर्णयितुं को नाम शक्नुयात्? अथवा—

निश्शेषमम्बरतलं यदि पत्रिका स्यात्
सप्तार्णवी यदि समेत्य मषीभवित्री।
वक्ता सहस्रवदनः पुरुषः स्वयं चेत्
लिख्येत पूर्णरसकाव्यकलाप्रभावः॥

इति परं संभाव्यत इति सर्वमवदातम्।


आस्थानविद्वान्, तिरुमले सत्यागालम्,

**कृष्णदेशिकाचार्यः,**

व्याकरणद्वितीयोपाध्यायः,

श्रीमन्महाराजसंस्कृतमहापाठशाला, मैसूरु.

# साहित्यतत्त्वम्



आस्थानविद्वान्,
तिरुमले-सत्यागालम् कृष्णदेशिकाचार्यः
व्याकरणद्वितीयोपाध्यायः,
श्रीमन्महाराजसंस्कृतमहापाठशाला, मैसूरु.



मैसूरु
राजकीयशाखामुद्रालये सम्मुद्रितम्
१९३७

प्रापयन्तो वा जप्याः तत्तदृषिप्रदिष्टाः ततस्तत एवावधेया इति विस्तरभीतेर्विरमामः । तदिदं सर्वमभिसंहितं "जप्येनैव तु संसिध्येत्, कुर्यादन्यत् न वा कुर्यादि" त्युपदेष्टृभिः । (इत्याकूतत्) नन्वेवमपि अनृक् स्वशाखामात्ररतः न तरेत् तानि पापानि, यानि दुष्कर्मभिराहितानि यानि चावश्यकानामष्टकादीनां अकरणात् सम्भाव्यमानानि । एभिरेवंविधैः प्रतिरुद्धमार्गश्च कथमिवैषानृणोपि सर्वन् लोकाननुसञ्चरेत्? तस्मादसंभव एवैतस्य तादृगर्थसिद्धेरिति चेत्—नाभेदव्यपदेशात् ॥

अनृगन्यापि शाखा निरन्तरमधीयमाना तत्तानि फलानि जनयतीति फलैकयात् सैवेयमिति व्यपदिशामः यत्कारणं निरन्तरमधीयामानां अन्तरायकान् अनध्यायान् निराचक्षाणा श्रुतिः तपआत्मकेन स्वाध्यायेन सर्वपापहान्या सर्वेष्टलोकगतीः अभिलषितादधिकमपि फलं अन्ततः परमपुरुषार्थं मोक्षञ्चाचष्टे । तथाहि ॥

"य एवं विद्वान् महारात्र उषस्युदिते व्रजंस्तिष्ठन् आसीनः शयानोऽरण्ये ग्रामे वा यावत्तरसं स्वाध्यायमधीते तप एव तत्तप्यते तपो हि स्भाध्याय इत्युत्तमं नाक रोहति उत्तमः समानानां भवति, यावन्तं ह वा इमां, वित्तस्य पूणां ददत् स्वर्गं लोकं जयति, तावन्तं लोकं जयति, भूयंसञ्च अक्षय्यञ्च, अपपुनर्मृत्युं जयति ब्रह्मणः सायुज्यं गच्छति" इति ॥

विवृण्वन्ति चाभिसन्धिमेवञ्जातीयकस्याम्नायस्य स्मर्तारः तद्यथा—
"वेदाभ्यासोऽन्वहं, शक्त्या पञ्चयज्ञक्रिया क्षामा ।
नाशयन्त्याशु पापानि महापातकजान्यपि ॥
महापातकिनश्चैव शेषाश्चाकार्यकारिणः ।
तपसैव सुतप्तेन मुच्यन्ते किल्बिषात्तत; ॥

कीटाश्चाहिपतङ्गाश्च पशवश्च वयांसि च ।
स्थावराणि च भूतानि दिवं यान्ति तपोबलात् '' ॥

इति मनुः । येषां हि कीटादिजन्मप्रापकाणि पापानि उद्बुद्धानि ते हीहाध्ययनाधिकृता अनुपदभाविनीं जनिं सिद्धवत्कृत्य कीटाहिपतङ्ग-पशुस्थावरादिपदैरभिहिता इति नासम्भवः ॥ तथा—

यत्किञ्चिदेनः कुर्वन्ति मनोवाङ्मूर्तिभिर्जनाः ।
तत्सर्वं निर्दहन्त्याशु तपसैव तपोधनाः ॥
तपसैव विशुद्धस्य ब्राह्मणस्य दिवौकसः ।
इज्याश्च प्रतिगृह्णन्ति कामान् संवर्धयन्ति च ॥
इत्येतत्तपसो देवा महाभाग्यं प्रचक्षते ।
सर्वस्यास्य प्रपश्यन्तः तपसः फलमुत्तमम् ॥

इत्यादि च मनुः ॥

वेदाभ्यासरतं शान्तं पञ्चयज्ञक्रियापरम् ।
न स्पृशन्तीह पापानि महापातकजान्यपि ॥

इत्यादि च याज्ञवल्क्यः ॥

नन्वेवमप्यसम्भवएवेदृशीनां फलादिसिद्धीनां, अन्यानर्थक्यात् । अनर्थकानि हि तत्तत्फलजनकानि तानितानि बह्वायाससाध्यानि कर्माण्यापतेयुः, यद्यनायासेनाध्ययनमात्रेणैव सिध्येयुः । तथाचाभाणकः—

अर्के चेन्मधु विन्देत किमर्थं पर्वतं व्रजेत् ।
इष्टस्यार्थस्य संसिद्धौ को विद्वान् यत्नमाचरेत् ॥ इति ।

अवगमयन्ति च बह्वायाससाध्यानि तत्तत्पापापहरणानि कर्माणि स्मर्तारः—

शिरःकपाली ध्वजवान् भिक्षाशी कर्म वेदयन् ।
ब्रह्महा द्वादशाब्दानि मितभुक् शुद्धिमाप्नुयात् ॥

इति ब्रह्महत्यायाः—

सुरांबुघृतगोमूत्रपयसामग्नि सन्निभम् ।
सुरापोऽन्यतमं पीत्वा मरणात् शुद्धिमृच्छति ॥

इति सुरापानस्य—

ब्राह्मणः स्वर्णहारीतु राज्ञे मुसलमर्पयेत् ।
स्वकर्म ख्यापयंस्तेन हतो मुक्तोपि वा शुचिः ॥

इति स्वर्णस्तेयस्य—

तप्तेऽयःशयने सार्धमायस्या योषिता स्वपेत् ।

इति गुरुतल्पगतेः—

गृहीत्वोत्कृत्य वृषणौ नैरृत्यां वोत्सृजेत्तनुम् ॥

इति वा—

एवञ्जातीयकान्यन्यान्यपि तत्तदृषिप्रदिष्टान्यवगन्तव्यानि । फल-जनकानि च । तस्मादसम्भव एवोपदर्शितस्य सर्वस्याप्यर्थस्येति चेत् ॥

न, अभेदव्यपदेशात् । यो हि महत् कर्म ब्रह्महत्यानिर्हारकमाचष्ट, आचष्टतरां स एव जप्येन निर्हरणम् ॥

अरण्ये नियतो जप्त्वा त्रिर्वै वेदस्य संहिताम् ।
शुध्येत वा, मिताशीत्वा प्रतिस्रोतः सरस्वतीम् ॥

इति चैवमादिभिः ॥

न स्पृशन्तीह पापानि महापातकजान्यपि ।
वेदाभ्यासरतं शान्तं . . . । इत्यादि चोपवर्णितम् ॥

इति याज्ञवल्कीयम् ॥

हत्वा लोकानपीमांस्त्रीन् अश्नन्नपि यतस्ततः ।
ऋग्वेदं धारयन्विप्रो नैनः प्राप्नोति किञ्चन ॥
ऋक्संहितां त्रिरभ्यस्य यजुषां वा समाहितः ।

साम्नां वा सरहस्यानां सर्वपापैः प्रमुच्यते ॥
यथा महाह्रदं प्राप्य क्षिप्तं लोष्टं विनश्यति ।
तथा दुश्चरितं सर्वं वेदे त्रिवृति मज्जति ॥
ऋचो यजूंषिचान्यानि सामानि विविधानि च ।
एष ज्ञेयः त्रिवृत् वेदः यस्तं वेद स वेदवित् ॥

इति च मानवम् ॥

तस्मात् तानीमानि कर्माण्येष च स्वाध्यायः सममेव पापं निर्हरन्तीति अविशेषं व्यपदिशन्ति महर्षयः । न चादृष्टार्थेष्वेवञ्जातीयकेषु अल्पत्वमहत्वादिकल्पनाः पुरुषबुद्धिप्रभवाः सङ्क्रमितुं प्रगल्भन्ते । नचैष स्वाध्यायोऽल्पः ॥

यतोऽवोचाम—

तपोविशेषैः विविधैः व्रतैश्च श्रुतिचोदितैः ।
वेदः कृत्स्नोऽधिगन्तव्यः सरहस्यो द्विजन्मना ॥

इत्यादिना बहुकृच्छ्रसम्पाद्यताम् । ननु "तपस्स्वाध्यायनिरत"मिति पदं व्याख्यान् चतुर्धार्थानभ्यधत भवान्, कतमोऽत्र ग्राह्यतामश्नुवीत? न चान्तिमः, यत्कारणं तपःसहितस्वाध्यायनिरतमित्यर्थमेव गृह्णानः कृच्छ्रसम्पाद्यं स्वाध्यायमाख्याहि । मा चैवञ्चेदाद्य एवास्त्वितिसंवदिष्ठाः, यतोऽव्यवस्थितमाचक्षे, ततस्तरां एकपदे एवार्थान्तरं पलायेथा, तदनु ततस्ततश्चेति न कोऽप्यर्थोऽत्र ग्राह्यतार्ह इत्यसम्भव एवोक्तार्थानामिति चेत् ॥

न, अभेदव्यपदेशात् । इह हि चत्वारोऽप्यर्थाः अविशेषेण व्यपदिष्टाः । मैवं पुनः शङ्किष्ठाः, यत् शब्दो विरम्यव्यापाराभाववानिति नियमो मा भञ्जीति । बोधयिता हि तन्त्रेण बोधयति, बोद्धा त्वावृत्या बुध्येत् । तत् कुतस्त्येहैकस्यैव शब्दस्यानेकार्थाभिधानव्यापाराङ्गीकृत्या-

पत्त्याशङ्का? इदं हि रसिकशिखामणेः आद्यस्य कवेः सूक्तिरत्नं सकलवेदशास्त्रार्थमर्मविदश्च । तत् तत्तदर्थावगमकानि सर्वाण्यपि प्रमाणानि अनुरुन्धान एवैवमाहेति अविशेषनिर्देशान्नासम्भव इति ॥

नन्वियतावागच्छाम, जप्येनैव दुस्तराणां पापानां ब्रह्महत्यादीनां तरणं, दुर्गाणां तत्तदामुष्मिकलोकानां गमनं, दुष्कराणाञ्च समुद्रपानलोकान्तरसर्जनादीनां कुम्भसम्भवाद्युपाख्यानबोधितानां करणम् इति । न वेदाभिधं प्रमाणं अन्यथयत् प्रमाणान्तरं वा दृष्टं इति च । नेयता पुरुषार्थाः परिसमाप्नुवन्ति, मोक्षावशेषात् । तदसम्भव एव सर्वपुरुषार्थप्रापणी स्वाध्यायजप्तिरित्यवधारणायाः "जप्येनैवे"ति इति चेत्—न अभेदव्यपदेशात् । तत्तत्कामितफललाभं मोक्षं लभेतेत्याम्नायो दर्शितः ॥

"अक्षय्यं चापपुनर्मृत्युं जयति ब्रह्मणः सायुज्यं गच्छतीति" तन्न प्रस्मर्तव्यम् ॥

अस्ति चान्योन्यश्चैवञ्जातीयक आम्नायः "किञ्जप्येनामृतत्वमेतीति शतरुद्रीयेणेति होवाच" इत्येवमादिकः । यत्कारणञ्चैवमादेर्मोक्षोपायतमाह तत एवाक्षिप्ताः, चित्तशुद्धिः, शमादिसम्पत्, कामाद्यपगमः, द्वन्द्वात्ययः, चित्तैकाग्र्यं, विद्यावाप्तिः, अविद्यापगमः इत्यतेर्थाः सर्वेपि । अविद्यास्तमय एव हि मोक्षः । न स देशान्तरगत्या स्वर्गलाभं लम्भनीयः । न चोत्पादनीयो घटाद्युत्पादम् । प्राप्त एव त्वाविद्यकेनावरणेन अप्राप्तवत् भासते । तस्तस्तन्निवृत्तौ मोक्षस्याप्तत्वोपचारः । तदिदमभिसंहितं मनुना 'यद्दुरापं तदाप्यते तपसा' इति दुस्तरदुर्गदुष्करार्थसाधकत्वातिरेकेणार्थान्तरोपायत्वं स्वाध्यायस्य वदता । मोक्षभिन्नाः सर्वेपि पुरुषार्था अवान्तरानेकभेदाः तादृक्त्रिविधेष्वन्तर्भव-

न्तीति अयं वादोनर्थकः प्राप्नोति, यद्येष मोक्षाभिप्रायो न प्रथेतेति ।
स्पष्टोपदिष्टाः पुनः मोक्षोपाया जप्या मन्त्राः महर्षिभिः । तथाहि—

तिस्रोदेष्ट्रायमन्त्रं च प्रजपेत् प्रत्यहं शतम् ।
तापत्रयं नृणां नास्ति सुखं सर्वत्र सर्वदा ॥
चतुष्कपर्दामन्त्रं च दिनं प्रति जपेच्छतम् ।
द्वन्द्वातीतः सुखी शान्तः निरसूयोऽनपेक्षकः ॥
तं वोदस्म जपेन्मत्रं त्रिंशद्वारं दिने दिने ।
रागद्वेषौ तदा न स्तः चित्तशुद्धिर्भवेत्ततः ॥
प्रब्रह्मैतु जपेन्मन्त्रं शतवारं दिने दिने ।
विषयेषु जुगुप्सा च ब्रह्मज्ञानं भवेत्ततः ॥
एकः सुपर्णो मन्त्रं च दिनं प्रति जपेद्दश ।
किञ्चिन्नास्ति पृथग्बुद्धिः परमात्मनि संस्थिता ॥
ओष्ठापिधानामन्त्रञ्च जपेद्दश दिनं प्रति ।
एकबुद्धिः सदा तस्य महाविष्णौ प्रवर्तते ॥
सुपर्णं विप्रा मन्त्रञ्च दिनं प्रति जपेद्दश ।
वाग्देवी मातृका तस्य हिह्वाग्रे वर्तते सदा ॥
विश्वतश्चक्षुर्मन्त्रं च जपेद्दश दिनं प्रति ।
बहुधा कल्पना बुद्धेरेकस्मिन्नात्मनि स्थिता ॥
तमुस्तोतारो मन्त्रञ्च दिनं प्रति जपेद्दश ।
मूलाविद्या न संस्पृष्टा जीवन्मुक्तो न संशयः ॥
घर्मासमन्तामन्त्रं च शतं जप्त्वा यदा तदा ।
यती च ब्रह्मचारी च मुक्तिकाले न कल्मषम् ॥
भवामित्रो जपेन्मन्त्रं शतवारं दिने दिने ।
आधिर्न संस्पृशेत् सत्यं विद्यया सह तिष्ठति ॥

य: पूर्व्यायजपेन्मन्त्रं शतवारं दिने दिने ।
जीवबुद्धिः सदा नास्ति स्वात्मन्येव स्थिता ततः ॥
अहमत्कंजपेन्मन्त्रं शतवारं दिनं प्रति ।
त्रिकालज्ञानसिद्धिं च सर्वथा विन्दते द्विजः ॥
तदा मृत्युभयं नास्ति संस्थितः परमात्मनि ॥ इत्यादि ॥

तस्मान् पुरुषार्थानामन्येषामिव मोक्षस्याप्युपायं जप्यं स्वाध्यायं आम्नायो वऋषयो वा अविशेषेणोपदिशतीति अभेदव्यपदेशात् साध्वी सर्वथा 'जप्येनैव' इत्यवधारणा । तस्मात् सर्वेषां श्रेयसां साधननिबन्धनमस्य स्वाध्यायस्य सिद्धमविकम्प्यं परमधर्मत्वं । तथाविधः परमो धर्माधिकृतेनावश्यमादरेणनिरन्तरमनुष्ठेय इति प्रथमतः काव्ये नमस्कार्यगुरुविशेषणतया उपदिष्टो महर्षिणा, तपस्स्वाध्यायनिरतिरेव नमस्कार्यता मवच्छिनत्तीत्यभिसन्दधानेन ॥

तस्मात् सिद्धः सूक्ष्मेक्षिकया गवेषमाणानां स्वाध्याय एव परमो धर्मो महर्षिप्रकाशित इति । तमनिबध्नतश्च कविवरस्य कालिदासस्य प्रतिज्ञोपरोध इति च ॥

स एष काव्यमुखश्रीदर्शनमात्रात् लब्धोर्थः । अथ समस्तमेव प्रबन्धार्थं पिण्डीकृत्य विमृशामः, कतमः पुनरत्र धर्मः तात्पर्येण कर्तव्यतयोपदिष्ट स्यादिति ? अवहितमेतत् पारमर्षं काव्यमध्येतृभिः; यत् "वेदवेद्यः परमः पुरुषोऽखिलकल्याणगुणैकखनिः पितृवाक्यं परिपिपालयिषुरयासीदरण्यं साध्वीसहचरोतिवत्सलानुजसहायोऽवाल्मीच्चातिगहननेऽटवीमध्ये, यदन्वभियुक्तोऽयुध्यत वानरसैनिकस्साध्वीचोरेण साधुजनकण्टकेनातिबलीयसा रक्षसा रावणाभिधेन, यदनु चापगतसर्वशक्तिश्चिन्तापरवशोऽगस्त्येन महर्षिणोपगम्योपदिष्टादित्यहृदयमन्त्रजाप्यजयदमित्रं रक्ष" इति ॥

इह चेदमत्यद्भुतं 'यत् तथाभूतोपि परमेश्वरः कुण्ठितशक्तिरभवद्रक्षोमारणे, कालानल इव तूललवभस्मसात्करणे, लीलायितं हि तस्य परमेश्वरस्य सर्वजगज्जन्मस्थेयलयम्,' इति । तदवश्यमेवं निबध्नन् महर्षिः धर्मनिबन्धनैकदत्तदृष्टिः 'परमं धर्मं उपदिशामीत्यभिसमधात्, उपन्यभान्सीच्चाजेष्टैतन्मन्त्राहितपरमशक्ती रामोऽमित्र'मिति अकामैरप्यास्थेयम् । ततः किन्देवतोयं मन्त्र इति विचिकित्सा ॥

ननु सूर्यदेवतस्स्यात्, यत आदित्यहृदयमित्याख्यायते । न स्यात्; यत्कारणं आदित्यस्य हृत् योऽयते तमिहोपादिशति, कथं ह्येनमुपासीतेति ॥

य आदित्ये तिष्ठन्नादित्यादन्तरो यमादित्यो न वेद यस्यादित्यः शरीरं य आदित्यमन्तरो यमयति एष ते आत्मान्तर्यामृतः ॥

इत्येवञ्जातीयकस्याम्नायस्याधीयन् । विशिनष्टि च 'पुण्यं' 'सर्वशत्रुविनाशनं' 'सर्वमङ्गलमाङ्गल्यं' 'सर्वपापप्रणाशनं' इति । पुण्यमिति च अनुपलब्धसङ्कोचप्रमाणेन ब्रह्मलोकाद्यनवशेषितसर्वफलजनकादृष्टवादः, अनादिकालसञ्चितकर्मकोटिमलिनचित्तावनेजनादृष्टवादश्च । तमेवमर्थकं कैमुतिकनयमपुरुध्य प्रकृतेऽपेक्षितार्थप्राप्तिं द्रढयितुं प्रथमं प्रायुङ्क्त, सर्वं फलं जनयन् शत्रुजयं जनयतीति अत्र कः संशय इति । ननु रक्षःशत्रुविनाशनमित्येव वक्तुं युक्तं, यदि प्रकृतमनुरुन्धीत। मैवं अधिकदृष्टेः । इह हि तमेव कैमुतिकनयमनुसन्धत्ते, तत आह प्रकृतजातीयाः ये ये शत्रवः, तान् सर्वानपि विनाशयतः का नाम गणना एकस्य विनाशन इति ॥

अथ वा दुर्नाशा अपि भिषजां, रागादयो रोगाः शत्रवः येन नाश्येरन्, स प्रकृतं रक्षो नाशयेदितीह कः संशय इति । ते हीमे सततमनुषज्जन्ते, न तु देवदत्तादिवत् जनिमृती अवधीकृत्य कदाचिदेव

तत्र हिङ्कारप्रकारः.

[1]साम्ने साम्ने च हिङ्कुर्युः अग्नेरित्यादिकं भवेत् ।

पृष्ठस्तोत्राणि

**रथन्तरं वामदेव्यं नौधसं च ततः परम् ॥ ११३**

**कालेयं चेति पृष्ठानि चत्वारि कथितानि वै ।**

स्तोमयोगः यजमानवाचनं च.

[2]वायु र्मध्यन्दिने योगः [3]**वृषकः** स्वामिवाचनम् ॥ ११४

## तृतीयसवनम्.

मन्त्रविनियोगादिकथनम्.

अपरेणोत्तरां वेदिं लोकद्वारद्वयं तथा ।

**मृदाशिपातमेव** स्यात् **ऋतस्याद्युपहूयच** ॥ ११५

आदित्ये च हृते [4]हर्तुः हविर्द्धानप्रवेशनम् ।

**विष्णोश्शिरोसीष ऊर्जं वसवस्त्वा त्रयं** [5]**भृति ॥ ११६**

**पवित्रं ते च** तस्मिंत्स्यात् न द्रोणे न **प्रशुक्रणम् ।**

होमादि पूर्ववत्कार्यं प्रातिहर्तूर्ध्वचाहुतिः ॥ ११७

माध्यन्दिने तृतीये च स्तोता हर्ता च केवलम् ।

होमादिसर्पणं चैव कुर्यात्तावेव केन च ॥ ११८

आर्भवपवमानस्तोत्रम्.

**स॰हितं च तृचे गायेत्** [6]**एकर्चे सफपौष्कले ।**

**श्यावाश्वान्धीगवकावमार्भवे पवमानके ॥ ११९**

---

[1]द्रा ४–१–५. [2]म–१–५–११. द्रा–४–१–१. [3]म–१–५–१२ द्रा–४–१–६ [4]द्रा–५–२–८. [5]द्रा–३–४–३७, [6]द्रा–१६–३–२४.

### स्तोमयोगचमसभक्षणयजमानवाचनानि.

तृतीये च स्तोमयोगः [1]सूर्योयु सवने भवेत् ।
[2]स्वरोऽसिवाचये [3]दिन्दोकुर्याच्चमसभक्षणम् ॥ १२०

### सौम्यचर्ववेक्षणादि.

[4]आयुस्सौम्यं चरुं पश्ये [5]द्यन्मे तत्र विकल्प्यते ।
[6]येन सौम्यं च सꣳस्पृष्ट्वाऽङ्गुलिभ्यामक्षिमार्जनम् ॥ १२१

### अग्निष्टोमस्तोत्रं तद्धर्माश्च.

सर्वे प्रावृतशिरस्काः स्वासु यज्ञीयमेव हि ।
अग्निष्टोमगानं वै एकविꣳशो भवेदिह ॥ १२२
[7]उत्तमायामनभ्यासं के [8]चिदभ्यासमूचिरे ।
[9]प्रतिहिङ्कारकालं च पत्न्यवेक्षणमाचरेत् ॥ १२३
[10]निनयेद्दक्षिणोरुं च पत्नी तु निधनक्षणे ।
[11]स्तोत्रीयायां तृतीयायां प्रस्तुतायां तु तज्जलम् ॥ १२४
निश्शेषं निनयेदूरौ पत्नी स्वीये तु दक्षिणे ।
भक्षणं नाप्यायनं च [12]ऋतस्य स्तोममोचनम् ॥ १२५

### क्रतुसमाप्तौ यजमानवाचनम्.

[13]तन्तवेमा ज्योतिषा श्रीदत्तशर्मन्निति्रयेत् ।
तदनन्तर [14]मनुमातनुहि ज्योतिषेति च ॥ १२६
ज्येष्ठानुक्रमशः पुत्रान्यजमानं प्रवाचयेत् ।
[15]जनिष्यमाणा इत्यत्र [16]तनुतेति विशेषयेत् ॥ १२७

---

[1] म–१–५–१४. द्रा–४–१–१. [2] म–१–५–१५. द्रा–४–१–६.
[3] म १–५–१६. [4] म–१–५–१७. [5] म–१–५–१८. [6] म–१–५–१९.
[7] द्रा–६–२–१९. [8] द्रा–६–२–१८. [9] द्रा–६–२–१५. [10] द्रा–६–२–१६.
[11] द्रा–६–२–१७. [12] म–१–६–७. द्रा–६–३–४–६. [13] द्रा–६–३–८.
[14] द्रा–६–३–९. [14] द्रा–६–३–१०.

## निर्गमादि.

[1] सोमे हि निर्गमस्सूर्यस्योपस्थानं [2] सुभूरिति ।
[3] अपां द्वाभ्यामाहुती द्वे धानाभक्षो [4] हारियोजने ॥ १२८
[5] देवाष्टौ शकलहोमो [6] अप्सुधौ चमसं स्पृशेत् ।
[7] मधुपाणिनुपाघ्राय चमसोत्सेचनं [8] शमत्॥ १२९
[9] कामाभ्यावर्तयेदेत [10] दृगस्तदुरसि क्षिपेत् ।
[11] प्राणेति मुखसंस्पर्शो [12] दधीति दधि भक्षयेत् ॥ १३०

## अवभृथसामादिकथनम्.

गायेत्सामावभृथं [13] स्तोमेत्पदपदाय च ।
[14] उपेयुर्निधनं सर्वेजपे [15] द्वभृथो [16] द्वयम् ॥ १३१
कृत्वाऽदित्यमुपस्थानं अस्ते त्वाहवनीयकम् ।
कुर्यु [17] स्समित्रयं होम [18] मुपतिष्ठेरन्तमेव च ॥ १३२
[19] अपो अद्याहवनीयं प्रस्तोता उपविश्य वै ।
उदयनीयायामिष्टौ तू [20] द्वन्द्वार्गमचोदसम् ॥ १३३
[20] स्वारं पयः पयस्यायां आग्नीध्रमण्टपे स्थितः ।
स्वारं चतुर्थं त्रिर्गायेदामिक्षेष्टौ प्रधानके ॥ १३४

## उदवसनीयासामकथनम्.

उदवसनीयापूर्णहुतौ [21] वंशीयमेव च ।
तृचे तु गायेत्प्रस्तोता अग्निष्टोम इतीरितः ॥ १३५

अग्निष्टोमप्रकाशिका समाप्ता ॥

---

[1–8] म-१-६-६×१३. [9] म-१-६-१४. [10] म-१-·-१५. [11] म-१-६-१६. [12] म-१-६-१७. [13] द्रा-६-४-२-(२-२-१). [14] द्रा-६-४-३. [15] द्रा-६-४-८. [16] द्रा-६-४-९. [17] द्रा-६-४-११. [18] द्रा-६-४-१२. [19] द्रा-२-२-२३. [20] द्रा-२-२-५१. [21] द्रा-२-२-५२.

### विकृतिसाधारणधर्माः.

[1] अग्निष्टोमादन्ययज्ञक्रतुष्वस्ति न धूर्विधिः ।
आज्येष्वपि न धूर्गानं [2] न विश्वज्योतिषां क्रिया ॥ १३६

[2] अहिङ्कारत्वमात्रश्च भकाराणाञ्चतुष्टयम् ।
सर्वेष्वपि च यज्ञेषु द्वयमेतत्प्रशस्यते ॥ १३७

### अत्यग्निष्टोमः.

अत्यग्निष्टोममुख्यानां क्रतूनां प्रतिपन्नुतौ ।
यज्ञीयान्ते भक्षयित्वा चमसन्तदनन्तरम् ॥ १३८

षोडशिग्रहमीक्षेत [3] यस्मादन्य इतीरयन् ।
[4] निर्गमश्च समस्तोपस्थानं प्रवेशनादिकम् ॥ १३९

त्रीण्येतान्यपि न सन्त्यत्र षोडश्यादि क्रतुष्वपि ।
[5] समयाविषितोधर्मो न कर्तव्योऽत्र कर्मणि ॥ १४०

षोडशिन्येव कर्तव्यः क्रत्वन्तरयुतो न चेत् ।
[6] षोडशिस्तोत्रसमये न्यसेत्कृष्णं तुरङ्गमम् ॥ १४१

पूर्वस्यां सदसो द्वारि पश्चिमायामथाऽपि वा ।
कृष्णाभावेऽपि यः कश्चिद्गौरश्वाभाव एव वा ॥ १४२

छागो वा तदभावेऽपि प्रयोक्तव्यो विपश्चिता ।
वितस्येन्द्रजुषस्वेति [7] स्वराडनुष्टुबुच्यते ॥ १४३

गौरीवितेन्द्रा[8]विन्द्रश्च बृहच्चेति विधायकम् ।
त्रयीविद्येत्युपस्थानं स्तोमसङ्ख्या तु पूर्ववत् ॥ १४४

[9] तृणग्रहणमुद्गाता सहिरण्यन्तु धारयेत् ।
धारयेयुस्तद्धिरण्यं त्रयोपि स्वस्वभक्तिषु ॥ १४५

---

[1] द्रा–श्रौ–२१–३–१८. [2] द्रा–श्रौ–२–४–२३. [2] द्रा–श्रौ–घ–३–४–२३. [3] म–ब्रा–१२–१३–३२. [4] द्रा–श्रौ–५–३–५—७–१–१. [5] द्रा–श्रौ–७–१–१८. [6] द्रा–श्रौ–७–१–४—८. [7] उप–नि–२–२. [8] म–ब्रा–१२–१३–१. [9] द्रा–श्रौ–७–१–११.

सर्वे निधनवेलायां स्पृशेयुर्गातृहस्तगम् ।
[1]विशेषो भक्षण मन्त्र [1]स्त्वैन्द्र॰ सह इतीरितः ॥ १४६
नाप्यायनं तस्य कुर्युः ततोऽश्वञ्च हिरण्मयम् ।
[2]प्रदद्याद्दक्षिणावस्तु गात्रे सत्रेतरेषु तु ॥ १४७

उक्थ्यः.

अथोक्थसंस्थां वक्ष्येऽह तृतीयाञ्च [3]क्रमागताम् ।
यज्ञीयानन्तरं [4]साकमश्वं [5]सौभरमेवच ॥ १४८
[6]नार्मेधश्चेति चोक्थ्यानि कुशाक्लृप्तिर्यथा पुरा ।

प्रथमोक्थ्यस्तोत्रं.

एह्यूषु साकमश्वस्य प्रथमोक्थ्यस्य कर्मणः ॥ १४९
ऋषिश्शुनश्शेपोऽग्निस्तु देवता परिकीर्तिता ।
छन्दो गायत्री देवा वा ब्रह्मणञ्च विधायकम् ॥ १५०

द्वितीयोक्थ्यस्तोत्रं.

वयमुत्वामपूर्व्येति द्वितीयोक्थ्यस्य निर्णयः ।
त्रिष्टुप्सु भर इन्द्रश्च पूर्वव(त्साम) द्ध्यानमुच्यते ॥ १५१

तृतीयोक्थ्यस्तोत्रं.

अधाहीन्द्रेति नार्मेधं तृतीयोक्थ्यस्य कर्मणः ।
ऋषिर्नृमेधाश्चेन्द्रस्तु देवता चेति कीर्तिता ॥ १५२

भक्षणेविशेषः.

आहूते चमसेऽवेक्ष्य [7]जगच्छन्दस्क भक्षणम् ।
न तस्याप्यायनं कुर्युः त्रिष्वेतेष्वपि सामसु ॥ १५३

---

[1]द्रा–श्रौ–७–१–२३. म–ब्रा–१–६–१. [2]द्रा–श्रौ–७–१–१६. [3]द्रा–श्रौ–१३–४–१७. [4]म–ब्रा–८–८–५. [5]म–ब्रा–८–८–९. [6]म–ब्रा–८–८–२१. [7]म–ब्रा–१–५–१६. [7]द्रा–श्रौ–५–१–५.

षोडशी.

अथ षोडशिनः कर्म सर्वं पूर्ववदुच्यते ।

स्तोत्रधर्माः

उक्थ्यान्ते षोडशिस्तोत्रं तस्य निगमनादिकम् ॥ १५४

[1] मद्रन्स्वरेणपर्यायः प्रथमो मण्डलेऽरुणे ।
मध्येनास्ते मध्यमश्च तृतीयश्चोच्चकैर्निशि ॥ १५५

समयाविषितोह्येष विशेषेणात्र कीर्तितः ।
हिरण्यधारणादिश्च सर्वं पूर्ववदुच्यते ॥ १५६

समयाविषितेऽतीते दैवाद्वा मानुषाद्यदि ।
कार्यमुच्चस्वरेणैव षोडशिस्तोत्रकर्मणि ॥ १५७

संस्था वाजपेयः.

अथ संस्थावाजपेयः षोडश्यन्तस्तु पूर्ववत् ।
भक्षणञ्च समस्तोपस्थानं कुर्युस्ततः परम् ॥ १५८

स्तुवीरन् [2]स्वासु बृहता त्रिपञ्चस्तोमसंख्यया ।
[3] किमित्तेति बृहत्साम्ना स्तोत्रं सप्तदशेन वा ॥ १५९

स्तोत्रे ऋष्यादिकथनं.

अस्य स्वासु बृहत्साम्नो बृहतीककुबुत्तरा ।
भरद्वाज इतीन्द्रश्चोद्यन्हिङ्कार उपासनम् ॥ १६०

प्रस्तावादि भक्तिप्रदर्शनम्.

[4] एकारान्तस्स्तावभागो बृहत्यत्र सुनिश्चितः ।
[5] तुवङ्काष्ठेतिसस्तोभो हारान्तो हसितीरितः ॥ १६१

---

[1] द्रा-श्रौ–७–२–१२ —— १५. [2] द्रा-श्रौ-२४–४–१०. [3] म-ब्रा–२५. [4] प्रस्ता-सू–७. [5] प्रति-सू–११–८.

स्तोत्रान्तरकथनम्.

शिपिविष्टवती चेत्स्यात् त्रैष्टुभञ्छन्द उच्यते ।
स्वासुवद्भागकल्पश्च भक्षणं त्रिष्टुबेतयोः ॥ १६२

तत्रैव कश्चन विशेषः.

[1]बृहत्युपद्रवे वर्णं द्वितीयं वृद्धमुच्चरेत् ।
द्व्यष्टकासु कुशास्वेव [2]ह्रस्वमन्त्यकुशाविधौ ॥ १६३

क्रत्वन्तरवाजपेयः.

अथ क्रत्वन्तरं वक्ष्ये वाजपेयꣳ सविस्तरम् ।
तस्य षोडशिवत्कल्पः सर्वस्सप्तदशो भवेत् ॥ १६४

तत्र सुब्रह्मण्याह्वाने विशेषः.

[3]इन्द्रागच्छेत्यत्र शक्रागच्छेत्यूहो विधीयते ।
[3]देवाब्रह्माण इत्यत्र विश्वे ब्रह्माण इत्यपि ॥ १६५
इत्येतावान्विशेषोऽस्ति सुब्रह्मण्यस्य कर्मणि ।
नामग्राहेप्येवमूहः सर्वमन्यत्पुरा यथा ॥ १६६

तत्र बहिष्पवमानम्.

उपास्मै दविद्युततीत्येते असृग्रमिन्दवः ।
तन्त्वा नृपवमानस्यतेकवेति बहिस्तुतिः ॥ १६७

बहिस्तुतौ विशेषकथनम्.

तन्त्वानृम्णेति पञ्चर्च(र्चं) इतरे च तृचास्स्मृताः ।
ऋधक्सो[4]मेत्यत्र कार्यं ऋधगिन्दोसुवस्तये ॥ १६८
ऋग्जपे नाऽनिरुक्तत्वं [4]भाष्यकारेण वर्णितम् ।

---

[1] द्रा–श्रौ–७–१–२४. [2] निदा–सू–२–९. [3] द्रा- श्रौ–१–४–९—१०. म–ब्रा–१८–६–७. [4] द्रा–श्रौ–२–४–१–५.

क्रं. वाजपेये आज्यानि.

होता देवस्तथा तानश्शक्तं सुरूपकृत्तथा ॥ १६९

तमीडिष्वेति च प्रोक्तं आज्यानान्तु चतुष्टयम् ।

[1] देवशब्दे यज्ञशब्दं विदध्यात्प्रथमाज्यके ॥ १७०

[1] इन्द्रमग्निमिति स्थाने शक्रं वह्निश्चतुर्थके ।

एतेषामपि चाज्यानां पूर्ववदृषिदेवते ॥ १७१

पवमानस्य चाप्याद्यसवनेऽत्र च पूर्ववत् ।

क्रं. वाजपेये माध्यन्दिनपवमानः.

अस्य प्रत्नामनुद्युतमिति गायत्र हीयवे ॥ १७२

परीतोषिमन्त१ँ स्या२दैंकर्चकरणे तथा ।

दैर्घन्तिसृषु ज्ञेय१ँ स्यात्तिसृषु स्थानमेव च ॥ १७३

[2] श्रीणन्त इति यौधाय१ँ सोमाऽपार्थमनन्तरम् ।

मध्यमं पवमान१ँ स्यादिति छन्दा१ँ सि पूर्ववत्॥ १७४

तत्र ऋष्यादिकथनम्.

ऋषयो देवताश्चापि वक्ष्यन्ते ह्येतदन्तरम् ।

अग्निर्दीर्घश्रवामन्तर्दैर्घश्रवसयोऽक्रमात् ॥ १७५

स्थानस्य वरुणः प्रोक्तो यौधाजयस्य पूर्ववत् ।

पार्थस्य पृथिवीवैन्यः सोम एव हि देवता ॥ १७६

विधायकब्राह्मणादि सर्वं पूर्ववदुच्यते ।

माध्यन्दिने भक्तिनिरूपणम्.

गायत्र्यामह्वयोस्साम्नोऽपूर्वमुक्ता विभक्तयः ॥ १७७

---

[1] द्रा-श्रौ-२४-१-४-१-४-९. [2] द्रा-श्रौ-१६-३-१४-१६-३-१८.

# श्रीमन्महीशूरदेशीयसंस्कृतविद्याभ्युदयः

---

ध्यात्वा चामुण्डिकां देवीं स्मृत्वा कर्णाटकश्रियम् ।
आख्यायिकामिमां वाणीं नर्तयामि सतां मुदा ॥ १ ॥

मैसूरुदेशविहितं संस्कृतविद्याभिवृद्धिवृत्तान्तम् ।
श्रीवेङ्कटरमणाख्यो रचयेऽहं सज्जनप्रीत्यै ॥ २ ॥

श्रीमत्कर्णाटधात्री विपिनगिरिनदीसस्यगोमर्त्यधात्री
श्रीमत्कृष्णावनीन्द्रो नृपकुलतिलको राज्यतन्त्रे महेन्द्रः ।
श्रीमद्राज्यार्थकार्याः सचिवमणिमुखा धीरसंस्तुत्यचर्याः
श्रीमत्सन्मार्गविज्ञाः सुखकलितजनाः स्वस्वकार्येष्वभिज्ञाः॥ ३

अहो ! एतादृशकर्णाटराज्ये शतशृङ्गगिरि, रङ्गगिरि, गोपालगिरि, वराहगिरि, अश्वमुखगिरि, चन्द्रद्रोणगिरि पञ्चनन्दिगिरि प्रभृतयो महीध्राः, क्षीरनदी, कावेरी, शरावती, तुङ्गभद्रा, पिनाकिन्यादयः सरिद्वराः, मृगारण्य, बिल्वारण्य, गजारण्य, दुर्गारण्यप्रभृतीनि विपिनानि, कोङ्ग, गङ्ग, होयिसळ, कदम्ब, चाळुक्यवंश प्रभुवरानुभुक्तदेशा भागाः चतुर्दिक्षु जगीयन्त इति सर्वमङ्गळायाः सदनुग्रहः परमाद्भुतः ॥ तथा—शालीक्षु, कार्पास, बर्बर, कुळुत्थ, मुद्ग, माष, तिल, चणक, गोधूमादिसस्यविलासाः, पूग, नारिकेळ, कदळी, कपित्थ, पनस, द्राक्षाम्र, जम्बीरप्रभृति फलनिचयसम्पदः, सुवर्णाभ्रक, लोह, कुरङ्गादि खनिजविभूतयः, सर्वत्र समुल्लसन्तीति, लक्ष्मीप्रसादः सर्वानुभवैकवेद्यः खलु ॥ परं वाणीप्रसादः कीदृश इति विचारणीयः यमन्तरेण देशानां वा

देशाधिपतीनां वा देशीयानां वा, न किमपि प्राशस्त्यमिति जानन्ति सर्वे ऐतिहासिकाः। तस्मात्—

या मूलं विद्यानां भाग्यानामखिलकार्यसिद्धीनाम्।
यां पूजयन्ति विबुधाः तां वाणीं नौमि सम्मोदात्॥ ४॥

यतः—

का माता? गीः, किमित्याह्वयसि? जननि! गीः! कां कया [स्तौषि? भासि?
ब्राह्मीं, वाण्याऽथ कस्यै नमसि? ननु गिरे, सम्पदायाति [कस्याः?।
वाण्याः कस्याः प्रसादो? गिर! इह भजनेच्छास्ति कस्यां? [सुवाण्यां
तन्नोपेक्ष्या त्वया सा तनुमतिसरणं स्वेष्टवाणीप्रसादे॥ ५॥

इयं वाणी, देवताबुद्ध्या सरस्वतीति, रूढपदार्थदृष्ट्या विद्येति, वाक्तत्त्वविचारेण वैखर्यात्मनापरिणता शब्दशक्तिरिति, ज्ञानपरिचिन्तनेन ब्रह्ममयीति आत्मकलेति च, तत्तद्बुद्धिगोचरा भवति एतन्मीमांसा, मीमांसादिभिरनेकधा अनेकहेतुभिर्विचारितापि, प्रकृते विद्यास्वरूपिण्या, वाण्या माहात्म्यमाकलयितुमुचितम्॥

सा च विद्या त्रिविधा, राजविद्या देशविद्या कुलविद्या चेति। राजविद्या तावदस्मिन्देशे विजयनगराधिपति, चाळुक्यपल्लवाधिपति, महाराष्ट्रमहीपति, म्लेच्छभूपालानां राज्यशासनसमयेषु, कर्णाटान्ध्रमहाराष्ट्रपारसीकादिभाषारूपा सती, इदानीं हूणप्रभावपरिपाककाले, हूणभाषामयी, सकलजनादृता वरीवर्तते। देशविद्या नाम कर्णाटविद्यैव। सापि द्विविधा। ग्रन्थस्था व्यवहारगोचरा चेति; तयोः प्रथमा, पम्प, कुमारव्यासाभिनववा-

ल्मीकि, राजशेखरप्रभृतीनां महाकवीनां मान्यभूता, इदानीं तेषां व्यवसायात्मकेषु ग्रन्थेषु तद्यशोरूपेण समुज्जृम्भते । द्वितीया तु जानपदानां नागराणां सर्वेषां स्वदेशवासिनां नित्यं व्यवहारपद-मारूढा जेगायते । परन्तु तत्र तत्र अन्यभाषासंसर्गेणाऽशुद्धा-भासरूपा मन्दगतिरिव लज्जावतीव संकुचितस्वरूपा भवतीति नैतदाश्चर्यम् । कुलविद्या नाम, आर्यकुलविद्या, गैर्वाणवाण्येव । आर्यास्तु न केवलं द्विजशब्देन रूढाः, ब्रह्मक्षत्रवैश्यवर्णप्रविष्टाः, अपि च, आर्यसंप्रदायाचारानुष्ठानेन अनुगृहीताः आर्यान्तः-पातिनः केचन शूद्राश्च । तेषां प्राचीनकुलविद्या सम्भाषणव्यवहार-दशां विहाय, यदा व्याकरणनिरुक्तादिनियमैः संस्कृता तथा महानिर्वाण, परनिर्वाण, निर्वाण, परा, पश्यन्ती, मध्यमा, वैखरी-रूपेण सप्तभूमिका क्रमेणोदिता, तत्तत्स्थानप्रयत्नादिभिः सम्यग-स्खलितोच्चारणाऽभूत् । तदा संस्कृतशब्देन व्यवहृता सती, इदानीं संस्कृतभाषा, संस्कृतविद्येति विज्ञायते । एषा संस्कृतविद्या अस्मद्भरतखण्डे आशीतशैलादासेतुं आकामरूपादाकाश्मीरं सर्वत्र विदितवैभवापि चतुर्दशशास्त्राणां चतुष्षष्टिकलानां च मूलाधारभूतापि, एतत्कर्णाटदेशे अस्या व्यवहारो वृत्तान्तश्च कीदृश इति प्रकृतविचारः परामर्शनीयः ॥

तस्याः प्रादुर्भावोऽत्रातिप्राचीनः, संस्कृतविद्या खलु कर्णाट-कविभिः सदा संमानिता, कर्णाटभाषायाः पुष्टिदायिनी, केषु चिद्ग्रन्थेषु कालिन्दीसङ्गमस्थलशोभिता भागीरथीव, कर्णाट-भाषया कृतसंसर्गा विराजते । किञ्च, महाराष्ट्रभाषाशब्देषु शते नवतिः, मळयाळभाषाशब्देषु शतेऽशीतिः, आन्ध्रभाषाशब्देषु शते षष्टिः सप्ततिर्वा, कर्णाटभाषाशब्देषु शते पञ्चाशत् संख्याकाः शब्दाः संस्कृतस्वरूपा एवेति व्यवहारानिश्चयेन, अस्म-द्देशभाषयाऽर्धासनदानेनोपस्क्रियत इयं संस्कृतवाणी ॥

अत एव प्रथमं पण्डितमण्डलीगोचरा, सुखेन संवर्धिता, अनन्तरं विजयनगरराजाश्रितैः सामन्तभूपैः[1] सादरमवेक्ष्यमाणा, तत्पोषकवर्गेभ्यो ब्राह्मणेभ्यो जीवितदानयोग्याचाभूत् । तदा हि, भट्टाः ब्राह्मणाः, शास्त्रिणोऽपि ब्राह्मणाः, आचार्याश्च ब्राह्मणाः, उपाध्यायाः ब्राह्मणाः, वैद्याश्च ब्राह्मणाः, मान्त्रिकपुरोहितादयोऽपि ब्राह्मणा इति, संस्कृतविद्याप्रभावाद्ब्राह्मणानामतीव पुरस्कारोऽभूत्॥

अत एव तत्तत्सामन्तभूपतिभिः विद्यापक्षपातिभिः विद्यावद्भ्यो ब्राह्मणेभ्यः शासनमुखात्प्रदत्ताः अग्रहाराः, गृहक्षेत्रारामादयश्च अद्यापि निरङ्कुशमुपभुज्यन्ते तत्तत्कुलजैः ब्राह्मणैः । कुत्रचिद्ब्राह्मणानां शोचनीयदारिद्र्यमाहिम्ना ते अन्याक्रान्ता भवन्तीति विषादकरोऽयमुदन्तः । इतोऽपि तत्तत्कालीनभूपानां सचिवाः मन्त्रिणश्च पुरोहिताश्च ब्राह्मणा एव । तैश्च धर्मशास्त्रोक्तप्रणाळिकाक्रमेण यदा राज्यशासनधोरण्यामपि प्रवेशिता तदा संस्कृतभाषा राजमान्याचाभूत् । संस्कृतविद्याप्रचारे बद्धादराः केचन ब्राह्मणाः सामन्तभूपतिवितीर्णवृत्तिसाधनद्वारा शिष्यानशनवसनादिभिः पोषयन्तः तानखिलशास्त्राण्यध्यापयन्तः सर्वे जनाः सुखिनो भवन्त्विति सर्वदा आशासाना ज्ञानप्रचारका अभवन् ॥

अपरे केचित् संस्कृतभाषात्मकवेदमन्त्रैः महाजनैः प्रतिष्ठापितेषु देवालयेषु, विविधदेवताः भक्तिपुरःसरमाराधयन्तः, सदा देशाभ्युदयाय प्रजाभ्युदयाय च, भगवन्तं भगवतीं वा प्रार्थयन्तः सर्वजनानामादरणीया अभवन् ॥

अपरे केचित् भारत-रामायण-भागवतपुराणादिमुखेन, समस्तदेवताप्रभावान् पुरातनराजर्षिमहर्षिचरितोपन्यासमु –

---

[1] पाळयगाराख्यैः

खेन, विनयादिसद्गुणान् जनानां बोधयन्तः सन्मार्गोपदेशकाः अभूवन् ॥

तथाहि—

आहिताग्निरनघो द्विज एकः
पुष्यति स्म निलये दश शिष्यान् ।
गृह्यमन्त्रविधया समधीता-
स्तैः सुधीभिरनिशं खलु तस्मात् ॥ ६ ॥

तथैव—

वैय्याकरणो नैय्यायिकधी-
र्विंशति शिष्यान् त्रिंशच्छात्रान् ।
वेदान्तसुधीश्चत्वारिंशच्छिष्या-
नध्यापयति स्म तदा ॥ ७ ॥

एवमेव—

गृहेऽभून्मीमांसा परनिजमतेर्भूसुरमणे-
र्वनेऽभूद्योगीशप्रथितहितसाधोश्च निकटे ।
शतं वा साहस्रं बटुजनकदम्बं विलसितं
सदा विद्याभ्यासे मतिरनुगताभूत्सुविमला ॥ ८ ॥

अपि च—

ऋषिरेकः कृषि[1]शास्त्रं वयनं[2] त्वन्यश्चकार भुवि मान्यम् ।
मुनिरेको मय[3]शास्त्रं बटुभिरधीतं हि तत् सर्वम् ॥ ९ ॥

संस्कृतविद्याबलादीदृशसन्मार्गावलम्बः गृहे गृहे प्राक्प्राचालीत् । विजयनगरराज्याभ्युदयकाले श्रीरङ्गराय-जगदेवरायप्रभृतयो राजप्रतिनिधयः संस्कृतविद्यायाः परमुत्तेजनमतन्वन्निति श्रूयते। किञ्च—अस्मिन् यदुवंशे ये महोदाराः राजानः संस्कृत-

---

[1] Agriculture. [2] Weaving. [3] Carpentry.

विद्याभिरताः, ते सर्वे गीर्वाणविद्यायाः अवलम्बकाः अभिमानिनश्च भूत्वा, विद्यावतां पण्डितानां प्रभूताश्रया अवर्तन्त । तेषु चिक्कदेव-राजाख्यभूपतिः—

शौर्ये सुत्रामतुल्यः, समरकृतिविधौ कार्तिकेयोपमोऽभूत्
विद्वद्गोष्ठीषु सोऽयं सुरगुरुसमतां दर्शयामास बुद्ध्या ।
विष्णू राज्ये प्रजानां कृतकरनियमो धर्ममार्गानुसारी
काव्यःकाव्यानुबन्धे नवरसकलिते पण्डितैश्शंसनीये ॥ १०

तथैव कण्ठीरवनरसभूपालोऽपि—

यस्य कण्ठीरवं श्रुत्वा पलायन्ते स्म शत्रवः ।
मत्ता गजा मृगेन्द्रस्य निनादेनेव विह्वलाः ॥ ११ ॥
तत्कण्ठीरवशब्दोऽयमन्वर्थोऽभूत्प्रभोः सदा ।
सिंहो नरेषु श्रेष्ठत्वाद्बलाद्दर्पात् प्रभुत्वतः ॥ १२ ॥
सोऽपि संस्कृतविद्यायाः पोषको रसिको यथा ।
तमाश्रित्य द्विजाः सर्वे निन्युः कालं सुखेन ते ॥ १३ ॥

तृतीयश्रीकृष्णराजस्तु विदुषां कल्पतरुरिति सर्वत्र प्रसिद्धिः खलु ॥

य एषः—

कर्णाटभाषा कृतिकामधेनु-
र्गीर्वाणविद्यानुतकल्पवृक्षः ।
विद्वत्प्रियो विद्वदभीष्टदाने
कर्णोऽथवा धर्मसुतोऽत्र नूनम् ॥ १४ ॥

देशेभ्योऽप्यनिशं सभामनुययुर्ये भूतिलाभेच्छवः
शास्त्रेषु प्रथिताः सुखेन विजयं संपादयन्तो भृशम् ।
स्वेष्टादप्यधिकं धनं सवसनं लब्ध्वाथ राज्ञस्तत-
स्ते सर्वे प्रतिजग्मुरिष्टवसतिं तद्भूपशंसापराः ॥ १५ ॥

एवं संस्कृतविद्याप्रभावः प्राक् सर्वत्र प्रसारितोऽपि, तदनन्तरं निखिलदिक्प्रसारितकीर्तिशरीरः श्रीमच्चामराजेन्द्रभूपः, संस्कृतविद्यायाः राजसहायपूर्वकप्रतिष्ठाविषये प्रथमहेतुरभूत्। यतः—

स स्वयं संस्कृताभिज्ञो विद्वद्गोष्ठ्याभिनन्दितः।
नाट्यशास्त्रप्रयोगाय कृतं कार्यं यदाज्ञया ॥ १६ ॥

तदर्थं शाकुन्तलप्रभृतीनि संस्कृतनाटकानि श्रीमद्भिः कविवरैः बसप्पशास्त्रिप्रभृतिभिः देशभाषात्मकतया परिवर्तितानि, नाटकरङ्गेषु प्रयुक्तानि च। तदाप्रभृत्येव अस्मिन्देशे ग्राम्यजनानामपि, नाटकाभिज्ञता समजनीत्ययं सर्वजनानुभवविषय एव। तच्छासनकाले एव राजधान्यां कल्याणनगरे च संस्कृतपाठशालयोः प्रतिष्ठाऽभूत्। तद्यथा ॥

राजधान्यां पण्डितप्रकाण्डाः, कुणिगल् रामशास्त्रिप्रभृतयः स्वस्वगृहेषु शिष्यान् न्यायवेदान्तादिशास्त्राण्यध्यापयन्तः, तृतीय श्रीकृष्णराजमहीपालसभायां पूजिताः राजसभाभूषणभूताः प्रख्याता बभूवुः ॥

श्रीमता यशःकायेन कुणिगल् रामशास्त्रिसुधीमणिना शतशोऽन्तेवासिनोऽन्तेवसन्त एव पण्डिता अभूवन्निति कस्य वा कर्णपथं नायातम्? तस्य श्रीकृष्णभूपतेर्मनोरथानुसारेण, काचित्पाठशाला राजधान्यां पुरा प्रतिष्ठापितापि, साधनसहायाभावात् पुष्टिदशां नावाप। पुरा किल माकुटीपत्तने ब्राह्मणानामध्ययनाध्यापनवृत्तिरेव प्रधानमासीदिति ज्ञात्वा, राजद्रव्यसहायेन, राजकीयास्तत्र काञ्चित्पाठशालां प्रतिष्ठापयामासुः। तत्र च ॥

द्विवारं छात्रेभ्यः करणिकगृहे भुक्तिरभवत्
गृही श्रीतिप्पार्यः प्रतिदिनमहो वाञ्छितमदात्।
तटाके कासारे नियमविधितश्शुद्धमनसः
सदा विद्यासक्ताः सुजनविदिताश्छात्रनिवहाः ॥ १७ ॥

तदा कल्याणनगरे श्रीतुलसीवाटिकायां—

द्विजोविद्वान् कश्चिद्वसतिमकरोच्छात्रनिवहैः
कुटीरे निर्बाधे परहितपरो निश्चितमतिः ।
शुभा विद्याशाला सकलसुकलापाठनचणा
तदायत्ता काचिद्वहुजनमुदेऽवर्तत सदा ॥ १८ ॥

तथैव गुण्डार्यसुधर्मशाला-
प्रतिष्ठिता संस्कृतपाठशाला ।
अन्या च काचित्प्रथिता तदानीं
शास्त्रानुकूलश्रितकाव्यशिक्षा ॥ १९ ॥

तदा क्रिस्तशक "ञषजके" (१८६९) वर्षे विद्याप्रचाराय, जनैः कल्पिताभ्यः शालाभ्यः सहायद्रव्यदाननियमाः, (Grant-in-aid rules) राजशासनधोरण्यां प्रादुर्बभूवुः । तादृशसहाय-द्रव्याधिगमार्थं उभयोः पाठशालयोः प्रवर्तकाः प्रायतन्त । परन्तु, तदानींतनराजनिबन्धनरीत्या, अस्मिन् देशे राज्यशासना-नुकूलाय, अष्टधा प्रविभक्तेषु देशभागेषु (Districts) एकैक-स्थितायाः, एकैकपाठशालाया एव साहायद्रव्याधिगमावकाशः, अतः माकुटीनगरपाठशालायै तादृशसहायद्रव्यं वितीर्णमा-सीदिति ते विफलमनोरथा अपि धैर्येण पुनः पुनः कृताध्यव-सायेन च, विंशतिरौप्यात्मकं सहायद्रव्यं लब्ध्वा, पाठशालाद्वय-मेकीकृत्य, विद्याभ्यासं प्रचारितवन्तः ॥

ऐकमत्याद्भवेल्लाभो भेदाद्भङ्गो हि जायते ।
इमां नीतिं विदित्वा ते मिळिताः कार्यसाधने ॥ २० ॥

तथैव कल्याणनगरे श्रीमान् विद्यानिधि वासुदेवशास्त्रिनामा पण्डितवर्यः तदानीन्तनमन्त्रिपुङ्गवं रङ्गाचार्यमेवं प्रार्थितवान् ॥

## कश्चिन्नव्यविमर्शः.

---

पाश्चात्यविपश्चिन्नयानुसारिणः केचन महाभारतप्रसिद्धयोः धिष्ठितविष्ठितशब्दयोः व्यवस्थां स्वोत्प्रेक्षामूलिकां सर्वजनादरणीयामारचयितुमत्सहन्ते । धिष्ठितविष्ठितशब्दौ तावत् अधि वि इत्युपसृष्टात् स्थाधातोः क्तप्रत्यये षत्वे च निष्पन्नौ स्तः । धातोस्सकर्मकत्वे कर्मणि क्तप्रत्ययः अकर्मकत्वे तु 'गत्यार्थाकर्मकेत्यादिना कर्तरि क्तः इति व्यवस्था' वष्टि भागुरिरल्लोपमवाप्योरुपसर्गयोः इत्यादिप्रमाणेन वगाहः, अवगाहः, पिधानं अपिधानमित्यादिवत् धिष्ठितः, अधिष्ठित इति रूपद्वयं सम्पद्येत महाभारते अनेकेषु पर्वसु वहुषु स्थलेषु प्रयोगदर्शनात् पाणिन्यादिस्मृतिवत् महाभारतस्यापि भारतः पञ्चमो वेद इत्यादिना प्रमाणतमत्वप्रख्यापनात् ॥

श्रीमहाभारतस्य—

| | | | |
|---|---|---|---|
| आदिपर्व | ८२ अध्या. | | दृष्ट्वा च त्वां धिष्ठितंदेवमार्गे |
| आ प. | २ अध्या. | २९९ श्लो. | दिवमावृत्य धिष्ठितम्. |
| ,, | ९१ ,, | २६ ,, | सर्वप्राणिभृतां तत्र जननीमिव धिष्ठिताम्. |
| ,, | २२७ ,, | २४ ,, | ब्राह्मणं धिष्ठिता गजाः |
| वनपर्व | १५ ,, | ६ ,, | तत्पुरं व्यूह्य धिष्ठितः. |
| ,, | १६ ,, | ३३ ,, | धिष्ठितं तद्बलं वारि. |
| ,, | २३२ ,, | २० ,, | गृहीत्वाग्निश्च धिष्ठिताः. |
| ,, | ३८ ,, | | पादांगुष्ठाग्रधिष्ठितः. |

| | | |
|---|---|---|
| द्रोणपर्व १४७ अध्या. | | दर्शयस्याद्यमात्मानमुग्रे कर्मणि धिष्ठितः. |
| कर्णपर्व ९१ ,, | ८३ श्लो. | शार्दूलानिव धिष्ठितौ. |
| ,, ,, | ,, | धिष्ठिताः पुरुषव्याघ्र त्वत्तः शरणकांक्षिणः. |

एवमनेकेषु पर्वसु तत्र प्रयोगदर्शनात् भारते सर्वत्र धिष्ठितशब्द-स्वारस्यं परीक्षकानां स्वान्ते समुन्मिषति। विष्ठितशब्दप्रयोगे च अस्वारस्यं अश्लीलादिदोषः समापतेत्। आलङ्कारिकशिरोमणिना भामहाचार्येण I परिच्छेदे "विड्वर्चौ विष्ठितक्लिन्नछिन्नवान्त प्रवृत्तयः --वाक्काटवादयश्चेति श्रुतिदुष्टा मता गिरः १ परि. ४८-४९ श्लोक इति प्रातिस्विकतया विष्ठितशब्दप्रयोगस्य प्रत्यादिष्टत्वात्। तथाच महाभारतान्तर्गत भीष्मपर्वस्थ भगवद्गीतायां-

ज्योतिषामपि यज्ज्योतिः तमसः परमुच्यते।

ज्ञानं ज्ञेयं ज्ञानगम्यं हृदि सर्वस्य विष्ठितम्॥ १३ अ. १७ श्लो.

इत्यत्रापि विष्ठितशब्दस्थाने धिष्ठितशब्दप्रयोगस्य न्याय्यत्वमदुष्टत्वं च। एवंसति श्रीभगवत्पादाचार्यैः हृदि सर्वस्य विष्ठितमिति पाठमादृत्य तदेतत्त्रयमपि हृदि—बुद्धौ सर्वस्य—प्राणिजातस्य विष्ठितं—विशेषेण स्थितं तत्रैव हि त्रयं विभाव्यते इति भाष्यं कृतम्। आनन्दगिरि नीलकंठाचार्याभ्यामप्ययमेवपाठस्समादृतः कथं सुश्लिष्टं स्यात्। परन्तु सर्वत्र महाभारतपर्वसु ऐकरूप्येण प्रयोगबाहुळ्य मध्ये विष्ठितशब्दानुसरणं दुष्टं विगुणं च। धिष्ठितमितिपाठाङ्गीकारे तु स्वरसतएव अर्थः प्रतिभाति। धिष्ठितं—स्थितमित्यतः ज्योतिषामपि-विष्ठितमिति श्लोके धिष्ठितशब्दस्वारस्यं तद्विदो विदांकुर्वन्त्विति नव्यविमर्शकानामाशयः, अत्र समाधीयते। श्रीमद्भगवत्पादाचार्यपरिगृहीतः पाठ एव श्रेयानित्यस्माकं प्रतिभाति। यत्तावदुक्तं धिष्ठित इत्यादौ अकारलो-

पानुशासनस्य आद्यग्रत्वात् कथं साधुत्वामितिचेत् अवाप्यो-रुपसर्गयोरित्यत्र उपलक्षणतया भारतस्मृते· प्रबलप्रमाणत्वेन साधुत्वेन च धिष्ठितशब्दप्रयोगः प्रामाणिक इत्यंशं परिगृह्णीमो वयं। परं तु सर्वत्र पर्वसु धिष्ठितशब्दप्रयोगबाहुळ्यं न विष्ठितशब्दस्येत्येतन्न सहामहे। तथाहि महाभारते धिष्ठितशब्दवत् विष्ठितनिष्ठितशब्दप्रयोगाः बहुशः उपलभ्यन्ते ॥

श्रीमन्महाभारते—

| | | | |
|---|---|---|---|
| सभापर्वणि | ३ अ. | १८ श्लो. | नवमेघप्रतीकाशादिवमावृत्यः - विष्ठिताः |
| सभापर्व | १ ,, | २३ ,, | यावित्रियां नानुपद्युः मानवा प्रेक्ष्य विष्ठिताः. |
| ,, | ४ ,, | ५ ,, | युद्धे द्रक्ष्यसि विष्ठितं. |
| ,, | ७ ,, | ३५ ,, | उपश्वासय पृथिवीं—विष्ठितं जगत्. |
| वनपर्व | ४० ,, | ४० ,, | मूर्तिमद्भिष्ठितं पार्श्वे ददृशुर्देवदानवाः. |
| ,, | १३० ,, | ३९ ,, | पादांगुष्ठाग्रविष्ठितः. |
| भी. प. | ३ ,, | | चित्रास्वात्यन्तरे चैव विष्ठितः परुषग्रहः. |

विष्ठितशब्दप्रयोगो रामायणेऽपि बहुषु स्थलेष्वस्ति—

स ताभ्यां सहसोत्पत्य विष्ठितो विमलेंबरे। सुन्दरकाण्डे ४६ स.

विष्ठितं मेरुशिखरे सतोयमिव तोयदम्। सुन्दर. ४९ सर्गे।

हृदयेनसतोरामं शरीरेण तु विष्ठितः। सुन्दर. ३८ स.

एवं निष्ठितशब्दोऽपि,

सभा प. अ. ४० निष्ठितां धर्मराजाय.

उद्योगप. अ. ४८ प्रजापतेः कर्म यथार्थनिष्ठितं.

आदिपर्व अ. २०५ श्लो २९, ब्राह्मेसौरेंद्रेचास्त्रे निष्ठितः

रामायणे च ४४ सर्गे धनुर्वेदे च वेदे च वेदाङ्गेषु च निष्ठितः.

एवमादीनां बहूनां प्रयोगानां महाभारत एवोपलंभात्पूर्वपक्षिणामुक्तिर्निस्सारा निष्प्रमाणं च। यदप्युक्तं गीतायां हृदि सर्वस्यविष्ठितमिति श्लोके विष्ठित शब्दप्रयोगस्य दुष्टत्वमिति तदपि तुच्छमेव, विष्ठितशब्दस्य वैदिकत्वेन ऋग्वेदे भारते च प्रयोग बाहुल्यमुपलंभामहे। ऋग्वेदे मंडल. १० सू ११४ ऋक् ८ सहस्रधा पञ्चदशान्युक्था यावद्ब्रह्म विष्ठितं तावती वाक् । या ओषधीः सोमराज्ञीः विष्ठिताः पृथिवीमनु. ऋग्वे १० मं सू. ९८ ऋ. १९. वेदसम्मितस्य महाभारतस्य काव्यमात्राहतदोषाविष्टत्वं वक्तुमसांप्रतं, तथात्वे शास्त्रयोनित्वात्; योनिश्च हि गीयते, यद्भूतयोनिं परिपश्यंति धीराः, पृथिवीयोनिः सत्यौषधीनां, अलिंगस्य कथं लिंगं युज्यते तन्मृषा दृढं, शांतिपर्व २२२ अ. एवमादावपि दुष्टत्वं प्रसज्येत। किंच धिष्ठितशब्दप्रयोगापेक्षया निष्ठितशब्दप्रयोग एव आंजस्यं स्फुरति सर्वत्र आत्मनः व्याप्तत्वेऽपि हृदये विशेषेण स्थितिः आंजसी, ज्ञानादीनां बुध्यायत्तत्वात्, हृदि ह्येष आत्मा इति ऐतरेयआरण्यके, हृदि अयमिति च निर्वचनस्य दर्शनाच्च; गीताव्याख्याकृत्सु च पाठद्वयसमादरणं प्रादर्शि, तथाहि, श्रीधराचार्यास्तु श्रीभगवत्पादाचार्यसम्मतपाठानुसारेण हृदि, विष्ठितं विशेषेण अप्रच्युतस्वरूपेण नियन्तृतया स्थितं धिष्ठितमिति पाठे अधिष्ठाय स्थितमिति व्याचख्युः। मधुसूदन सरस्वत्यस्तु धिष्ठितमिति पाठमभ्युपगम्य सर्वत्र सामान्येन स्थितमपि विशेषरूपेण जीवरूपेण अंतर्यामिरूपेण सौरं तेज इव आदर्शसूर्यकांतादौ इति

॥ श्रीः ॥

श्रीमन्महाराजसंस्कृतमहापाठशालापत्रिका

# विषयसूचना

---



---

# सम्पादकीय समितिः

---

१. श्रीमन्तः अर्थशास्त्रविशारदाः विद्यालङ्काराः महामहोपाध्यायाः डाक्टर् आर्. शामशास्त्रिणः, बि.ए., पिएच्.डि., एं.आर्.ए.एस्., विश्रान्त मैसूरु प्राच्यकोशागाराध्यक्षाः शासन-विमर्शशाखाध्यक्षाश्च

२. श्रीमन्तः प्रोफेसर् डि. श्रीनिवासाचार्याः, एं.ए., मैसूरु महाराजाकालेज् संस्कृत प्रधानोपाध्यायाः

३. पण्डितरत्नं धर्माधिकारिणः ब्र. श्री. काशी शेषवेङ्कटाचल-शास्त्रिणः

४. महामहोपाध्यायाः पण्डितरत्नं ब्र.श्री. लक्ष्मीपुरं श्रीनिवासा-चार्याः, विश्रान्तमहापाठशालाविशिष्टाद्वैतवेदान्तप्रधानो-पाध्यायाः

५. महाविद्वांसः ब्र. श्री. क. गोपालकृष्णशास्त्रिणः, महाराजा-कालेज् संस्कृतपण्डिताः

६. महाविद्वांसः ब्र. श्री. करूरु शेषाचार्याः, महापाठशाला ज्यौतिषप्रधानोपाध्यायाः

७. विद्वांसः ब्र. श्री. एस्. वेङ्कटाचार्याः, महापाठशाला साहित्य-प्रधानोपाध्यायाः

८. श्रीमन्तः एस्. बि. कृष्णमूर्तयः, एं.ए., महापाठशालाध्यक्षाः (सम्पादकाश्च)

## विज्ञप्तिः

भो भो महाशयाः! सहृदयाः! सप्रश्रयमिदमिदानीं विज्ञापयामः—संस्कृतविद्याभिमानिनः पुरुषप्रवराः यं कंचन विषयमधिकृत्य संस्कृतभाषामयं अनतिसंक्षिप्तविस्तरं उपक्रमोपसंहारपरिकर्मितं कस्याप्यनुद्वेगकरं अचर्चितपूर्वं कालदेशदशानुगुणं प्रपञ्चोपकारकरं धर्माद्यविरुद्धं "जीर्णमङ्गे सुभाषितम्" इति निर्वेदस्य "वीरा वाचैव केवलम्" इत्यपवादस्य वा प्रशमकरं प्रस्पष्टमुखविलासमुपन्यासं विलिख्य यदि प्रेषयेयुर्महान्तः, तेभ्यो महद्भ्यः समर्प्य अनन्तान् धन्यवादान् पत्रिकायामस्यां तमुपन्यासं पारयामः प्रकाशयितुम् ॥

यदीच्छति वशीकर्तुं जगदेकेन कर्मणा ।
परापवादसस्येभ्यो गाश्चरन्तीर्निवारयेत् ॥
न हीदृशं संवननं त्रिषु लोकेषु विद्यते ।
दया मैत्री च भूतेषु दानं च मधुरा च वाक् ॥

संपादकस्य.

---

## मूल्यप्रकारः

१. अस्याः पत्रिकायाः वार्षिकम् अग्रिमं मूल्यं सार्धैकरूप्यकम्
   प्रापणव्ययः (भारतमण्डले.) .... .... पादरूप्यकम्

२. विद्यार्थिनां पुनः एकरूप्यकम्. प्रापणव्ययः ,,

३. विभिन्नदेशे सपादरूप्यद्वयम् (3s.) प्रापणभृतिः अर्धरूप्यकम्

पत्रिकाप्राप्तिस्थानम्,

**संपादकः,**

श्रीमन्महाराजसंस्कृतमहापाठशाला, मैसूरु.

## सधन्यवादमस्माभिरङ्गीकृता एताः विनिमयरूपाः पत्रिकाः

---

1. संस्कृतसाहित्यपरिषत्पत्रिका, श्रीनगरम्
2. संस्कृत साहित्यपरिषत्पत्रिका, कल्कत्ता
3. उद्यानपत्रिका, तिरुवाडि.
4. सुप्रभातम्, काशी.
5. सूर्योदयः, काशी.
6. संस्कृतरत्नाकरः, जयपुरम्.
7. संस्कृतपद्यवाणी, कल्कत्ता.
8. मञ्जूषा, कल्कत्ता.
9. अच्युतः, काशी.
10. कल्याणम्, गोरखपुरम्.
11. मधुरवाणी, बेलगाम्.
12. देववाणी, कल्कत्ता.
13. The Mythic Society Journal, Bangalore.
14. Annals of the Bhandarkar Oriental Research Institute, Poona.
15. Review of Philosophy and Religion, Poona.
16. Journal of Oriental Research, Madras.
17. The Law College Magazine, Madras.
18. Sunday Edition "The Hindu," Madras.
19. The Aryan Path, Bombay.
20. The Theosophical Movement, Bombay.
21. The Philosophical Quarterly, Calcutta.
22. Karnataka Historical Review, Dharwar.
23. Ardra, Ceylon.



24. "Yoga," Bulsar.
25. The Vaitarini, Chowdwar.
26. Poona Orientalist, Poona.
27. The Mimansa Prakasa, Poona.
28. Brahmavidya, Adyar, Madras.
29. ಆಂಧ್ರ ಸಾಹಿತ್ಯಪರಿಷತ್ಪತ್ರಿಕಾ, ಕಾಕಿನಾಡ.
30. ಭಾರತೀ, ಮದ್ರಾಸು,
31. ಸನಾತನಮತಪ್ರಚಾರಿಣೀ, ಭಟ್ನವಲ್ಲಿ.
32. ಜಯಕರ್ಣಾಟಕ, ಧಾರವಾಡ.
33. ಸದ್ಬೋಧಚಂದ್ರಿಕೆ, ಆನಂದವನ.
34. ವಿಶ್ವಕರ್ಣಾಟಕ, ಬೆಂಗಳೂರು.
35. ತಾಯಿನಾಡು, ಬೆಂಗಳೂರು.
36. ಅಧ್ಯಾತ್ಮಪ್ರಕಾಶ, ಬೆಂಗಳೂರು.
37. ರಂಗಭೂಮಿ, ಬೆಂಗಳೂರು.
38. ಕರ್ಣಾಟಕ ಸಾಹಿತ್ಯಪರಿಷತ್ಪತ್ರಿಕೆ, ಬೆಂಗಳೂರು.
39. ಕಾದಂಬರೀಸಂಗ್ರಹ, ಚಾಮರಾಜನಗರ.
40. ಪ್ರಬುದ್ಧಕರ್ಣಾಟಕ, ಮೈಸೂರು.
41. ವಿವೇಕಾಭ್ಯುದಯ, ಮೈಸೂರು.
42. ಪೂರ್ಣಬೋಧ, ಮೈಸೂರು.
43. ಸಾಧ್ವೀ, ಮೈಸೂರು.
44. ಗರಿಕೆ, ಮೈಸೂರು.

॥ श्रीः ॥

# श्रीमन्महाराजसंस्कृतमहापाठशालापत्रिका

प्रतिमासत्रयं प्रकटीक्रियमाणा

"कुर्वन्नेवेह कर्माणि जिजीविषेच्छतं समाः"

(ईशोपनिषत्)

सम्पुटम् १३] १९३७ [सञ्चिका ३

## सुभाषितानि.

शैत्यं नाम गुणस्तवैव तदनु स्वाभाविकी स्वच्छता
किं ब्रूमः शुचितां भजन्त्यशुचयः स्पर्शेन यस्यापरे ।
किंवाऽतः परमुच्यते स्तुतिपदं यज्जीवनं देहिनां
त्वं चेन्नीचपथेन गच्छसि पयः कस्त्वां निषेद्धुं क्षमः ॥ १ ॥

मौलौ सन्मणयो गृहं गिरिगुहा त्यागः किलात्मत्वचः
निर्यत्नोपनतैश्च वृत्तिरनिलैरेकत्र चर्येदृशी ।
अन्यत्रानृजुवर्त्मता द्विरसना वक्त्रे विषं वीक्षणं
सर्वाऽमङ्गलसूचकं कथय भो भोगिन् सुखं किं त्विदम् ॥२॥

भ्रातः काञ्चन लेपगोपितबहिस्ताम्राकृते सर्वतः
माभैषीः कलशे स्थिरो भव चिरं देवालयस्योपरि ।
ताम्रत्वं गतमेव काञ्चनमयी कीर्तिःस्थिता तेऽधुना
नान्तस्तत्त्वविचारणप्रणयिनो लोका बहिर्बुद्धयः ॥ ३ ॥

अज्ञतया प्रेम्णा वा चूडामणिमाकलय्य काच मणिम् ।
नृपतिर्वहेत शिरसा तथापि नायात्यनर्घतां स मणिः ॥ ४ ॥

पिता रत्नाकरो यस्य लक्ष्मीर्यस्य सहोदरी ।
शंखा रोदिति भिक्षार्थी नादत्तमुपतिष्ठति ॥ ५ ॥

निस्सारस्य पदार्थस्य प्रायेणाडम्बरोमहान् ।
न सुवर्णे ध्वनिस्तादृग्यादृक् कांस्ये प्रजायते ॥ ६ ॥

विषभारसहस्रेण गर्वं नायाति वासुकिः ।
वृश्चिको बिन्दुमात्रेण वहत्यूर्ध्वं हि कण्टकम् ॥ ७ ॥

दिव्यं चूतरसं पीत्वा गर्वं नायाति कोकिलः ।
पीत्वा कर्दमपानीयं भेको रटरटायते ॥ ८ ॥

---

# अन्यापदेशः

सर्वतन्त्रस्वतन्त्रस्य कैयटव्याख्यान-शिवतत्त्वरहस्य-नीलकण्ठ-
विजयादिप्रबन्धप्रणेतुः श्रीनीलकण्ठदीक्षितस्य तृतीय-
नन्दनेन श्रीगीर्वाणेन्द्रदीक्षितेन प्रणीतः.

"श्रीमहीशूरमहाराजसंस्कृतसरस्वतीप्रासादमहापाठशालायां
ज्योतिश्शास्त्रप्रधानोपाध्यायेन संस्थानमहाविदुषा
करूरु शेषाचार्येण संशोधितः.



मैसूरु
राजकीयशाखामुद्रालये सम्मुद्रितः
१९३७

# भूमिका.

प्रष्ठाः—स्पष्टतममेवेदमाबालगोपालम्। यत समस्तमपि भुव
नमावृतमधरितमधुरसमधुरिमभरेण सहृदयसमुदयहृदयकर्षणच
णेन विमर्शसाधनबद्धपरिकरेण गाङ्गौघवत् सर्वमपि पुनानेः
सकलैनसां गणंधुनानेन सारस्वतपुरेणेति ॥

स च त्रिविधः—प्रभुसम्मितः-सुहृत्सम्मितः-कान्तासम्मित
श्चेति ; तत्र प्रथमः—प्रभुरिवाप्रतिहतदुर्लङ्घशासनशीलो देवः
द्वितीय -सुहृदिव-धर्माधर्मस्वरूप तदुद्भवभव्याभव्यावबोधकोपा
ख्यानशतैस्तदुपादानहानावगमकः पुराणेतिहासादिः। तृतीयः-
बाहूत्क्षेपकटाक्षविक्षेपभ्रूभङ्गविलासगमनहावभावादिभिः प्रिय
तमेव तत्तद्रसभावाभिव्यञ्जकपदगुम्भैः सत्वरं चित्ताकर्षकः का
व्यचम्पूनाटकादिः। कान्तासम्मितेऽत्र प्रबन्धेऽतितरां हृदयावर्ज
कोह्यन्यापदेशो ग्रन्थः। ते च बहवस्समुपलभ्यन्ते भावगभीर
हृदयावर्जकाः। तेष्वेतादृशो ग्रन्थ इव सरसः सकृच्छ्रवणमात्रा
देव श्रोतृणां स्वाशयाविष्कारको ललिततमपदाञ्चितः कर्णयु
गसुधावर्षी न लभ्यतेऽन्यो ग्रन्थः ॥

अस्य च प्रणेता श्रीमान् गीर्वाणेन्द्रदीक्षितः। अयं च श्री
भारद्वाजकुलजलधिकौस्तुभ — चतुरधिकशतप्रबन्धप्रणयनालङ्क
र्मीणाद्वैतविद्याचार्य श्रीमदप्पयदीक्षित सोदराच्चादीक्षितपौत्रस
नारायणदीक्षिततनुजस्य भूदेवीगर्भसम्भवस्य कलिविडम्बन सभा
रञ्जनशतक शान्तिविलास वैराग्यशतकानन्दसागरस्तवान्याप
देशशतक शिवोत्कर्षमञ्जरी—शिवलीलार्णव शिवतत्वरहस्य कैर

टव्याख्यान नीलकण्ठविजयादि प्रबन्धमणिनिर्माणदिगन्तसौवस्तिकयशोवितानस्य श्रीनीलकण्ठदीक्षितस्य तार्तीयीकस्तनूजः। एतत्तातपादस्य श्रीनीलकण्ठदीक्षितस्य जीवितसमयः वसुगुणशैलाब्धि (४७३८) मितेभ्यो गतेभ्यः कलिवत्सरेभ्यः (१६३७ गतक्रिस्ताब्देभ्यः) प्राक् परतश्चासीदिति स्पष्टमवगम्यते। अयमेवव्याचष्टे नीलकण्ठविजयचम्प्वां प्रथमाश्वास—एकादशे श्लोके। अष्टत्रिंशदुपस्कृतसप्तशताधिकचतुस्सहस्रेषु कलिवर्षेषु गतेषु ग्रथितः खलु नीलकण्ठविजयोऽयमिति। अद्सीय एव कतिपयवत्सरन्यूनाधिकभावेन जीवनकालो गीर्वाणेन्द्रदीक्षितस्यापि। श्रीनीलकण्ठाध्वरी दाक्षिणात्यायां मधुरापुर्यां तिरुमलैनायकमहाराजस्यास्थान्यां पण्डिताग्रणीः प्रधानसचिवश्चासीदिति विज्ञायते। तत्सूनुरयं तदनुग्रहोपलब्धाशेषविद्यस्तां नगरीमध्युवासेति प्रतीयते। गीर्वाणेन्द्रेण शृङ्गारकोशो नामकोऽपि भाणः प्रणीतः। तत्रस्थं पद्यद्वयमुपायनीक्रियते सचेतोभ्यः। यथा—

अस्त्यस्तोकगुणो हिमाद्रिशिखरोत्सङ्गापतज्जाह्नवी
साहङ्कारतरङ्गसङ्गसहजश्रीहारिसूक्तिक्रमः।
किञ्चोन्मूलयितुं मनश्च सुदृढीकर्तुं कलासु प्रभुः
सर्वज्ञो हरिदन्तविश्रुतयशाश्श्रीनीलकण्ठाध्वरी॥
यस्मिन् क्षोणिभुजां सभासु विदुषामग्रेसरे जातुचित्
स्वातन्त्र्यं विविधं विवृण्वति निजं सर्वासु विद्यास्वपि।
जायन्ते गगनप्रचोदितदृशः स्तव्योपलब्धिक्रमाः
स्वेदाम्भः कणसिक्तसर्वतनवो दीनाः प्रतिद्वन्द्विनः॥ इति॥

किञ्चानेन मन्त्रशास्त्रे निरमायि प्रपञ्चसारसंग्रहो नाम ग्रन्थः। सचोपलभ्यते श्रीमहीशूरमहाराजसंस्कृतमहापाठशालासरस्वती" भाण्डागारे। महाभागोऽसौ मान्त्रिकमणिः परिव्राजक इति स्पष्टमवबुध्यते। स एवाह तद्ग्रन्थस्यादौ "नत्वा श्रीशङ्कराचार्यममरेन्द्र-

यतीश्वरः। कुर्वे प्रपञ्चसारस्य संग्रहं सारमुत्तम" मिति। अस्मत्सातपाददैवज्ञावतंसश्रीशैलकुलतिलकश्रीरामभद्रसूरिलिखितामेकां मातृकां पुस्तिकां परमालम्ब्य यथाधिषणं कथमपि समशोधि मयायमन्यापदेशप्रबन्धः। अत्र ये केचिदंशाः प्रामादिकास्तर्हि ते कृपया सुधीभिश्शोधनीया इति सविनयं प्रार्थये॥

निरवद्यहृद्यसाहित्यो दीक्षितोऽयं सरसया ललितया पदशैल्या सर्वांशतोऽनुरुन्धे स्वपितुरन्यापदेशशतकसरणिम्॥

अपिच दीक्षितोऽसौ हन्त निगम, महाभारत, विष्णुपुराण, पाञ्चरात्रादिप्रमाणमूर्धन्यग्रन्थजालोद्घोषितामाविच्छिन्नसंप्रदायागतामपि शङ्खचक्राङ्कनवैष्णवदीक्षां सोल्लुण्ठनमाधिक्षिपति ६२, ७२, ७३, ८१ पद्यैश्चतुर्भिर्भङ्ग्यन्तरेण वारंवारम्। अनेनास्य शैवदीक्षायामुन्मस्तकोऽभिनिवेश इति विदांकुर्वन्तु विद्वांसः। ग्रन्थेऽत्र द्वाविंशे पद्ये पूर्वार्धं लुप्तम्। तदेवं मया पूरितम्॥

धर्मे धर्मकरस्य तिग्मकिरणैर्बाष्पायमाणा धरा
योषास्स्विन्नतमप्रतान्ततनवः खिन्नाश्चकोरास्तृषा॥

तथा नवाधिकशततमे श्लोकेऽपि किञ्चिदुत्तरार्धे लुप्तम्। तत्रापीत्थं पूरितम्। छेद्याननेकान् द्रुमान् ब्रूते वध्यममुम्। इति। यत्र कुत्र वा कोशे यद्यलुप्तस्समुपलभ्यते पाठस्तदा स एव परिगृह्यतां सद्भिः। दीक्षितेनैनेनान्ये के वा ग्रन्थाः कृता इति न ज्ञायते। अमुष्मिन् प्रबन्धे ५, २८, ३०, ३८ श्लोकेषु क्रमशः ईहतः (षष्ठ्येकवचने) स्पर्धेन (तृतीयैकवचने) श्ववराहौ (पूर्वपददीर्घाभावे) रुन्धताम् (लोटिप्रथमपुरुषैकवचने) इति प्रयुक्ता अपाणिनीयाश्शब्दास्सुधीभिः कथं चिन्निर्वाह्यास्सोढव्याश्चेति विरम्यते॥

इत्थं विज्ञापयिता गर्भपुरा (करूरु) भिजनः शेषाचार्यः संस्थानमहाविद्वान्॥

---

॥ श्रीहयग्रीवाय नमः ॥

# अन्यापदेशः

---

(श्रीगीर्वाणेन्द्रदीक्षितविरचितः.)

लोकानन्दनिदानमम्बुजमयं द्वेष्टि स्वयं चन्द्रमा
  देवः किं मुरशासनः कलयते गर्भे न तत्तावता ।
द्वैराज्यं कविकुञ्जरैर्मृगदृशां वक्त्रैर्न किं नीयते
  रूढा यामवतीपतेः पुनरियं वस्तुष्वसारज्ञता ॥ १ ॥

यावद्वार्षिकदर्शशार्वरतमस्स्तोमाभिरामो महा-
  नाचान्ताखिलदिक्तटो जलधरो वर्षाय सन्नह्यति ।
तावच्चण्डसमीरणस्तमचिरादाकृष्य यत्र क्वचि-
  न्नीत्वाऽदर्शनमेव यन्नयति तत्तस्यैव दुश्चेष्टितम् ॥ २ ॥

यानारोहणमस्तु वृत्तिरशनैरप्यस्तु राजोचितै-
  राखेटेऽस्तु पराक्रमोऽपि न शुनस्तत्त्वं प्रयाति क्वचित् ।
अन्नं पिप्पलपल्लवोऽस्तु धरणी शय्यास्तु रेणूल्बणा
  मत्तेभस्य तथापि मत्तगजता नापैति यत्नादपि ॥ ३ ॥

श्रान्तिश्शान्तिमुपैति पान्थसुदृशां सर्वापि ते छायया
  दुस्साधो भिषजां शतैरपि महावातोऽपि तैलेन ते ।
बालानां ग्रहवायसादिजनितो दोषस्त्वदीयैर्दलै-
  र्निम्ब त्वं सुरपादपोऽसि नियतं स्याच्चेन्न ते तिक्तता ॥ ४ ॥

सत्यप्यम्बुजकाननने परिमलैराशान्तविश्रान्तिभि-
  श्चित्ताकर्षिणि सान्द्रसुग्रहमधुस्रोतोभिराप्लाविते ।

आतष्षट्पद दुष्प्रवेशमुरगैरुच्चावचैः कण्टकैः
प्राप्तुं कैतकमीहतस्तव फलं वक्त्रक्षतिः केवला ॥ ५ ॥

रत्नानां प्रभवोऽसि मान्यमहसां धत्से च विश्वम्भरं
गर्भे विष्टपमातुरप्यसि गुरुस्थानं सुधानामसि ।
दाता जीवनदातुरप्यसि महामेघस्य वारां निधे
लावण्यं यदि दुस्सहं न भवतस्त्वां कोऽनुकर्तुं क्षमः ॥ ६ ॥

द्वित्रैरम्बुकणैर्न चेत् पुनरपि द्वित्रैर्विनैवार्थनां
लब्धैरन्यत एव तेन किमिदं दग्धोदरं पूर्यते ।
इत्थं चातक कण्टकाण्डविलुठत्प्राणेन यत् प्रार्थ्यते
जीमूतो भवता निरङ्कुशमिदं मौढ्यं क्व ते कथ्यताम् ॥ ७ ॥

विद्युद्भिर्नयनानि घोरनिनदैश्श्रोत्राणि निर्घाततः
प्राणांश्चापि हरस्ययत्नमटवीकान्तारशैलाब्धिषु ।
वर्षस्यम्बुद याचितोऽपि मनुभिः प्राचेतसैर्वर्तसे
कालेऽप्यस्तघृणो यशस्तव तथाप्यन्तं दिशामावृणोत् ॥ ८ ॥

वृष्टीर्वारयसे दृशः कलुषयस्यारामुन्मूलय-
स्यब्धीन् शोषयसे दिशश्च कुरुषे धूलीभिरुद्धूलितः ।
पश्यामस्त्वयि नोपकारलवमप्यालोचयन्तो वयं
वायो षष्टिदिनायुषः कथमहो गर्वस्तवोन्मस्तकः ॥ ९ ॥

आरामे पनसाम्रवारणबुसाखर्जूरचन्द्रद्रुम-
प्राये संसृतिरिन्द्रनीलमसृणा छायापि साधारणी ।
साकं संचर काक कोकिलकुलैस्संत्यज्य शालीनतां
न त्वं व्यञ्जयसे गिरं यदि जनो जानाति कस्त्वामिह ॥ १० ॥

अङ्गारे पुरतः क्षिपन्त्यथ दृढं गृह्णन्ति संदर्शनी-
वक्त्रेणाम्भसि मज्जयन्त्यथ ततो घ्नन्त्यायसैस्साधनैः ।
घर्षन्ति स्म कषोपलेष्वथ तुलां गुञ्जाभिरप्यञ्जसा
यत्त्वां हेम नयन्ति दुस्सहमितः किं पातकं कथ्यताम् ॥११

आसारैरशिशिरीकृता वसुमती वेशन्तशैवालिनी
कासाराब्धिपुरोगमाश्च शतशो निश्शेषमापूरिताः ।
आरामाश्च बहिष्कृताः किसलयैः पुष्पैश्च धाराधर
श्रान्तेऽपि त्वयि कस्य हानिरधुना नष्टाः परं चातकाः ॥१२॥

किं पुष्णासि मृगान् मृगाधिप दिशन् काले तदीयेप्सितं
किं वा भीतिमपाकरोषि दवतस्तेषामरण्यौकसाम् ।
दर्शंदर्शमिमान्वियोजयसि च प्राणैस्तवैतादृशो
दुर्वारा मृगराजता किल कृता दुर्मेधसा वेधसा ॥ १३ ॥

सञ्जातोऽपि कठोरकीचकवनादन्योन्यसंघर्षत-
स्तत्प्रायं वनमाश्रयाश दहसीत्येतद्धि युक्तं तव ।
यत्त्वां वृद्धिमवापयन्निह जगत्प्राणोऽपि निस्संशयं
साहाय्यं विदधाति ते तदधुना मर्माणि नः कृन्तति ॥ १४ ॥

अम्भोधिर्हरिदन्तपान्थलहरीमालोऽपि नालोक्यते
सिन्धो काननसंभवेऽविनयतः किं त्वं वृथा वल्गसे ।
जातासि क नु लीयसे क नु कियान् कालोऽथवा स्थीयते
ग्रामाराम पुरालयान् वितनुषे नामावशिष्टान् कुतः ॥ १५ ॥

पौरस्त्यो मरुदभ्युदेति भवता जीमूत सर्वा दिशः
पर्यन्ते वलशासनस्य धनुषा दिग्वारुणी चाङ्किता ।

भ्रातष्षट्पद दुष्प्रवेशमुरगैरुच्चावचैः कण्टकैः
 प्राप्तुं कैतकमीहतस्तव फलं वक्त्रक्षतिः केवला ॥ ५ ॥

रत्नानां प्रभवोऽसि मान्यमहसां धत्से च विश्वम्भरं
 गर्भे विष्टपमातुरप्यसि गुरुस्थानं सुधानामसि ।
दाता जीवनदातुरप्यसि महामेघस्य वारां निधे
 लावण्यं यदि दुस्सहं न भवतस्त्वां कोऽनुकर्तुं क्षमः ॥ ६

द्वित्रैरम्बुकणैर्न चेत् पुनरपि द्वित्रैर्विनैवार्थनां
 लब्धैरन्यत एव तेन किमिदं दग्धोदरं पूर्यते ।
इत्थं चातक कण्टकाण्डविलुठत्प्राणेन यत् प्रार्थ्यते
 जीमूतो भवता निरङ्कुशमिदं मौढ्यं क्व ते कथ्यताम् ॥ ७ ॥

विद्युद्भिर्नयनानि घोरनिनदैश्श्रोत्राणि निर्घाततः
 प्राणांश्चापि हरस्ययत्नमटवीकान्तारशैलाब्धिषु ।
वर्षस्यम्बुद याचितोऽपि मनुभिः प्राचेतसैर्वर्तसे
 कालेऽप्यस्तघृणो यशस्तव तथाप्यन्तं दिशामावृणोत् ॥ ८ ॥

वृष्टीर्वारयसे दृशः कलुषययस्याराममुन्मूलय-
 स्यब्धीन् शोषयसे दिशश्च कुरुषे धूलीभिरुद्धूलितः ।
पश्यामस्त्वयि नोपकारलवमप्यालोचयन्तो वयं
 वायो षष्टिदिनायुषः कथमहो गर्वस्तवोन्मस्तकः ॥ ९ ॥

आरामे पनसाम्रवारणबुसाखर्जूरचन्द्रद्रुम-
 प्राये संस्थितिरिन्द्रनीलमसृणा छायापि साधारणी ।
साकं संचर काक कोकिलकुलैस्संत्यज्य शालीनतां
 न त्वं व्यञ्जयसे गिरं यदि जनो जानाति कस्त्वामिह ॥१०॥

अङ्गारे पुरतः क्षिपन्त्यथ दृढं गृह्णन्ति संदर्शनी-
वक्त्रेणाम्भसि मज्जयन्त्यथ ततो घ्नन्त्यायसैस्साधनैः ।
घर्षन्ति स्म कषोपलेष्वथ तुलां गुञ्जाभिरप्यञ्जसा
यत्त्वां हेम नयन्ति दुस्सहमितः किं पातकं कथ्यताम् ॥ ११

आसारैश्शिशिरीकृता वसुमती वेशन्तशैवालिनी
कासाराब्धिपुरोगमाश्च शतशो निश्शेषमापूरिताः ।
आरामाश्च बहिष्कृताः किसलयैः पुष्पैश्च धाराधर
श्रान्तेऽपि त्वयि कस्य हानिरधुना नष्टाः परं चातकाः ॥ १२॥

किं पुष्णासि मृगान् मृगाधिप दिशन् काले तदीयेप्सितं
किं वा भीतिमपाकरोषि दवतस्तेषामरण्यौकसाम् ।
दर्शंदर्शमिमान्वियोजयसि च प्राणैस्तवैतादृशो
दुर्वारा मृगराजता किल कृता दुर्मेधसा वेधसा ॥ १३ ॥

सञ्जातोऽपि कठोरकीचकवनादन्योन्यसंघर्षत-
स्तत्प्रायं वनमाश्रयाश दहसीत्येतद्धि युक्तं तव ।
यत्त्वां वृद्धिमवापयन्निह जगत्प्राणोऽपि निस्संशयं
साहाय्यं विदधाति ते तदधुना मर्माणि नः कृन्तति ॥ १४ ॥

अम्भोधिर्हरिदन्तपान्थलहरीमालोऽपि नालोक्यते
सिन्धो काननसंभवेऽविनयतः किं त्वं वृथा वल्गसे ।
जातासि क्व नु लीयसे क्व नु कियान् कालोऽथवा स्थीयते
ग्रामाराम पुरालयान् वितनुषे नामावशिष्टान् कुतः ॥ १५ ॥

पौरस्त्यो मरुदभ्युदेति भवता जीमूत सर्वा दिशः
पर्यन्ते वलशासनस्य धनुषा दिग्वारुणी चाङ्किता ।

कामं वर्षसि दुर्दशा च गलितेत्यालोकयंश्चातको
 यावन्निर्वृतिमेति वर्षसि कथं तावाद्धि वर्षोपलैः ॥ १६ ॥

वृष्टिस्सा विरराम पूरयति याऽसाधारणं सारणी-
 वेशन्ताब्धिसरित्सरांस्यहरहर्भानोरुदग्रैः करैः ।
पाथश्शुष्यति संचरन्ति परितो दाशाश्च वैसारिण
 स्थातुं नेह तवोचितं सरसि किं निस्सीमया चिन्तया ॥ १७

सर्वज्ञेन कृतादरोऽसि यदि किं शीतद्युते तावता
 धुत्तूरार्कशरप्रसूनभुजगाः किं तेन नाङ्गीकृताः ।
किञ्चिदूज्ञोऽप्यलमेव ते यदि गुणं गृह्णाति कश्चिज्जनो
 नोचेत् प्राकृतसंगतेस्तव वरं सर्वज्ञतोऽनादरः ॥ १८ ॥

उक्ष्णा यास्यसि किं वृथैव सुलभेऽप्यैरावणे वारणे
 किं हालाहल एव ते रतिरभूत् सत्यां सुधायामपि ।
अर्कैर्हृष्यसि मेदुरे परिमलैस्सत्येव किं कैतके
 सर्वज्ञस्य तवापि कः पशुपते वक्तास्तु मुग्धो जनः ॥ १९ ॥

साकं ते वसतिर्जडैस्सुरभिप्राये जनिः कर्दमे
 सभ्यास्ते मधुपा निसर्गमलिना भूयोऽप्यमी चञ्चलाः ।
इत्थं सत्यपि यत् सरोरुह सतां मान्योऽसि तत् तावकं
 वैदग्ध्यं न हि किन्तु सिन्धुतनयापाङ्गस्य लीलायितम् ॥२०

मन्दमन्दमयं दवो वनभुवं प्राप्तः क्रमादेधते
 तारुण्यं च गतो दहत्यपितरून्माकन्दजम्बूमुखान् ।
भास्वानस्तमुपागतो विगलिता सन्ध्या च सायन्तनी
 तापिञ्छच्छवि चावृणोति भुवनं निश्शेषमन्धंतमः ॥ २१

. . . . . . . . .

. . . . . . . . . . |

दीना चोत्पलिनी चरन्ति बहुशः पाटच्चरास्सर्वतः
प्राप्तुं कीर्तिमयं तमीश समयस्त्वां स्मारये केवलम् ॥ २२

पूर्णं वत्सरमप्युपोष्य भवता दत्तं कणं पाथसः
कीर्णं चण्डसमीरणेन पतितं कृच्छ्रेण चञ्चूपुटे ।
लब्धं किं पिबतु स्वयं गतघृणः किं वा शिशुभ्यो दिश-
त्वेनं चातक एष वारिद वद त्वं दातृचूडामणे ॥ २३ ॥

आयस्यापि वनप्रियं जनकवत् पुष्णासि गर्भप्रभृ-
त्यारादेव निवारयस्यवहितो निश्शेषमस्यापदः ।
ज्ञात्वाप्यन्यममुं विचय्य विरुतैः काक श्रुतीनां सुखै-
श्चञ्चा पीडयसे न मूर्ध्नि यदि च त्वं देवदेवोऽसि नः॥ २४

जातो दैववशेन चन्दनतरुर्वृष्ट्या च संवर्धितः
पान्थानां हृदयङ्गमैः परिमलैस्स्वान्तं समाकर्षति ।
अस्मै किं जलसेकदोहददृढावापाः क्रियन्ते त्वया
काष्ठायैव कथं पुलिन्द दलयस्येनं त्वमामूलतः ॥ २५ ॥

पुष्पाण्यक्षिगतस्य यान्ति भवतः प्रायः परिष्कारतां
गृह्यन्ते न फलानि कैरपि तथा पत्राण्यमत्राय च ।
श्रान्तिं त्याजयितुं नृणां किमथवा च्छाया तवास्त्यन्तत-
स्स्वीचक्रे कथमर्कगुल्म गिरिशस्त्वामीदृशं ब्रूहि नः ॥ २६॥

आकारस्तव सर्वतोऽपि विकृतस्तत्राद्भुता कन्दरा
संचारश्च ततस्तरां ध्वनिरसावन्यादृशश्श्रोत्रयोः ।

दुस्पर्शैश्च सकण्टकैः क्षुपगणैर्भूयो बुभुक्षाक्षति-
स्त्वामुष्ट्र त्रिजगाद्विलक्षणमहो वेधाः कथं निर्ममे ॥ २७ ॥

शक्राय द्विपवाजिकल्पलतिकास्स्पर्धेन वा शम्भवे
रेखा चान्द्रमसी तथा मुरभिदे पद्मालयाकौस्तुभौ ।
देवेभ्यश्च सुधा त्वया जलनिधे दत्ता यदि त्वं विना
क्षोभं मन्दरतो ददासि वचसां पारे तदा ते यशः ॥ २८ ॥

आराद्धुं गिरिशं दलानि तव संगृह्णन्ति माहेश्वरा
भैषज्याय फलानि वैद्यहतका मूलान्यपि प्रायशः ।
शिष्टं काण्डममी हरन्ति माखिनो यूपाय केनेदृशं
माहात्म्यं तनुनाशपर्यवसितं माल्रूर ते कल्पितम् ॥ २९ ॥

क्षुद्रेषु श्ववराहमेषमहिषप्रायेषु सत्त्वेषु या
विक्रान्तिर्मदवारणेन्द्र भवता स्वच्छन्दमाविष्कृता ।
तामुन्मस्तकरोषभीषणमुखव्यादानदुर्दर्शने
पारीन्द्रेऽपि तनोषि चेत् तव तदा पारे गिरां विक्रमः ॥३०

शान्तान्यद्य फलानि पुष्पनिचयः कालेऽप्यभूद्दुर्लभो
लीयन्ते शनकैर्दलान्यपि तथा शुष्यन्त्यमी पल्लवाः ।
त्वत्तो जीवनमीहते तरुरसौ चूतः पयोद द्रुतं
वृष्ट्यैनं त्वमवाथवा परिहराशन्या स्वतन्त्रोह्यसि ॥ ३१ ॥

चूतो योऽध्वगतः फलप्रभृतिभिः पान्थान् सदा सेवते-
यश्चास्ते फलपुष्पपल्लवघनो लीनः क्वचित् कानने ।
संप्राप्ते समये तु पश्य निधनं तुल्यं द्वयोरेनयोः
कीर्तिस्तत्क्षतिरित्यहो द्वयमिदं जानं जगत्यूर्जितम् ॥ ३२ ॥

[1] मन्तस्य पादः प्रस्तावः [2] हारस्सुषावसो इति ।
होवाहाइतिसस्तोभ इडेति च समापनम् ॥ १७८

[1] एकारान्तं पर्वमात्रं दैर्घस्य स्ताव उच्यते ।
उच्येते प्रतिहारौ द्वौ [3] दधन्वाꣳ यस्सुषावसो ॥ १७९

[1] स्तावक्रियापर्वणैव स्थानस्य कथितो (ता) बुधैः ।
[4] होईत्यादि स्तौभिकान्तो प्सुवन्तरेति हारता ॥ १८०

[5] सहोनरस्सत्यमोजः सुवर्ज्योति रेस्थादिदम् ।
द्यौरक्रानिति मुख्यानि कीर्त्यन्ते निधनानि वै ॥ १८१

[6] जयस्य पादप्रस्तावः उत्सो हारो भवेत्तथा ।
[6] (यौधाजयस्य पूर्वोक्ता प्रस्तावाद्यꣳ शकल्पना)
[7] पार्थस्य स्तोभसँय्युक्तः पादभागः पृथक्पृथक् ॥ १८२

दानप्रतिग्रहमन्त्राः.

दासीनिष्करथाश्वाश्रयहस्तियानगवां तथा ।
दुन्दुभीदिव्यवस्त्रा (णि) दि दक्षिणानां तत्क्रमात् ॥ १८३

ऋत्विजः प्रतिगृह्णीयुः तत्तन्मन्त्रैश्श्रुतीरितैः ।
साश्वꣳ रथं दक्षिणार्थं प्रतिगृह्णाति चेत्तदा ॥ १८४

[8] मृज्यादश्वमुखान्य [8] श्वनामयुग्मचतुष्टयम् ।
[9] रथोर्ध्वं स्पर्शे [9] आदित्या वायो श्वर्मं प्रतिग्रहे ॥ १८५

अस्त्र प्रतिग्रहे नक्ष सूर्य लोह प्रतिग्रहे ।
रथेति दक्षिणे चक्रे स्पर्शो वामेत्यधिष्ठितौ ॥ १८६

---

[1] प्रस्ता–सू–७. [2] प्रति–सू–३–३५. [3] प्रति–सू–३–३०. [4] प्रति–सू–११–६. [5] द्रा–श्रौ–२०–८–३२. [6] प्रति–सू–९–१०–द्रा–सू–१८–३–१६ [7] द्रा–श्रौ–२०–२–४–प्रति–६–४. [8] द्रा–श्रौ–५–३–२३—म–ब्रा–१–७–१. [9] द्रा–श्रौ–५–४–१—१३. म–ब्रा–१–७–२—९.

बृहदित्युत्तरे चक्रे चक्रा वङ्क्तेति संस्पृशेत् ।
वैश्वा रथं समारोहेत् गिदेत्यत्र स्थितो जपेत् ॥ १८७

कृशा यच्छेत् सव्यरज्जुं स्पृशे द्वासेति दक्षिणाम् ।
पुरस्तात्सर्वमन्त्राणां [2]देवस्यत्वेत्यमुं जपेत् ॥ १८८

[2]वरुणेत्यादयो मन्त्राः (न्) क्रमात्तत्प्रतिग्रहे ।
[3]अश्वो गौरप्यजः स्वर्णमजावि वसनां गिराः ॥ १८९

उष्ट्रो मृगश्च पुरुषो हस्तिवरा व्रीह्यादयः ।
तिला अश्वतरो मन्त्रं [3]कायेतत्तेऽन्तमेवच ॥ १९०

[4]रश्मिरित्यादय स्स्तोमभागा स्तैरनुमन्त्रणम् ।
कुर्यात्क्रमेण स्तोत्राणां इत्येषा मन्त्र योजना ॥ १९१

### क—वाजपेये पृष्ठस्तोत्राणि.

नाराशंसं भक्षयित्वा पृष्ठहोमं तु पूर्ववत् ।
कृत्वा रथन्तरं देव्यं स्तुवीरन्पूर्ववत्तथा ॥ १९२

### अभीवर्तो ब्रह्मसाम.

[5]अभीवर्तो ब्रह्मसाम तंवोदस्समितीरितः ।
उपधावेप्यभीवर्तं सामोपेति विशिष्यते ॥ १९३

ऋषिः प्रजापतिः प्रोक्तः शिष्टं प्रकृतिवत्स्मृतम् ।

### तत्र प्रस्तावादिकथनम्.

[5]वान्तस्तावो [6]हार इन्द्रंगीर्भि होईति नैधनम् ॥ १९४

कालेयं पूर्ववद्गेयं सर्पतेति च निष्क्रमः ।

---

[1] द्रा—श्रौ—५—३-१४—१५. म—ब्रा—१—८-१—१६. [2] द्रा—श्रौ—५—३—१९. म—ब्रा—१—८—१७. [3] म—ब्रा—१—९—१—द्रा—श्रौ—१५—३—२. [5] प्रस्ता—सू—७. म—ब्रा—१८—६—१४. [6] प्रति—सू—५-२.

तत्र आर्भवः.

आर्भवे तु विशेषोऽस्ति स विशेषोऽभिधीयते ॥ १९५

गायत्रं स्वाशिरामर्को यस्त इत्यृक्षु गीयते ।

सकश्रुध्ये पवस्वेन्द्रमच्छे त्येकर्चकारि(संहि)ते ॥ १९६

पुरोजितीति यज्ञीया न्वीगवे कीर्तिते तृचे ।

तत स्सूर्यवतीष्वृक्षु कावमन्त्यं यथाविधि ॥ १९७

तत्र ऋष्यादि कथनं.

गायत्री कुकुबुष्णिक् चानुष्टुप्जगती तथा ।

अग्निर्वैश्वानरोन्धीगुः प्रजापतिरिति क्रमात् ॥ १९८

ऋषयः कीर्तिताश्चैवं देवता सोम उच्यते ।

वा—आर्भवे प्रस्तावादि कथनं.

(आ)अयामायमिति स्तोभ सहिताः पादभागकाः॥ १९९

यस्तेमदेति मर्कस्य स्यु स्तावोद्गीथ हारकाः ।

उपद्रवस्य स्थाने तु तमेव स्तोभ माहरेत् ॥ २००

ईकारनिधनं ब्रूयुरेव मुत्तरयोरपि ।

पूर्वमेव सकस्योक्तो भागपञ्चकनिर्णयः ॥ २०१

श्रुध्यस्यापीन्द्रमच्छेति स्तावादि विधिरुच्यते ।

वान्तः प्रस्तावभागः स्यात् श्रुध्यस्य परिकीर्तितः॥ २०२

[2]श्रुधीयेत्येव हारः स्यात् सर्वे डानिधनं ततः ।

पुरोजितीति ज्ञीयस्य स्वासुवद्भागकल्पना ॥ २०३

[3]अन्यस्थान निषेधोक्तेः स्तोत्रधर्मो न चेष्यते ।

---

[1]द्रा–श्रौ–१६–३–२३—२८. [2]द्रा–श्रौ–२०–२–४ प्रति–सू–११–९.
[3]प्रति–सू–३–५१. [4]द्रा–श्रौ–६–२–२२.

### वाजपेये अग्निष्टोमस्तोत्रकथनं.

[1]त्वन्नाश्चित्रेति वन्तीयमग्निष्टोम सामवै ॥ २०४
ऋषिरिन्द्रो देवताऽग्निः [2]बृहती ककुबुत्तरा ।
वारवन्तीय साम्नोऽस्य पर्वणा स्तावकल्पना ॥ २०५
प्रतीहारस्य देशे तु विकल्पोऽस्ति स उच्यते ।
विदागाधन्तुचेतू इत्यक्षरेषु विकल्प्यते ॥ २०६
[3]चतुरक्षरहारो वा [4]हारस्सप्ताक्षरोऽपि वा ।

### वाजपेये उक्थ्य स्तोत्राणि.

अनन्तरꣳ [5]साकमश्वꣳ [6]सौभरश्चापि पूर्ववत् ॥ २०७

### तृतीयोक्थ्ये विशेषः.

[7]उद्वशीयं तु तृतीयोक्थ्यं साम तस्यापि निर्णयः ।
छन्दः प्रभृतयोऽनुष्टुप् उद्वꣳश(स्यो) स्येन्द्र उच्यते ॥ २०८

### तत्र प्रस्तावादिकथनं.

वꣳशीयस्याङ्क्रिकस्तावो हारः स्या[8]त्पर्वे पञ्चमम् ।
उबित्यत्रेडिति कुर्यात् हाईति निधनं ततः ॥ २०९

### वाजपेये षोडशी.

पूर्ववत्षोडशिस्तोत्र मुद्वꣳशीयादनन्तरम् ।
भक्षणन्निष्क्रमश्चाऽपि प्रवेशोपहवादिकम् ॥ २१०

---

[1]म-ब्रा-१८-६-१६ [2]पु-सू-९-१-२२. प्रति-३-८-१०. द्रा-श्रौ-१९-४-७. [3]द्रा-श्रौ-२२-१-८-१२. [4]म-ब्रा-१८-६-१७. द्रा-श्रौ-२२-१-१८. [5]प्रति-सू-६-११-द्रा-श्रौ-१९-३-१३. [6]म-ब्रा-१८-७-२५. [7]नि-सू-१-९. [8]द्रा-श्रौ-५-३-५.

वाजपेय सामकथनम्.

[1] शिपिविष्टवतीष्वृक्षु बृहत्सामाथ वैष्णवम् ।
अत्रापि स्वासुवत्कार्यो भागपञ्चकनिर्णयः ॥ २११

तत्र विशेषः.

अत्राप्युपद्रवे वृद्धँ षोडशस्वेव शङ्कुषु ।
द्वितीयमक्षरं प्रोक्तं [2]ह्रस्वँस्यात्षोडशेतरे ॥ २१२

अतिरात्रनिरूपणं.

अतिरात्रे [3] षोडशिग्रहो (हं) विकल्पेन विधीयेत ।
षोडश्यन्ते [4]समस्तेन पर्यायादि त्रयं तथा ॥ २१३
सन्धौ च सन्धिसाम्नां च [5]सपराचीति विष्टुतिः ।
पृथक्तृचेभ्यो हिङ्कार [6]स्तिरोह्नस्येति च क्र(तू)तौ ॥

अतिरात्रे बहिष्पवमानम्.

पवस्व वाचो दविद्यु पवमानस्यतेकवे ।
बहिष्पवमानमिति [7] तृवृत्स्तोमश्च कीर्तितः ॥ २१५

तत्राज्यानि.

अग्निन्दूतं मित्रंवयमिन्द्रमिद्गाथिनो बृहत् ।
इन्द्रे अग्नानम इति आज्यानां स्तुतिरिष्यते ॥ २१६

अतिरात्रे माध्यन्दिनः.

माध्यन्दिने पवमाने विशेषः कथ्यतेऽधुना ।
गायत्रमामहीयवं रौरवं जयमौशनं ॥ २१७

---

[1] म–ब्रा–१८–७–२५. [2] नि–सू–२–९. [3] द्रा–श्रौ –२६–४–११—ला–श्रौ–६–५–२३—द्रा–श्रौ–१८–१–१. [4] द्रा–श्रौ–५–३–५. [5] म–ब्रा–२–२–१. द्रा–श्रौ–६–३–१८. [7] म-ब्रा–२०–१–१.

पृष्ठे विशेषः.

बृहच्छयैतेऽत्र पृष्ठे स्तः सर्वमन्यद्यथा पुरा ।
उक्थ्यानि च यथोक्थ्ये स्युः षोडश्यपि यथापुरा ॥ २१८

रात्रिपर्यायाः.
तत्र प्रथमः.

[1] पान्तमा प्रवइन्द्रा वयमुत्वेन्द्रायमद्वने ।
वैतहव्यं च शाक्त्यं च काण्वं कक्षमित्यपि ॥ २१९
पर्यायः प्रथमः प्रोक्तः [1] द्वितीयो वक्ष्यतेऽधुना ।

द्वितीयः.

अयन्तइन्द्र दासं च पारमातून इत्यपि ॥ २२०
अभित्वेत्यार्षभं चैव इदंव गारमेव च ।

तृतीयः.

[2] पर्याये तृतीयेऽदंघृतश्चुन्निधनमेव च ॥ २२१
दैवातिथमात्वेतानि योगेयोगेतवस्तरम् ।
सैमेधं कौत्समिन्द्र पर्याया रात्रिपूर्विकाः ॥ २२२

सन्धिस्तोत्रम्.

[3] एना प्रत्यु इमाउवेति तृवृत्सान्धि प्रकीर्तितम् ।

सर्वस्तोम सर्वपृष्ठाप्तोर्यामः.
तत्र बहिष्पवमानं

पवस्ववाचो दविद्यु पवमानस्य तेकवे ।
बहिष्पवमानमित्येवं [4] तृवृत्स्तोमश्च कीर्तितः ॥ २२३

---

[1] म-ब्रा-९-१-३. [2] म-ब्रा-२०-१-१. [3] म-ब्रा-९-१-२८—२०-१-४. [4] म-ब्रा--२०-३-१.

तत्र सगर्भाज्यानि.

[1] गर्भवन्ति चाज्यानि स्तोमः [2] पञ्चदश स्मृतः ।

तत्र गर्भाणि.

अग्निन्दूतमानोमित्रा इन्द्रमिद्गाथिनोबृहत् ॥ २२४
इन्द्राग्नी आगतं चैव एषां गर्भाः क्रमेण हि ।

गर्भाः.

[3] सुषमिद्धोनआवह तानश्शक्तंपार्थिवस्य ॥ २२५
युञ्जन्तिब्रध्नमिति तमीडिष्वायोआर्चिषा ।
[3] चतुर्दृचेऽन्त्यस्य उद्धारः कार्य एव हि ॥ २२६

तत्र माध्यन्दिनः.

माध्यन्दिनः पवमानश्च वाजपेयवदिष्यते ।

माध्यन्दिने विशेषः.

ऋष्यादयः तथैव स्युः विशेषस्तत्र कथ्यते ॥ २२७
[4] देवस्थानमपोह्यात्र तासु गेयं [3] रथन्तरम् ।

रथन्तरगानकाले विशेषः.

[5] रथन्तरे पावमाने बहिर्वेदेरनन्तरम् ॥ २२८
वहेयुस्सन्ततं रथं अन्ये स्तोत्रसमाप्तितः ।

पृष्ठस्तोत्रे गर्भिण्यः.

[5] बृहच्च वामदेव्यश्च श्यैतं कालेयमेव च ॥ २२९

---

[1] द्रा-श्रौ-२६-४-९. [2] म-ब्रा-२०-३-१. [3] म-ब्रा-१६-५-२२-द्रा-श्रौ-१६-४-१४-१५. [4] कल्पसू. [5] द्रा-श्रौ-सू-९-१-१. पृष्ठ-स्तोत्राणां धर्मविशेषाः पद्दिकायां विशदीकृताः.

[1] गर्भवन्तीनि च [4] पृष्ठानि एषां गर्भाः क्रमेण हि ।

तत्र गर्भाः.

[1] वैराजं च शक्वर्यश्च वैरूपं रेवत्यश्च वै ॥ २३

तत्र स्तोमकथन.

[2] एकविंशश्चतुर्विंशश्चतुश्चत्वारिंशश्च वै ।
कार्या अष्टाचत्वारिंशस्स्तोम एषां क्रमेण च ॥ २३

तत्र आर्भवः.

परिस्वानो गायत्रं संहितं रूपमेव च ।
पवस्वेन्द्र सफ श्रुध्ये पुरोजिती श्यावान्धीगवे ॥ २३

परिप्रध सौहविषं कावं सूर्यवतीषु च ।
इत्यार्भवः पवमान स्स्तोमश्च [3] त्रिणवस्स्मृतः ॥ २३

तत्र अग्निष्टोम गानं.

[4] यज्ञायज्ञीयमग्निष्टोम गानश्च गर्भवाद्धि तत् ।

तत्र गर्भः.

गर्भो बृहत्वमग्ने स्तोम [2] स्त्रयस्त्रिंश एव हि ॥ २३

मतभेदः.

[5] क्रत्वन्तरे चाप्तोर्यामे गर्भं नेच्छति सूत्रकृत् ।

उक्थ्ये गर्भविषये मतभेदः.

उक्थ्यानि च सगर्भाणि [1]केचिदाहुर्मनीषिणः ॥ २३५
[2]केचिन्नात्र गर्भमाहुः यदि [2]गर्भो भवेत्तदा ।

गर्भपक्षे गर्भाः

गूर्दो भद्रमुद्व॑शश्च तेषां गर्भाः क्रमेण हि ॥ २३६

तत्र स्तोमकथनं.

[3]त्रिणवैकविं॑शसप्तदशस्तोमाः क्रमेण वै ।

तत्र षोडशी.

षोडश्यपि यथापूर्व मेकवि॑शो भवेत्तथा ॥ २३७
पर्यायाश्च यथापूर्वं विशेषस्तत्र कथ्यते ।

पर्याये विशेषः.

[4]पन्यम्पन्य॑ श्रौतकक्षं दैवोदासं तु पूर्ववत् ॥ २३८
कौत्सस्य स्थाने चात्वाविशन्त्विति द॑ष्ट्रकम् ।
हेतुश्चात्राऽहीनपाठः शेष॑ रात्रिवद्भवेत् ॥ २३९

तत्र संधिस्तोत्रं.

सन्धिस्तोत्रश्च यथापूर्वं [3]तृवृत्स्तोमश्च इष्यते ।

तत्र अतिरिक्तस्तोत्राणि.

[5]स्तोत्राणिचातिरिक्तानि [5]क्लृप्तानि ब्राह्मणेन वै ॥ २४०

---

[1]द्रा–श्रौ–२६–४–९. ला–श्रौ–६–५–२१. [2]द्रा–श्रौ–२६–४–१०. ला–श्रौ–६–५–२२. [3]म–ब्रा–२०–३–१. [4]द्रा–श्रौ–२५–५–७. [2]म–ब्रा–१३–१२–४–९. [5]द्रा–श्रौ–७–१–२९.

तत्र भक्षणे विशेषः.

[1]त्रिवृज्जराबोधीयं च [2]भक्षो गायत्र छन्दसा ।

तत्र विष्टुतिः.

विष्टुतिः कथिता तत्र वर्तनी परिपूर्विका ॥ २४१

[3]सत्रासाहीयं द्वितीयं स्तोमः [1]पञ्चदशस्स्मृतः ।

मार्गीयवं तृतीयं च स्तोमः [1]पञ्चदशः स्मृतः ॥ २४२

तुरीयं वैष्णवं वारवन्तीयमेकविंशकं ।

सर्वस्तोम प्रकारकथनं.

[3]त्रिवृत् बहिस्तुतिश्चैव आज्यानि दश पञ्च च ॥ २४३

माध्यन्दिने सप्तदश स्तोमसंख्या प्रकीर्तिता ।

होतुः पृष्ठंचैकाविंशं छन्दोमा इतराणि वै ॥ २४४

आर्भव स्त्रिणवः स्त्रयस्त्रिंशोग्निष्टोम इष्यते ।

विपरीतक्रमोक्थानि त्रिणवं प्रथमं तथा ॥ २४५

एकविंशं द्वितीयंस्या त्साप्तदश्यं तृतीयकं ।

षोडशी चैकविंशस्यात् रात्रि स्सप्तदश स्मृता ॥ २४६

त्रिवृत्संधि स्तथाऽतिरिक्तस्तोत्रं प्रथममेव हि ।

पांचदश्यं द्वितीयं च साप्तदश्यं तृतीयकं ॥ २४७

एकविंशं तुरीयं च त्रयास्त्रिंशमितीरितं ।

सर्वस्तोमप्रकारोयं श्रुत्युक्तो विशदीकृतः ॥ २४८

इति पुन्नागपुराभिजनपूज्य रामस्वामिदीक्षितपुत्रेण नारायणस्वामिदीक्षितेन प्रकाशिता **श्रौतप्रकाशिका** समाप्ता.

---

[1] द्रा-श्रौ-२६-४-१०—ला-श्रौ-६-५-२२—म-ब्रा-१६-१२-४—
[2] द्रा-श्रौ-७-१-२९. [3] म-ब्रा-२०-३-२. [3] म-ब्रा-२०-३-१-२.

असंख्याका वसन्त्यत्र नगरे ब्राह्मणोत्तमाः ।
वेदशास्त्रपराः पुण्यशीलाः सन्मार्गचारिणः ॥ २१ ॥

राजमान्या स्थिरा काचित् पाठशाला भवेद्यदि ।
तदा संस्कृतविद्याया वृद्धिर्भवति नान्यथा ॥ २२ ॥

निशम्य प्रार्थनां तस्य प्रसादाभिमुखोऽभवत् ।
मन्त्री मन्त्रविदां श्रेष्ठस्तद्यत्ने संमतिं दधौ ॥ २३ ॥

अत्रान्तरे राजधानीस्था भूसुरवराः पण्डिताग्रेसराः तादृशीमेव प्रार्थनां कृत्वा क्षिप्रमेव राजधान्यां संस्कृतमहापाठशालाप्रतिष्ठायां बद्धोद्यमा अभूवन् ॥

फलतिहि वाञ्छाविटपी
कृषितः सद्बीजसंस्कृतः सुजनैः ।
आदरघनजलसिक्तः
स्वार्थ्यानिलेन न हतश्चेत् ॥ २४ ॥

तथैव तस्यैव वासुदेवशास्त्रिमहाशयस्य, संस्कृतविद्याभिवृद्धौ बद्धादरस्य, अध्यवसायतः श्रीमतः शेषाद्रिनाममन्त्रिवरेण्यस्य कृपया श्रीश्रीनिवासाचार्यसुधीमणेः अत्युत्साहोद्यमेन च, काचित्पाठशाला कल्याणपुर्यां प्रतिष्ठापिता सती, काले मठाधिपतिपौरकार्यनिर्वाहकसभादिकृतसदवलम्बनद्वारा महापाठशाला स्थितिमापन्ना वेदशास्त्रपाठप्रचारपरा रराज । तत्काल एव अस्मिन् देशे तत्रतत्र प्रतिष्ठितासु बालिकापाठशालासु च संस्कृतविद्या देशविद्यया साकं समभिवर्धिता । आंग्लेयविद्याशालासु च, संस्कृतविद्या राजविद्योपस्कृता सती सर्वजनादृता समजनि कुत्रचित् राजकीयसहायद्रव्याभिवर्धितसंस्कृतपाठशालासु, विद्याभ्यासः सम्यक्प्रचालितः । एवंरीत्या, श्रीचामराजेन्द्रभूपालकस्य, राज्यशासनकाले सर्वत्र संस्कृतविद्यायाः प्रचारोऽभूदिति गीर्वाण-

वाण्या अयमेव नवावतारकालः इति निर्धार्यते । त्रिंशद्वर्षात्प्राक् एवंभूतां संस्कृतविद्यास्थितिं निरूप्य, तस्याः नवावतारकालं सूचयित्वा, इदानीं त्रिंशद्वर्षोदन्तः संग्रहेणारभ्यते । पूर्वदशाज्ञानाभावे, तदनन्तरीयाभिवृद्धेर्निर्धरोदुस्तर इति पूर्वपीठिका विरचिता ॥

विजये विजयाकांक्षा सर्वत्र समजायत ।
अस्याः शिशोस्तथैवासीद्विजयः पुष्टिदायकः ॥ २५ ॥
कृष्णो राजा पिता तस्याः, माता कर्णाटकाश्यपी ।
तयोर्हस्तपरामर्शादभूत्पोषो महान् तदा ॥ २६ ॥

विद्वत्परीक्षा विजयेन दीप्ता
विद्यार्थिनो पञ्चदशात्रवर्षे ।
वेदेषु शास्त्रेषु निरङ्कुशा धी-
र्येषां हि ते राजसभाजनार्हाः ॥ २७ ॥

शिशोर्द्वितीये जयहायने सा
पुपोष लक्ष्मीर्जयनामदीप्ता ।
एका(वि)क्षरहा[1]सवशात्तदब्दे
पूर्वात् [2] द्वि(२)लोपो हि परीक्षितेषु ॥ २८ ॥

दिव्यं रूपं शिशोर्जातं मन्मथाब्दे महोदये ।
विद्यारतिः प्रसन्नाभूद्विद्वन्मनसि नित्यशः ॥ २९ ॥

विद्वत्परीक्षा फलिता तदानी
मष्टादशप्राज्ञजयेन नूनं ।
अस्मिन् शिशोर्वत्सरके तृतीये
विद्याभिमाने जनतानुरक्ता ॥ ३० ॥

---

[1] विजय=वि–जय. [2] (१५-२=१३.)

राजधान्यामेवंसत्यां विद्याभिवृद्धिपरिपाट्यां कल्याणनगरे च विद्याभिवृद्धिरेवमासीत् ॥

ऋग्वेदाध्ययने सुधर्मिणिगणः संसक्तचित्तोऽभवत्
विद्वद्वृन्दमलं शिवंकरयजुर्वेदे परं सादरम् ।
तत्पातञ्जलियोगशास्त्रमभवत्संमानितं कोविदैः
वेदान्ताध्ययनं तदा त्रिमतगं विद्योतते स्म प्रियम् ॥ ३१ ॥

तर्कव्याकरणे तथास्मृतिकृतिः साहित्यशाखाश्रिताः
प्राप्याशु स्थिरतां समुन्नतिमगुर्मोदावहां भूतिदाम् ।
दिग्भ्यः शिष्यपरम्पराद्विगुणिता प्रत्यब्दमत्यादरात्
विद्याभ्यासमतन्वतेति सुकथां को वा न जानात्यलम् ॥३२

अत एव—

दुर्मुखा सुमुखा जातेत्येनं सूचयितुं किल ।
दुर्मुख्यब्देऽपि गीर्वाणविद्याभ्यासे जना रताः ॥ ३३ ॥

तस्मात्—

विंशतिसंख्यावन्तो वेदे शास्त्रे परीक्षिताः सफलाः ।
विबुधा बभूवुरस्मिन् वर्षे मन एव कारणं विजये ॥ ३४ ॥

माविळम्बो हेविळम्बिन् विद्याभ्यासं प्रसर्पितुं ।
इति चोदनया राज्ञो हेविळम्बी सुवत्सरः ॥ ३५ ॥

गीर्वाणवाणीशिशुपञ्चमाब्दे
विद्याप्रचारो बहुळो बभूव ।
कल्याणपुर्यामिव राजधान्या-
मन्यासु शालासु सुपोषितासु ॥ ३६ ॥

इत्थं सरसा वाण्याः पञ्चाब्दीया विलासगतिरासीत् ।
संप्रति षष्ठाद्वर्षाद्दशमाब्दावधि कृतोऽस्ति वृत्तान्तः ॥ ३७ ॥

बिलम्बिनि विकासो विकारिणि विषाद-
स्सुशार्वरिकृताभूद्विपत्ततिरवाच्या ।
प्लवे कृतविलासस्तथा शुभकृदीच्छा
जनेष्विव दशासीच्छिशोरिति विवेकः ॥ ३८ ॥

तस्मिन् वर्षपञ्चके—

महामारीवेधा जनपदगता दुःखबहुळा
विकार्यब्दे जाता मनसि च शिशोः शान्तिनिहतिः ।
क्व वा विद्याभ्यासः क्व सुपथगतिः संस्कृतगिरां
तदा गुप्तं सर्वं विफलगतितो विस्मयकरम् ॥ ३९ ॥

तदानीं खलु—

पितापि न पिता माता न माता न सुतः सुतः ।
भार्या न भार्या न पतिः पतिरासीत्तदा भयात् ॥ ४० ॥

विद्याशाला प्रविरतिवशाच्छिष्यसान्निध्यहानात्
विद्याभ्यासो निहतविभवः शोचनीयस्तदाभूत् ।
प्राणान् रक्षन्नभिनवशिशुः सप्तमे हायनेऽस्मिन्
राहुग्रस्ता रविरिव भयात् कुत्रचिज्जीवति स्म ॥ ४१ ॥

विपदिव विपदः पापाच्छार्वरिवर्षो विकारिमनुयातः ।
विप्लवकृत्तं दैवादनुबद्धोभूदशान्तशोकौघः ॥ ४२ ॥

राजधानीं महामारी क्रूरदृष्ट्या ददर्श हा ।
जनाः सहस्रशो नित्यं प्राणान् शोकाद्धि तत्यजुः ॥ ४३ ॥

तद्वत्सरे संस्कृतमहापाठशालायां विद्याभ्यासः सम्यङ् न प्रचलितः, विद्वत्परीक्षापि न प्रचलितेत्यस्मदभिनवावतीर्णस्य गीर्वाणवाणीशिशोर्भागधेयं भृशं शोचनीयमित्यलम् ॥

प्लवे सा प्लवमालम्ब्य निःसारं मरुता हृता।
शुभकृद्वत्सरे पारं कथमप्यायया पुनः ॥ ४४ ॥

दुःखं न नित्यं न सुखं च नित्यं
जातस्य जन्तोः भवतीह दैवात्।
वाणीशिशो स्तस्य तथैव दुःखात्
सुखस्य कालः समपद्यताशु ॥ ४५ ॥

शरत्किं शोभाकृत् सपदिविदितः शोभकृदिति
श्रुतो ह्रस्वाद्दीर्घो भवति विपरीतः कथमहो।
गिरां देव्यास्तस्मिन् गळितशिशुता प्रादुरभवत्
तनौ दिव्या शोभा दशमवयसा दृष्टिसुखदा ॥ ४६ ॥

तथाहि—

सा हि बालवाणी, विळम्बिवर्षे स्वसञ्चारेण विळम्बिता, विकारि वत्सरे शरीरेण विकारिता, शार्वरिशरदि मनसातीव दुःखिता, प्लवाब्दे सुखेन सञ्चारयोग्यं प्लवमारूढा, शुभकृद्वर्षे दिष्ट्या दुःखाम्बुधिं तीर्त्वा, सुखसन्तोषपारं प्राप्त्वा, शोभकृद्वत्सरे परां शान्तिमवाप। तद्वत्सरे हि विद्वत्परीक्षायाम्—

समुत्तीर्णा हि विद्वांसः पञ्चाधिकदशोत्तराः।
मोदः श्रीकृष्णभूपस्य प्रादुर्भूतो महान् तदा ॥ ४७ ॥

जातमुदस्तस्य विभोः कृपया विदुषां समादरो जज्ञे।
तुष्टे राजनि कष्टं नष्टं भवति हि सतामेवम् ॥ ४८ ॥

सा हि अभिनवगीर्वाणवाणीदेवता अष्टमवर्षीयकन्यकावस्थां समुत्तीर्य, नवमवर्षरोहिणीदशां चातिक्रम्य, दशमवर्षीयगौरीदशायां त्रिभुवनविधातुः परिग्रहेण, पाणिग्रहोत्सवं लब्ध्वा, नववधूरिव नवनवोन्मिषल्लावण्यशोभा हैरण्यगर्भीयशक्तिबीजद्वारा सर्वविद्या-

शक्तिगर्भा गर्भिणीव नटतन्त्री, तत्र तत्र सुधामणिकृताभिरिष्ट-
दोहदसपर्याभिरभिनन्दिता रराज ॥

यथा—एकः,

वधूमेनां कश्चित्स्तुतिगतिपरैर्गायकवरै-
स्सह श्राव्यैर्गानैः सरिगमपधन्यादिगमकैः ।
स्वरैरुच्चैर्नीचैर्लसितकरणै रागनिचयैः
मुदाऽऽनर्च प्रेम्णा गुणकथनकैः कीर्तनपदैः ॥ ४९ ॥

अन्यः—

हरिद्रा[1]चूर्णैस्तां दशशत (१०००) पदैः कुङ्कमकणै
स्सुपुष्पैर्लक्ष्मीगीर्ललितललितानामनिचयैः ।
सुवाण्या गैर्वाण्या कलितविभवोऽपूजयदलं
प्रफुल्लां देवीं तां सुमुखवरदां भक्तिवशतः ॥ ५० ॥

अपरः—

जपैर्ध्यानै रेनामसकृदवशं क्षोभविकलं
मनो निग्राह्यान्यो यमनियमतो ह्यासनगतः ।
तथा यामप्रत्याहृतिगतिवशात्प्राणमरुतः
समाधिस्थः साक्षात्कृतविभवरूपामकलयत् ॥ ५१ ॥

इतरः—

अलङ्कारै स्तर्कै रमलसुपदै र्व्याकरणजै-
स्सुमीमांसावादैः सममुपनिषत्तत्त्वनिचयैः ।
तथा काव्यैः श्राव्यैर्नवरसयुतै र्नाटकगणै-
र्वचोदेवीमेनां सुकृतिमकरोदाशु सुकृती ॥ ५२ ॥

अनन्तरमस्याः शक्तिप्रभावेन शतशः सहस्रशः तनूजास्तनुजाश्च
काले काले आविरभूवन् । ता एव संस्कृताभिज्ञा नारीशिरोमणयः

[1] लक्ष्मीसरस्वतीललितासहस्रनामावळीभिः.

ा एव वेदशास्त्रकोविदाः पण्डितरत्न, विद्यानिधि, कविरत्न, राजकविभूषणेत्याद्युपाधिपरिशोभिताः पण्डिताः, तथैव संस्कृतविद्याप्रभावेन, बि.ए. एम्.ए. इत्याद्युपाध्यलङ्कृताः विद्वांसोऽपि। अथ सा गीर्वाणवाणीदेवता सर्वेषां साधूनां सर्वदा सुप्रसन्नाभूत् ॥

क्रोधोऽस्याः क्रोधिनाम्न्यां शरदि समभवत्तेषु पापेषु मात्रं
येषां गीर्वाणभाषा खरविषसदृशा नीरसा निर्गुणाऽऽसीत्।
प्रीतिस्तेष्वेव विश्वावसुशरदि तथा तद्गुचिर्येषु दृष्टा
रागद्वेषौ हि लोके सुहृदसुहृदिति स्वेष्टहेतुप्रयुक्तौ ॥ ५३ ॥

तथैव—

वर्षः पराभवस्तेषा मन्वर्थोऽभूत्पराङ्मुखाः।
विद्याभ्यासेऽत्र येऽभूवन्नलसा दुष्टबुद्धयः ॥ ५४ ॥

परन्तु विद्यावतामस्मिन्वर्षेऽपि विजयाभ्युदय एव। अत एव राजधान्या मस्मिन्वर्षे प्रचलितायां विद्वत्परीक्षायां वेद, वेदान्त, तर्क, व्याकरण, ज्योतिष, साहित्यादिशास्त्रेषु द्वाविंशतिविद्यार्थिनः समुत्तीर्णाः पण्डिता अभवन् ॥

वर्षे प्लवङ्गे सुखलीलयालं
प्लवङ्गवत् शास्त्रसमुद्रजालम्।
संप्लुत्य पारं भुवि तस्थिरे ते
विद्यानुरक्ताः सफलप्रयत्नाः ॥ ५५ ॥

तेषु पञ्चदशसंख्याका एव विद्यार्थिनः नवीनाःपण्डिता जाताः—

कीलके कीलिता दृष्टिः सरस्वत्याः सदादरात्।
विद्याभिवृद्धिकार्येऽस्मिन् विद्वज्जनपरिश्रमात् ॥ ५६ ॥

तदानी मभिनवावतारभूता, संस्कृतवाग्देवता, षोडशवर्षालंकृता, उदितयौवना मुग्धेव सर्वाङ्गसौष्ठवेनातिमुग्धा प्रचकाशे।

अस्याः आषोडशवर्षादाविंशवर्षं यद्वृत्तान्त आसीत् तस्यविचार संक्षेपेण यथा—

सौम्ये वर्षे सौम्या वाणी
सर्वत्रास्मिन् देशेऽचालीत् ।
विद्याभ्यासो भूयान् जातो
यत्नाद्राज्ञामाज्ञायत्ता ॥ ५७ ॥

तथाहि वाग्देवता विद्युत्तुल्यां विदुषां प्रतिभां संवीक्ष्य,
विद्युन्मालां विद्वन्मालां हस्ते कृत्वा चिक्षेपैषा ।
अभ्रं [1]लध्वी भूमिं गु[2]र्वीं प्राप्तातत्त्वं [3]तत्त्वाद्व्यक्तम् ॥ '१८ ॥
वर्षे साधारणे ज्ञेया वाणीसंपद्विशेषतः ।
असाधारणभूतेति मेनिरे सर्वतोजनाः ॥ ५९ ॥

चित्रमेतत्—

संस्कृतविद्याभ्यासो देशेऽभूदन्यविद्यया साकम् ।
यस्मिन्वर्षे सोऽयं कथमत्र विरोधिकृद्विदितः ॥ ६० ॥

परीधाविवत्सरे तु अनवरतश्रीशारदाराधनपरः, जगद्गुरुवर श्रीशृङ्गगिरिपीठाधिपयतिवरः, ब्रह्मभूयंगत इति वाग्देवताया

---

[1–2] अभ्रापेक्षया पृथिवी गुरुतरा पृथिव्यपेक्षया अभ्रं लघुतर अत एव ऊर्ध्व विक्षिप्ताः गुरुतराः पाषाणादिपदार्थाः भूम्यामेव पतन्ति धूमादिलघुतर पदार्था ऊर्ध्वं गच्छन्ति । विद्युन्माला लघुत्वगुणविशिष्टा तेजस्त्वात्, धूमवत् विद्वन्माल गुरुत्वगुणविशिष्टा पार्थिवत्वात् पाषाणादिवत्, इति शास्त्रीया विवक्षा तेजोरूपे भ्यो देवताविशेषेभ्योऽपि विद्वज्जाना: विद्याबलाधिकतेजोवन्तः अधिकगौरवार्हाश्च अभवन्निति भावः ॥

[3] तत्त्वात्–तस्य भावः तत्त्वं (गुरोर्भावः गुरुत्वं लघोर्भावः लघुत्वं). तत्त्वात्— पृथिवी गुर्वी । अभ्रं लघु इति ज्ञानात् तत्वं—निश्चयः; व्यक्तम् (भवति) स्फुटो भवतीत्याशयः ॥

एकदा दुःखस्य सुखस्य चाविर्भावोऽभूदिति मतिमतां विवे तथापि राजधान्यां विद्वत्परीक्षायां त्रिंशच्छात्राः सफलमनोरथा अभूवन्निति संस्कृतविद्योन्नतेः सूचना ॥

प्रमादीचवर्षे प्रमोदो जनानां
सुविद्याविशेषैः सदा शोभितानाम् ।
अधीताश्च वेदाः प्रयोगप्रकारा
ह्यधीतानि शास्त्राण्यनन्तानि शिष्यैः ॥ ६१ ॥

अस्मिन् देशे तत्रतत्र स्थितासु संस्कृतशालासु संस्कृतवाणी-प्रचारः किञ्चित् कुण्ठितोऽपि कल्याणपुरीसंस्कृतमहापाठशालायां राजधानीसंस्कृतमहापाठशालायां च, तस्याः प्रचारो निरर्गळो-जातः । अत एव—

आनन्दोऽन्वर्थसंज्ञोऽभवदिति सुजनाह्यूचिरे वत्सरस्य
विद्याशाला हि यस्मिन् विविधगुणयुता विश्वविद्यानवद्याः ।
विद्याशालासु नित्यं पटुवटुजनता वाग्विचारेऽतिदक्षा
वादान् कुर्वत्यमोघान् चतुरमतिकृतान् प्रीतियुक्ता बभासे ॥

राक्षसे राक्षसा[1] जाता वर्षे विद्याविरोधिनः ।
सुजना राक्षसान्[2] हत्वा हृदि मोदं प्रपेदिरे ॥ ६३ ॥

जनाः सत्यरताः सर्वे नळवन्नळवत्सरे ।
विद्यया विनयोत्पत्ति स्तस्या स्सत्यं स्वभावजम् ॥ ६४ ॥

अस्मिन्वत्सरे विद्याप्रभावप्रभायुक्तसूर्योदयेन वाणीमुखपङ्कजं प्रभूतं विकसितमासीत् ॥

यतः—

श्रीशृङ्गगिर्याख्यपुरे यदाभूत्
कुम्भाभिषेकः स्तुतशारदायाः ।

---

[1] दुर्गुणदुःशीलयुक्ता राक्षससदृशाः. [2] कामक्रोधादीन् जित्वा.

विद्वज्जनास्तत्र मुदा मिलित्वा
विद्याविनोदेन ननन्दुरेवम् ॥ ६५ ॥

[1] किं ब्रह्म? सर्वं बहुधा कथं तत्?
स्वमायया केय? मभेदशक्तिः ।
द्वैतं तवेष्टं? न तथा किमन्य?
दध्यासयोगात्सकलं विवर्तते ॥ ६६ ॥

[2] नारायणो यश्चिदचिद्विशिष्टो
ब्रह्मैव नान्यः स च कारणात्मा ।
कार्यात्मकोऽयं परिणामगत्या
जगत्स्वरूपः स हि भक्तिगम्यः ॥ ६७ ॥

[3] ब्रह्मैव विष्णुः सहि सर्वशक्तो
जीवास्तु भिन्ना विदिता स्तथाज्ञाः ।
जडप्रकृत्या जगदुद्भवः स्या-
दीशस्तु तस्यास्ति निमित्तहेतुः ॥ ६८ ॥

[4] ईशा हि कर्ता परमाणवस्ते
स्वनिष्ठशक्त्या द्व्यणुकादिरीत्या ।
जगत्पादार्थाः परिणाममात्राः
दुःखस्य हानिः खलुतद्विवेकात् ॥ ६९ ॥

[5] संस्काररूपः प्रतिवर्णजन्यः
स्फोटः पदार्थस्फुरणाय हेतुः ।
स्फोटात्मकं ब्रह्म तदीयबोधात्
ब्रह्मत्वसिद्धिः सुखरूपमुक्तिः ॥ ७० ॥

[1] ज्ञात्वात्मबन्धं गुणवृत्ति हेतुं
यमादियोगेन समाधिनिष्ठः ।
कैवल्यभावं प्रतिपद्य योगी
नैर्मल्यतत्वं रमते हि नित्यम् ॥ ७१ ॥

[2] प्रधानमन्धं पुरुषस्तु पङ्गु-
स्तद्योगजातं हि पदार्थजातम् ।
तयोर्विवेकेन सुखेन मुक्तिः
दुःखस्य हानिस्त्रिविधस्य जन्तोः ॥ ७२ ॥

[3] शब्दोह्यनादिः श्रुतयः प्रमाणम्
कर्मैव नित्यं श्रुतिचोदनात्तम् ।
सत्कर्मजाता भवति ह्यपूर्वा
सत्यं सुखं तत्फलमात्मनः स्यात् ॥ ७३ ॥

सहृदयहृदयानन्दकारिणि वस्तुनि—
[4] नोत्प्रेक्षा न विरोधो
नातिशयोक्ति विभावना न स्यात् ।
उपमा नैव निदर्शो
नवरसमूर्धा स शान्ति [5] रसएव ॥ ७४ ॥

तथैवास्मिन् देशे यदुगिरिपरकालव्यासराय राघवेन्द्र मठादिषु च, एवमेवविचारे पुनः पुनः प्रचलिते, वाणीमुखविलासः काले काले पदेपदे जरीजृम्भते स्म ॥

---

1 योगी. 2 कापिलः. 3 मीमांसकः. 4 आलंकारः. 5 नित्यानन्दस्वरूपः "रसोवैसः" इति श्रुतेः, नित्यानंदस्य शान्तिरसस्य च जन्यजनकभावः परिणामोवा अभेदाध्यवसायोवा अत्राङ्गीक्रियते "रसगॅंल्लब्ध्वा नन्दी भवति" इति श्रुतेः.

तदनन्तरीयपैङ्गळवर्षे च विद्यावैभवः समान एव—

कालयुक्कालयुक्तास्ते विद्याभ्यासमनोरथाः ।
विद्यां तां सांस्कृतीं सम्यक् पोषयामासुरीश्वराः ॥ ७५ ॥

इदानीमस्याः अभिनववाग्देवतायाः पञ्चविंशतिवर्षाह्यतीताः षड्विंशतिवर्षस्तु सिद्धार्थी ॥

प्रसिद्धः सिद्धार्थी नवनव कलाकोविदगणैः
नवीने विद्याया[1] उपकरणजाले विरचिते ।
अशेषां विद्यानां सरळसरणिं राजसुपथे
नयन् सद्बालानां हित सुखगतिं श्रेयसि मतिम् ॥ ७६

रौद्रीवर्षो राज्ञोहर्षं सद्भ्यस्तोषं द्विड्भ्यो रोषम् ।
विद्वत्पोषं कुर्वन् लोके रुद्रं रुष्टं चक्रे तुष्टम् ॥ ७७ ॥

दुर्मतिवर्षे लोकान् दुर्मतिदाहेन सा वाणी ।
वसुधां च सदावर्षैं र्बालानानर्च वाक्सुधावर्षैः ॥ ७८ ॥

सर्वासु दुन्दुभिध्वानो जयशब्देन चोदितः ।
दुन्दुभौ वत्सरे जातो विद्याशालासु सर्वतः ॥ ७९ ॥

तदनन्तरवर्षोऽपि येषां परनिग्रहेच्छा जाता तेषामेव रुधिरोद्गारं संवृत्तः । विद्यासक्तानां तु प्रियकार्येव ॥

तस्मिन् वर्षे—

विश्वविद्यालये बालाः
पण्डिता बहवोऽभवन् ।
मानिताः पूजितास्तेऽद्य
सेवन्ते मातरं महीम् ॥ ८० ॥

राजधानीमहापाठशालायामस्मिन् वत्सरे प्रचलितविद्वत्परीक्षायां बहवो देशीयाः अन्यदेशीयाश्च तत्तच्छास्त्रेषु कृतपरीक्षाः राजसम्मुखात् सवस्त्राभरणबहुमानानि लब्ध्वा भृशं तुष्यन्तिस्मेति सर्वत्र शुभोदर्कः। इत्थं अभिनवगीर्वाणवाग्देवताया त्रिशद्वर्षेष्वतीतेषु तस्याः प्रसादेन सर्वतः सर्वत्र संस्कृतविद्याभिवृद्धिः सरीसर्पति। सा च महोपकारिणी सर्वेषु मठेषु यतिवरैस्तपसा परिचिन्त्यते। अखिलदेवालयेषु भक्तजनैः समन्त्रकगन्धपुष्पादिभिः पूज्यते। गृहेषु उपनयनादिस्मार्तसंस्कारेषु, अग्निष्टोमादिश्रौतकर्मसु, वार्षिकजयन्तीसिंहासनाधिरोहणादिलौकिकोत्सवेषु च, तत्तत्कर्माधिकारिभिः तत्तत्कालकर्मोचितमन्त्रपुरःसरं होमद्रव्यादिभिरिज्यते। संस्कृतविद्याशालासु विद्यार्थिभिः विद्वद्भिश्च पठनपाठनादिभिः स्तोष्यते। देवतोत्सवादिकालेषु गायकैः वीणावेणुप्रमुखवाद्योपस्कृतगानवैभवेन गीयते। सर्वत्रेत्थं सदा जेगीयते इति तस्याः वृत्तान्तसङ्ग्रहः। एतत्सर्वं अस्मत्प्रभुवर्यस्य श्रीकृष्णराजेन्द्रभूपस्य राज्यशासनादृतधर्ममार्गावलम्बनप्रभावत एव समुज्जृम्भते। तस्मात् सा त्रिशक्तिरूपा त्रिमूर्तिस्वरूपा त्रिवर्गदायिनी विद्याशक्तिरूपिणी शब्दब्रह्मात्मिका लोकमाता गीर्वाणवाग्देवता अस्य यदुकुलभूपालसन्ततेः सन्ततं सकल शुभोदर्कमनुग्राह्य, तेनपाल्यमानाऽस्यदेशस्य तत्प्रजानां च निरन्तरं योगक्षेममातन्वती विविधविद्याविलासैर्विशेषतः संस्कृतविद्याविभवैः सर्वानानन्दपरिपूर्णहृदयान् कुर्यादित्यादरेणासकृदा-शास्यते॥

ऋतूनामुच्छ्रायः समभवतु वृष्टिः सुसमये
जनानामामोदो नियतसुखदः साधुविहितः।
स्वकर्मस्वौत्सुक्यं सुकृतपरिपाकेन महता
प्रसादाद्वाग्देव्याः फलतु निखिलेच्छा तनुभृताम्॥ ८१॥

विद्यानीतिविनीतधर्मनिरताः सन्मार्गसंसेवकाः
सर्वे साधुपरोपकारमतयो निर्व्याजवात्सल्यतः ।
लोकाः शोकविवर्जिताः सुचरिताः तुष्यन्तु सत्यान्विताः
गैर्वाण्यां नवरीतिरञ्जितकविस्पर्धा कवीनश्चतात् ॥ ८२ ॥

जयतु जयतु धीमान् कृष्णराजेन्द्रभूपो
जयतु जयतु विद्याभ्यासरीतिर्गरिष्ठा ।
भवतु भवतु सौख्यं स्तुत्यकर्णाटराज्ये
भवतु भवतु कीर्तिः स्सज्जनानां प्रसिद्धा ॥ ८३ ॥

इति सविनयं सादरं भक्तिश्रद्धापूर्वकं संप्रार्थ्यते
गीर्वाणवाणीसेवापरेण ॥

श्रीवेङ्कटरमणेन.

# साहित्यविचारः

यद्ब्रह्माचमनादिकर्मकथितं साक्षादनन्ताच्युता-
ख्याख्यामालिकया त्रयीस्मृतिचरैरार्यैरनुध्यायते ।
गायत्रीमनुमानितं नियमतश्चादित्यचक्रस्थितं
तन्नारायणशब्दवाच्यममलं भूयान्मम श्रेयसे ॥ १ ॥

श्रीमन्नाल्वडिकृष्णराजनृपतिर्जीयाज्जगत्क्षेमदः
पाश्चात्यस्तुतराज्यभारमहितः पाश्चात्ययात्रोज्ज्वलः ।
तद्राजेन्द्रकृपानुपालितमहाविद्वद्वरैर्भूषिता
वाणीसौधपदाश्चिता विजयतां शाला सुशिष्यप्रसूः ॥ २ ॥

शालाशासककृष्णमूर्तिसुमनोमालाप्रबन्धाऽधुना
चारुत्वार्जनवांछया हि सुमनोमालासुबद्धोऽमुकः ।
निर्गन्धोऽपि तदन्तरस्थितिगतो तद्गन्धमालम्बते
गन्धस्त्वेष कृतज्ञतामय इति प्राज्ञा विजानन्त्वमी ॥ ३ ॥

निधिबाणदिगिन्द्वंकशकाब्दे धातृवत्सरे ।
नैजभाद्रपदेमासि पूर्णिमायां बुधाहनि ॥ ४ ॥

साहित्यस्य विचारोऽयमुपन्यस्तो यथामया ।
स्वोपज्ञविषयस्तद्वत् देववाण्या विलिख्यते ॥ ५ ॥

श्रीकृष्णराजभूपालसंस्थानविदुषाऽधुना ।
श्रीवासरंगवर्येण भाषाद्वयविपश्चिता ॥ ६ ॥

बुधाराधनभावेन कृतो लेखोद्यमो भृशम् ।
बुधानां निरसूयानां मुदेऽस्तु महतां सताम् ॥ ७ ॥

अर्थप्रतीतिविषये गद्यवत् सुकरः परम् ।
लिखितोऽयमुपन्यासो भासतां कारिकामयः ॥ ८ ॥

दयाधना महाभागा सदस्याश्शास्त्रपारगाः ।
साहित्यस्य विचारेऽस्मिन्नुपन्यस्तुमिहोद्यतम् ॥ ९ ॥

अभिज्ञः कालिदासो मां पुरा ज्ञात्वा महाकविः ।
मदर्थमाह श्लोकान् हि यथा तत् स्मारयेऽधुना ॥ १० ॥

"मन्दः कवियशःप्रार्थी गमिष्याम्युपहास्यताम् ।
अथवा कृतवाग्द्वारे वंशेऽस्मिन् (साहित्ये) पूर्वसूरिभिः ।
मणौ वज्रसमुत्कीर्णे सूत्रस्येवास्ति मे गतिः" ॥

इत्युक्ताभिज्ञवाक्यार्थप्रोदाहरणतस्स्थितम् ।
क्षन्तुमर्हथ सर्वज्ञाः प्रस्तुतं विस्तराम्यहम् ॥ ११ ॥

तत्र स्थितं चेत् स्खलितं विस्मृत्य क्षन्तुमर्हथ ।
श्रूयतामवधानेन ब्रह्मज्ञा वेदपारगाः ॥ १२ ॥

कविभिः कथितं गद्यपद्योभयमयं भुवि ।
साहित्यमिति केचित्तु हितेन सह वर्तते ॥

सहितस्तस्य भावो हि साहित्यमिति केचन ।
ष्यञ्प्रत्ययोऽत्र विहितः धाधातुः सम्प्रपूर्वकः ॥ १४ ॥

क्तप्रत्ययोत्तरस्तिष्ठन् सहितोऽभूद्यथाक्रमात् ।
दधातेर्हिस्तथा 'तादौकिती' त्युक्त्या हितोऽभवत् ॥ १५ ॥

वाक्येनापि 'समोवाहि ततयो' रितीरितम् ।
सहितस्य ततःष्यञ्चेत्येवं सिद्धिस्समीरिता ॥ १६ ॥

सापेक्षाणां मिथस्तुल्यरूपाणां यौगपद्यकम् ।
क्रियान्वितं तदर्थोर्हीत्यूचुरन्ये तु शाब्दिकाः ॥ १७ ॥

सहास्य जात इत्यर्थे स्यादितच्चसहाव्ययात् ।
जातोतस्सहितश्शब्दस्तस्मात् ष्यञिति चोदितम् ॥ १८ ॥

शब्दशक्तिप्रकाशिन्यामर्थ उक्तस्तथान्यथा ।
वक्तुर्बुद्धिर्विशेषस्य विशेष्यत्वमुदीरितम् ॥ १९ ॥

तत्सारमञ्जरीकर्त्रा ससर्थितमभूद्यथा ।
पालाशखादिराश्वत्थान् छिन्दीत्यत्रहितत्ततेः ॥ २० ॥

प्रतियोगिहि साहित्यं यन्निरूपितमस्ति तत् ।
यदङ्गभागात्मफलं तदुत्पत्तिकरीछिदेः ॥ २१ ॥

क्रियाया वर्ततेतस्यास्सानुकूलकृतिर्भवान् ।
यथेत्थं शाब्दबोधो हि तथाऽत्रापि प्रवर्तते ॥ २२ ॥

नानाशास्त्रभवानन्ददायि साहित्यमित्यतः ।
शास्त्राणां प्रतियोगि स्यात्साहित्यं तन्निरूपितम् ॥ २३ ॥

यच्छास्त्रजानन्दफलं क्रियादानस्य तत्प्रसूः ।
अनुकूलकरं तस्मात्काव्यमित्यनुसिध्यति ॥ २४ ॥

उपदेशो हि काव्यानामानन्दरसदायकः ।
कान्तोपदेशसदृशः ततस्तद्रूपिणीक्रिया ॥ २५ ॥

नानाशास्त्रार्थविषयैर्मिळिताभासते ततः ।
तादृक्क्रियावत्साहित्यमन्वर्थाङ्कंमहीतले ॥ २६ ॥

साहित्ये बहुशास्त्राणां मेलनेऽत्र निदर्शनम् ।
क्रियते तत्रभवतां दृष्टिर्नेया प्रधीमताम् ॥ २७ ॥

व्याकरणशास्त्रमेलनं यथा—

सर्वस्य द्वे सुमतिकुमती संपदापत्तिहेतू ।
वृद्धोयूना सह परिचयात्त्यज्यते कामिनीभिः ।
एकोगोत्रे प्रभवति पुमान् यः कुटुम्बं बिभर्ति
स्त्रीपुंवच्च प्रभवति यदा तद्धि गेहं विनष्टम् ॥

शास्त्रेऽधिकारसूत्रस्य प्रवृत्तिरिव सर्वतः ।
सुमतिः कुमतिश्चापि सर्वान् व्याप्यखलु स्थिता ॥ २८ ॥

सम्पत्तिं च विपत्तिं च तनोति स्वस्वभावतः ।
युवकासक्तयुवती वृद्धं त्यजति तद्यथा ॥ २९ ॥

युवप्रत्ययसंश्लिष्टवृद्धवत् गोत्रजस्स्मृतः ।
कुटुम्बरक्षकस्त्वेकः गोत्रैकापत्यसम्मितः ॥ ३० ॥

स्त्रियासहोक्तौ च यथा शिष्यतेऽत्र पुमान् तथा ।
पुंवृत्तिर्यत्र योषितृस्यात् तया तद्वेश्म नश्यति ॥ ३१ ॥

तर्कशास्त्रमेलनं यथा—

कलशे निजहेतुदण्डजः किमु चक्रभ्रमकारितागुणः ।
सयदुच्चकुचौ भवन् प्रभाझरचक्रभ्रममातनोति यत् ॥

कारणं तु त्रिधा प्रोक्तं तर्कशास्त्रे मनीषिभिः ।
तन्तुभिस्समवेतं हि पटकार्यं प्रपद्यते ॥ ३२ ॥

कारणं समवाय्यत्र तन्तुयोगः पटस्य तु ।
कथ्यतेऽसमवायीति निमित्तमितिचेतरत् ॥ ३३ ॥

तुरीवेमादिकं यद्वत् कलशं प्रति मृत्तिका ।
उच्यते समवायीति दण्डाद्यत्र निमित्तकम् ॥ ३४ ॥

॥ श्रीः ॥

# दृक्पञ्चाङ्गविमर्शः



ऋतꣳ सत्यं परं ब्रह्म पुरुषं कृष्णपिङ्गलम् ।
ऊर्ध्वरेतं विरूपाक्षं विश्वरूपाय वै नमो नमः ॥१॥

यत्कटाक्षसुधासिन्धौ मज्जता पुण्यपाकतः ।
मया ज्ञानमणिर्लब्धस्तमानन्दगुरुं भजे ॥ २ ॥

जयति जगति गूढानन्धकारे पदार्थान्
जनघनघृणयाऽयं व्यञ्जयन्नात्मभाभिः ।
विमलितमनसां सद्वासनाभ्यासयोगै-
रपिच परमतत्वं योगिनां भानुरेकः ॥ ३ ॥

कलां बिभर्ति क्षणदाकरस्य यः प्रकाशिताशां शिरसा गभस्तिभिः ।
नमोऽस्तु तस्मै सुरवन्दिताङ्घ्रये समस्तविद्याप्रभवाय शम्भवे ॥ ४ ॥

अभिषिच्य कृपावर्षैरात्मानं यः करोति माम् ।
तं सर्वसाक्षिणं वन्दे वासुदेवं जगद्गुरुम् ॥ ५ ॥

परापश्यन्त्यादिदेहां प्रणताभीष्टदायिनीम् ।
सत्यज्ञानानन्दमयीं ध्यायेऽनन्यां सरस्वतीम् ॥ ६ ॥

न ख्यातिलाभपूजार्थं केवलं लोकहेतवे ।
दृक्पञ्चाङ्गविमर्शोऽयं यथामति वितन्यते ॥ ७ ॥

भूगर्भसूत्रात्समविध्विनाभ्यां
तिथ्यादिकं नित्यमिह प्रसाध्यम् ।
दर्शान्तकालेहि समौ भवेतां
भूमध्यदृश्यौ तु यदर्कचन्द्रौ ॥ ८ ॥

भूगर्भात्समसूत्रस्थितसूर्यो न दृश्यतेऽस्माभिः ।
गोलोपरि स्थितत्वाद्दृष्टिः कर्णानुसारतो गच्छेत् ॥ ९ ॥

कुपृष्ठगानां कुदलेनहीनं
दृङ्मण्डलार्धं खचरस्य दृश्यम् ।
अतोऽयथार्थं ह्युपलब्धियुक्तं
तिथ्यादिकं ये प्रवदन्ति मूढाः ॥ १० ॥

भूमध्यदृक्सिद्धकलाप्रपूर्ति-
कालो हि कर्माचरणेषु योग्यः ।
स्वदेशदृष्ट्युत्थकलाप्रपूर्ति-
कालो निषिद्धः श्रुतिषु प्रदिष्टः ॥ ११ ॥

इयं व्यवस्था जगति प्रसिद्धा
सृष्ट्यादिकालाद्विदुषां हिताय ।
वस्तुस्थितिं पण्डितवंशजाताः
किमन्यथा वक्तुमलं समर्थाः ॥ १२ ॥

प्राचामाधुनिकानां तिथ्यादिघटीष्वन्तरं महद्भवति ।
तत्सर्वथा विरुद्धं प्रत्यक्षं रुवन्ति खलु केचित् ॥ १३ ॥

द्रष्टा भूगर्भस्थः पश्यति चेत् सर्वथैव प्रत्यक्षम् ।
दृष्टिर्भूपृष्ठस्थितद्रष्टुः क्षितिजे समतलानुसारेण ॥ १४ ॥

यातत्वादस्तमितः क्षितिसमपार्श्वे न दृश्यते चार्कः ।
क्षितिजोदयास्तसूर्याद्यावन्मानेन चन्द्रमा भवति ॥ १५ ॥

तिथ्यादीनां मानं साधयितुं सूक्ष्मता नहि यस्मात् ।
विक्षेपान्तरितेन्दोर्घटीषु महदन्तरं तथा भाति ॥ १६ ॥

काल्पनिकाऽप्रत्यक्षातिथिरिति चेत् सर्वमनवद्यम् ॥ १७ ॥

अत्रैवं केचित् प्रत्यवतिष्ठन्ते । सूर्यचन्द्रयोरन्तरमेव तिथिः, तिथिगणो वा । एतदन्तरं न काल्पनिकम् । सूर्यचन्द्रयोरन्तरात्मकद्वादशभागा अपि न काल्पनिकाः । न अप्रत्यक्षाश्च । एतदन्तरं साक्षाद्वेधदृश्यं भवति । तस्मात्सर्वास्तिथयः प्रत्यक्षा इति ॥

अत्र तिथेर्लक्षणं किमित्यादौ विचार्यते ।

तदाह भरद्वाजः—

तिथिमूलमिदं सर्वं कालनक्षत्रसङ्ग्रहम् ।
तिथिनक्षत्रयोः सिद्धौ यो हेतुश्चन्द्र उच्यते ॥

चन्द्रस्य क्षयवृद्धिभ्यां विज्ञेयात्र तिथिः सदा ।
यदा पञ्चदशो भागो वर्धते क्षीयतेऽपि वा ॥

कालेन यावता चन्द्रे स कालस्तिथिरुच्यते । इति ।

सूर्यसिद्धान्ते—

अर्काद्विनिःसृतः प्राचीं यद्यात्यहरहः शशी ।
तच्चान्द्रमानमंशैस्तु ज्ञेया द्वादशभिस्तिथिः ॥ इति ।

विष्णुधर्मोत्तरेऽपि—

आदित्याद्विप्रकृष्टस्तु भागद्वादशकं यदा ।
चन्द्रमाः स्यात्तदा राम तिथिरित्याभिधीयते ॥ इति ।

कालमाधवे सिद्धान्तशिरोमणौ च—

तन्यन्ते कलया यस्मात्तस्माच्चास्तिथयः स्मृताः । इति तनोति विस्तारयति वर्धमानां क्षीयमाणां वा चन्द्रकलां यः कालविशेषः स किल तिथिः । त्रिंशदंशोपेतराशौ सूर्याद्विनिःसृतः शशी द्वादशभिरंशैः सूर्यमुल्लंघ्य गच्छति । तदा चन्द्रस्य पञ्चदशसु भागेषु प्रथमभागो दर्शनयोग्यो भवति सोऽयं भागः प्रथमकलेत्यभिधीयते इत्यादिना तिथेः कलारूपत्वात्प्रत्यक्षत्वमव्याहतमिति चेदुच्यते ॥

अत्र दर्शनयोग्यशब्देन शास्त्रीयज्ञानमेव विवक्षितम्। चान्द्रमासलक्षणविचारे कालमाधवे सिद्धान्तशिरोमणौ—

मस्यन्ते परिमीयन्ते स्वकलावृद्धिहानितः ।
मास एते स्मृता मासास्त्रिंशत्तिथिसमान्विताः ॥

वृद्धवसिष्ठसिद्धान्ते "अथामान्ते हि चन्द्रार्कौ राश्यंशादिसमावपि । प्राक्पश्चात्समसूत्रे हि नो यातोऽतस्तु लम्बनम्" । इत्यादिना भूकेन्द्रदृष्ट्या दर्शान्ते चन्द्रसूर्यौ राश्यादिभोगगणनया समावपि भूपृष्ठस्थजनदृष्ट्या पूर्वकपाले दर्शसमाप्तिकालात्पूर्वं समसूत्रे भवतः । पश्चिमकपाले दर्शसमाप्तिकालादूर्ध्वं समसूत्रे भवतः ' अत एव दृक्सिद्धिर्द्विविधा । भूमध्यजा भूपृष्ठजा चेति । तत्र प्रथमा पारमार्थिकी । द्वितीया व्यावहारिकी । शुक्लप्रतिपदन्ते सूर्यात्पुरतो द्वादशभागान्ते तत्कक्षां भित्वा भमण्डले यावदंशे तात्कालिकश्चन्द्रास्तिष्ठति । तत्रैव भूगर्भाच्चन्द्रनाभिकं सूत्रं पतेत् । एवं भूकेन्द्रदृष्ट्या क्रान्तिवृत्तीयसूर्यचन्द्रयोर्द्वादशांशान्तरे जाते चन्द्रस्य प्रथमकलां दर्शनयोग्या भवति । अथ, भूपृष्ठाद्द्रष्टुरन्या रेखा रविबिन्दुं चन्द्रबिन्दुं च नेया । सा रेखा चन्द्रं न लगति । दूरकक्ष्यात्वाद्द्रष्टुः कुदलोच्छ्रितत्वाच्च । अथ तयोर्भूपृष्ठतद्गर्भसूत्रयोरन्तरे चन्द्रकक्षायां यावदंशलिप्तादिकं तावदेव लम्बनलिप्तादिकं ज्ञेयम् ।

# उपासनाकाण्डम्

( पि. आर्. सुब्रह्मण्यशास्त्रिणः बि.ए.)

---

प्रणम्य परमात्मानं दयालुं हृदयेशयम् ।
प्रकृत्योपासनाकाण्डस्योपोद्घातो विलिख्यते ॥

इह खलु भारतवर्षीयजनानामैहिकामुष्मिकश्रेयःप्राप्त्यै शिवेतर-क्षतये च कर्मकाण्डमुपासनाकाण्डं ज्ञानकाण्डं च क्रमात् प्रादुर्बभूवुः। तत्रा-दिमं पूर्वमीमांसाशास्त्रे विवृतम् तृतीयं चोत्तरमीमांसायाम् । द्वितीयं तन्त्रागमादिघटितं मन्त्रशास्त्रं, यस्यायमुपोद्घातः क्रियतेऽद्य यथामति । अत्र क उपासीत कस्य हेतोरिति विमर्शनपरः छान्दोग्यश्रुतिमुदाहृत्य विवृणोमि । तथा च "सर्वं खल्विदं ब्रह्म तज्जलानिति शान्त उपासीत। अथ खलु क्रतुमयः पुरुषो यथाक्रतुरस्मिंल्लोके पुरुषो भवति तथेतः प्रेत्य भवति स क्रतुं कुर्वीत" ॥

परमाण्वादिसूक्ष्मरूपाण्यारभ्य भृशबृहद्ग्रहनक्षत्रपर्यन्तं विद्यमा-नानि वर्तिष्यमाणानि सर्वाण्यपि रूपाणि पराकाशश्च परमात्मनोरूपं शरीरं प्रकृतिः । सा प्रकृतिर्जडप्रकृतिरपराप्रकृतिरचित्प्रकृतिः शक्तिर्मायाऽ-दितिराकाश इति नानानामभिर्व्यपदिश्यते । जीवाः परमात्मनोंऽशभूता-स्तस्य पराप्रकृतिरित्युच्यन्ते । एते जडप्रकृतिरूपेषु मिश्रीभूय वरीवर्तमाना-श्चितश्चेतना ज्ञा विज्ञाना इति च व्यपदिश्यन्ते । एवं विधपरापराप्रकृति-विशिष्टः परमात्मा ब्रह्मेत्युच्यते। सर्वं चेदं चिदचिदात्मकं जगत् ब्रह्मणो जायत इति तज्जं, तस्मिन् लीयत इति तल्लं, तस्मिन् तेन चानिति जीवति तिष्ठतीति तदनम् संक्षेपेण 'तज्जलानम्' इति वक्तव्ये 'तज्ज-

लान्' इति छान्दसं रूपम्। तै. उ. ब्रह्मलक्षणप्रश्ने गुरुराह 'यतो वा इमानि भूतानि जायन्ते येन जातानि जीवन्ति यत्प्रयन्त्यभिसंविशन्ति तद्ब्रह्म' इति स्पष्टं विवृतम्। एवंविधजगज्जन्मस्थितिभङ्गनिदाननिधानभूततया ब्रह्म ज्ञात्वा ध्यायं ध्यायं चित्तशान्तिं सम्पाद्योपासनां कुर्वीतेति विधिः। तत्र तावदुपासनाविशेषांस्तत्प्रकारांस्तन्नियमांस्तत्फलानि च शास्ति मन्त्रशास्त्रम्। अनन्तरश्रुतिवाक्ये अथशब्दः प्रतिज्ञार्थे, खलुशब्दः प्रसिद्धार्थे, पुरुषो जीवः शरीरी मयट् प्राचुर्यार्थेचेति बोध्यम्। यद्यपि जीवः प्रकृतिवलयप्रवेशसमय एव सूक्ष्मरूपलिङ्गशरीरं लब्ध्वा सोमराजो भूत्वा ज्ञानसंकोचमाप्य परतन्त्रो भवति, तथापि विज्ञानात्मत्वेन मननसंकल्पनिश्चयकरणक्षमो मानवजन्मलाभे भवति यत्र वाग्धीन्द्रियस्फूर्तिरुज्जृम्भते। वागिन्द्रियं हि प्राङ्मानुषजनुषः प्रायो न संभवति। जीवश्च लोहपाषाणधात्वादिष्वादौ चिरं जडवत् स्थित्वा तृणलतातरुषु सुचिरं भूत्वा भूत्वा, क्रिमिकीटसरीसृपपतत्रिपश्वादिषु तावदाविर्भूताल्पचैतन्येन संजातसंचारसामर्थ्येन चैधमानो जविनमात्रावबोधवान् चिराय भूत्वा भूत्वा तत्र कुत्रापि ध्यानोपासनसामग्रीभूतमनोवागादीनि न लेभे। यदा तु मानवयोनिषु जनिर्भवति तदैव मनोवागादिसामग्रीसम्पत्तिः संजायते। तत्संभवेऽपि किरातपुल्कसादियोनिजातस्य वागादिविकासानवकाशतया पश्वाद्यविशेषेण जीवयात्रा नीयते। अनुकूलजन्मलाभे च शशवबाल्याद्यवैस्थासु ज्ञानसामग्रीणां स्फूर्त्यभावात् तत्र ध्यानोपासनादियोग्यतायाः प्रागभाव एव प्रादुःष्यात्। तदनन्तरदशासु ध्यानाद्यनुकूलवाग्धीपाटवेन सह मनुष्यस्य तदधिकारियोग्यता संभवति। अतोऽत्राधिकारयोग्यतासम्पन्नं मनुष्याशरीरवर्तिनं जीवमुद्दिश्य मन्त्रशास्त्रं प्रवर्तते। मनुः मानवः मनुष्यः मानुषः मन्त्रं मननं इत्यादिशब्दाश्च मन् चिन्तायामिति धातोर्निष्पन्ना इति बोध्यम्। अतो मनुष्यः क्रतुक्षमः क्रतौ योग्याधिकारीति

पराधीनोऽपि क्रतुकरणे स्वतन्त्र इति स विधिनिषेधार्हः। अतस्तमुद्दिश्य धर्मशास्त्रनीतिशास्त्रमन्त्रशास्त्रवेदान्तशास्त्राणि प्रादुरासन्। एवं विधानेकानुकूलसम्पत्तिमान् पुरुषः क्रतुकरणे यदि न यतते स आत्महेति श्रीभागवते यथा—

"नृदेहमाद्यं सुलभं सुदुर्लभं प्लवं सुकल्पं गुरुकर्णधारम्।
मयाऽनुकूलेन नभस्वतेरितं पुमान् भवाब्धिं न तरेत्स आत्महा"॥

"लब्ध्वा कथंचिन्नरजन्म दुर्लभं तत्रापि पुंस्त्वं श्रुतिपारदर्शनम्।
यस्त्वात्ममुक्त्यै न यतेत मूढधीः स आत्महा स्वं विनिहन्त्यसद्ग्रहात्॥"

गीतायां च—"तथा प्रलीनस्तमसि मूढयोनिषु जायते।
. . . . . अधोगच्छन्ति तामसाः"—

"एतां दृष्टिमवष्टभ्य नष्टात्मानोऽल्पबुद्धयः।
प्रभवन्त्युग्रकर्माणः . . . . . ॥
आसुरीं योनिमापन्ना मूढा जन्मनि जन्मनि।
. . . . . . यान्त्यधमां गतिम्"॥

अत्राम्नायते हेतुः "यथा क्रतुरस्मिंल्लोके पुरुषो भवति" इति। प्रकृतिप्रवेशकाललब्धलिङ्गदेहस्त्वामुक्ति तिष्ठति। जीवस्य संसारानुभवैरानन्दानुभवयोग्यतासम्पादनार्थं काले काले स्थूलदेहो जायतेऽथ निरस्यते च। एते लोके जननमरणाख्ये। तत्तत्स्थूलशरीरेषु संभवत्प्रवृत्तिभिः फलीभूतवासना पुनः प्रवृत्तौ दिशं नियमेन दिशति। एवं कर्म जायते। तत्कर्मानुगुणमुत्तरं जन्म। अत्र कर्मवासनानुसारं प्रवृत्तिः। एवमुत्तरस्मिन् जन्मनि तथाविधं कर्म बलवद् भवति तदनुगुणजन्महेतुश्च। तस्मान्मनुष्यः स्वेष्टानिष्टप्राप्तिपरिहारपटुः सन् क्रतुं तादृशं कुर्वीत यादृशो निःश्रेयसाय भवेदिति श्रुत्यर्थः॥

लोके च जीवोऽसंख्येयजीवजालैः परिवृतो विविधविचित्रा-चिद्विकाररूपसंकुले भोग्यभोगोपकरणभोगायतनपरिवृढो भूरादिसत्य-लोकैः सह बाह्यसंबन्धबद्धो भवति । आभ्यन्तरे चान्नमयप्राणमयमनो-मयविज्ञानमयानन्दमयकोशानि सन्ति । लोकाश्च कोशाश्च परस्परसदृश-भूमिकासम्बन्धभाजो भवन्ति । यदा जीवः स्थूलशरीरेन्द्रियाणि व्याप्नोति तदाऽस्य जागरावस्था । यदा मनोमयकोशपर्यन्तमेव संबन्धः तदास्य स्वप्नावस्था । यदा तु मनःसंबन्धमपि विहायानन्दमयकोशे परमात्मा-द्वितीयः शेते तदा सुषुप्तिः यत्रत्यानन्दानुभवः प्रबोधे 'सुखमहमस्वा-प्सम्' इति प्रत्यभिज्ञयैवोह्यते ॥

किंचैवंविधपुरुषस्य समन्तात् प्राणमयमात्रदेहिनो भूतप्रेत-पिशाचादयो, मनोमयमात्रदेहिनो यक्षगन्धर्वादयो, विज्ञानमयमात्रदेह-वन्तो देवादयश्च बहवः सन्ति संचरन्ति च । एवंविधसंबन्धे सति पिण्डाण्डयोस्तत्तद्भूमिकायां तत्तल्लोककोशयोः परस्परसंबन्धाधिक्येन हेतुहेतुमद्भावापत्त्या तन्त्या इव बद्धौ लोककोशौ भवतः । अत एकत्र-रूपान्तरव्यतिकरोऽन्यत्ररूपावस्थान्तरमुत्पादयति । तथा च बाह्यवृत्ति-व्यत्यासश्चान्तरवृत्तिभेदमुत्पादयति । यादृशां स्थितिमान्तरे कश्चि-दिच्छेत् स तदनुगुणां स्थितिं बाह्ये निर्वर्तयेत् । निद्राकामो बाह्यं निश्चलं कृत्वा तेजश्च परिहार्य शयानो मन्दं मन्दं श्वस्याच्चेन्निद्रामाप्नोति । तथा मनःशान्तिकामः स्थिरसुखासनासीनः प्राणानायम्य निश्चलेंद्रियः सन् मनसः स्थैर्यमाप्नोति । तादृशं मनो यद्येकस्मिन्नेवार्थे स्थाप्यते तदैकाग्रता सम्पद्यते । एवं बाह्यावस्थानुगुणमान्तरपारिणामो भावनानु-गुणश्च भवति । कतिपयेभ्यो वत्सरेभ्यः पूर्वं नटप्रमुखः कश्चिदाङ्गलदेशे-'हाम्लेट्' अभिधानो रङ्गतले मरणनटनविधौ मरणावस्थायास्तीव्रभाव-नायाः परां काष्ठां नटन् वस्तुतो मरणदशामवाप । आन्तरावस्थया

| संख्या. | विषयाः—प्रबन्धारः | पुटसंख्या. |
| --- | --- | --- |
| १. | श्लोकाः .... .... .... | १ |
| २. | शालापरीक्षावृत्तान्तः— .... .... | २ |
| ३. | दृक्पञ्चाङ्गविमर्शः (अनुवृत्तः)— श्रीकृष्णपरमेश्वरभट्टसूरिणः .... .... | ५–१० |
| ४. | साहित्यविचारः (अनुवृत्तः)— आस्थानविद्वांसः टि. श्रीनिवासरङ्गाचार्याः .... | ५–१२ |
| ५. | अन्यापदेशः (अनुवृत्तः)— श्रीगीर्वाणेन्द्रदीक्षिताः .... .... | ७–१४ |
| ६. | सनातनभौतिकविज्ञानम्— श्री वेङ्कटरमणार्याः .... .... | ११–१८ |
| ७. | कश्चिन्नव्यविमर्शः— साहित्यरत्नम् महाविद्वांसः के. गोपालकृष्ण-शास्त्रिणः .... .... | ५–३१ |
| ८. | अब्दुर् रहिम् खान् खानानस्य संस्कृतप्रियता विद्वांसः काशी प्राणेशाचार्याः .... | ११, २ |
| ९. | उपासनाकाण्डम् (अनुवृत्तम्)— पि. आर्. सुब्रह्मण्यशास्त्रिणः बि.ए. .... | |

## सम्पादकीयसमितिः

---

१. श्रीमन्तः अर्थशास्त्रविशारदाः विद्यालङ्काराः महामहोपाध्यायाः डाक्टर् आर्. शामशास्त्रिणः, बि.ए., पिएच्.डि., एं.आर्.ए.एस्., विश्रान्त मैसूरु प्राच्यकोशागाराध्यक्षाः शासन-विमर्शशाखाध्यक्षाश्च

२. श्रीमन्तः प्रोफेसर् सि. आर्. नरसिंहशास्त्रिणः एं.ए., मैसूरु महाराजाकालेज् संस्कृत प्रधानोपाध्यायाः

३. पण्डितरत्नं धर्माधिकारिणः ब्र. श्री. काशी शेषवेङ्कटाचल-शास्त्रिणः

४. महामहोपाध्यायाः पण्डितरत्नं ब्र.श्री. लक्ष्मीपुरं श्रीनिवासाचार्याः, विश्रान्तमहापाठशालाविशिष्टाद्वैतवेदान्तप्रधानो-पाध्यायाः

५. साहित्यरत्नं महाविद्वांसः ब्र. श्री. क. गोपालकृष्णशास्त्रिणः, महाराजाकालेज् संस्कृतपण्डिताः

६. महाविद्वांसः ब्र. श्री. करूरु शेषाचार्याः, महापाठशाला ज्यौतिषप्रधानोपाध्यायाः

७. विद्वांसः ब्र. श्री. एस्. वेङ्कटाचार्याः, महापाठशाला साहित्य-प्रधानोपाध्यायाः

८. श्रीमन्तः एस्. बि. कृष्णमूर्तयः, एं.ए., महापाठशालाध्यक्षाः (सम्पादकाश्च)

## विज्ञप्तिः

भो भो महाशयाः! सहृदयाः! सप्रश्रयमिदमिदानीं विज्ञापयामः-संस्कृतविद्याभिमानिनः पुरुषप्रवराः यं कंचन विषयमधिकृत्य संस्कृतभाषामयं अनतिसंक्षिप्तविस्तरं उपक्रमोपसंहारपारिकर्मितं कस्याप्यनुद्वेगकरं अचर्चितपूर्वं कालदेशदशानुगुणं प्रपञ्चोपकारकरं धर्माद्यविरुद्धं "जीर्णमङ्गे सुभाषितम्" इति निर्वेदस्य "वीरा वाचैव केवलम्" इत्यपवादस्य वा प्रशमकरं प्रस्पष्टमुखविलाससुपन्यासं विलिख्य यदि प्रेषयेयुर्महान्तः, तेभ्यो महद्भ्यः समर्प्य अनन्तान् धन्यवादान् पत्रिकायामस्यां तमुपन्यासं पारयामः प्रकाशयितुम् ॥

यदीच्छति वशीकर्तुं जगदेकेन कर्मणा ।
परापवादसस्येभ्या गाश्चरन्तीर्निवारयेत् ॥
न हीदृशं संवननं त्रिषु लोकेषु विद्यते ।
दया मैत्री च भूतेषु दानं च मधुरा च वाक् ॥

संपादकस्य.

---

## मूल्यप्रकारः

१. अस्याः पत्रिकायाः वार्षिकम् अग्रिमं मूल्यं सार्धैकरूप्यकम्
प्रापणव्ययः (भारतमण्डले.) .... .... पादरूप्यकम्

२. विद्यार्थिनां पुनः एकरूप्यकम्. प्रापणव्ययः ,,

३. विभिन्नदेशे सपादरूप्यद्वयम् (*3s.*) प्रापणभृतिः अर्धरूप्यकम्

पत्रिकाप्राप्तिस्थानम्,

**संपादकः,**

श्रीमन्महाराजसंस्कृतमहापाठशाला, मैसूरु.

॥ श्रीः ॥

# श्रीमन्महाराजसंस्कृतमहापाठशालापत्रिका

प्रतिमासत्रयं प्रकटीक्रियमाणा

"कुर्वन्नेवेह कर्माणि जिजीविषेच्छतं समाः"

(ईशोपनिषत्)

सम्पुटम् १३]　　१९३७　　[सञ्चिका ४

अधुना मधुकरपतिना गिलितोऽप्यपकारदम्पती येन।
त्रातः सपालयेन्मां विगतविकारो विनायको मायाः ॥

अम्लानपङ्कजा माला कण्ठे रामस्य सीतया।
मुधा बुधा भ्रमन्त्यत्र प्रत्यक्षेपिक्रियापदे ॥

नारसिंहाकृतिं वीक्ष्य वने मत्तमतङ्गजः।
अत्र क्रियापदं वक्तुं मर्यादा दशवार्षिकी ॥

राक्षसेभ्यः सुतां हृत्वा जनकस्य पुरीं ययौ।
अत्र कर्तृपदं वक्तुं मर्यादा दशवार्षिकी ॥

भवानि शङ्करोमेशं प्रतिपूजापरायणः।
कर्तृकर्मक्रिया वक्तुं अवधिः दशवार्षिकः ॥

अत्रत्यानां देशान्तरस्थितानां च विदुषां साहाय्येन अस्यां महापाठशालायां श्रीमन्महीशूरसंस्थानसंस्कृतविद्वन्महासभया शास्त्रभागे वेदभागे च ईश्वरवर्षसम्बन्धिन्यः सर्वा अपि परीक्षाः श्रावणकृष्णदशमीतः (३१-८-१९३७) प्रचलिताः। तत्र शतसंख्याकाः परीक्ष्याः समागताः; तेषु सप्तषष्टिसंख्याकाः उत्तीर्णाः। नवरात्रमहोत्सवे आश्वीजशुक्लद्वादश्यां (१७-१०-१९३७) महाराजसभायां यथार्हं श्रीमन्महाराजकरकमलेन सम्मानिताश्च ॥

अग्रे निर्दिष्टाः संस्कृतविद्याभिमानिभिः प्रतिवर्षं प्रदीयमानानि विशेषपारितोषिकाणि अलभन्त—

१. ब्र. श्री. रामभट्टः
२. ,, पाटणकर चन्द्रशेखरभट्टः
३. ,, अर्चक राघवेन्द्राचार्यः
४. ,, के. एन्. लक्ष्मीकान्तय्यङ्गार्यः
५. ,, काशी पुरोहित नञ्जुण्डशास्त्री
६. ,, हानगल् यज्ञेश्वरशास्त्री
७. ,, एच्. एस्. केशवमूर्तिः
८. ,, चक्रवर्ति श्रीनिवासवरदाचार्यः
९. ,, रामचन्द्रभट्टः
१०. ,, के. महालिङ्गभट्टः
११. ,, के. एन्. वेङ्कटरमणशास्त्री
१२. ,, पि. एस्. सम्पत्कुमाराचार्यः
१३. ,, रामचन्द्रशास्त्री सूरी

इदन्तु लम्बनं चन्द्रस्योच्चस्थानान्नीचस्थितौ अष्टसप्ततिकलात्मकं परमोपचितं भवति। विपर्यये परमापचयः। उपचयापचयौ क्षितिज एव परीक्षणीयौ। एवमेव गततिथ्यंशानां भांशानां च लम्बितचन्द्रान्तरं दर्शनीयम्॥

तथाच भास्करीयबीजोपनये—

ओजान्तयोर्विधोस्तुङ्गाच्छशाङ्कार्कग्रहौ यदि।
कलानामष्टसप्तत्या वैषम्यन्तु समीक्ष्यते॥

तत्रोत्तरार्धे—

"चतुस्त्रिंशत्कलाहीनं वैषम्यन्तु समीक्ष्यते"।

इति पाठः प्रामादिकः। अयमेव लम्बनखण्डान्तरसंस्कारः च्युतिसंस्कारवद्वर्तते। पुनस्तत्रैव बीजोपनये—

अग्रतः पृष्ठतो वापि रवेश्चन्द्रे पदार्धगे।
तुङ्गतुल्ये चतुस्त्रिंशत्कलावैषम्यमीक्ष्यते॥

अयं व्यर्केन्दुसंस्कारस्तिथिसंस्कारवद्वर्तते। यतो मेषादौ स्थितस्य रवेरग्रतश्चन्द्रे पदार्धगे क्रमेण चतुस्त्रिंशत्कलापर्यन्तमुपचितं भवति। ततोऽपचयक्रमेण पदान्ते शून्यं भवति। एवमेवोत्तरत्रापि॥

तिथिसंस्कारस्वरूपं केतक्यामुक्तम्। यथा—"कलास्तैथिका संस्कृतिः स्याद्विमांशोः। इयं स्वर्णता मध्यमे व्यर्कचन्द्रेऽजषड्भे सति स्यात्तुलादौ विरुद्धा" इति। पातोनचन्द्रसंस्कारो नाम राहुसंस्कारो दृक्कर्मस्वन्तर्भवति। अत एव भूपृष्ठस्थजनदृष्ट्या घटिकानां सप्तषष्ट्या यदि द्वादशांशान्तरं भवेत् तदा भूकेन्द्रदृष्ट्या पंचषष्ट्यैव कलावृद्धिर्भवेत्। यदा पञ्चाशता द्वादशांशान्तरं भवेत्तदा घटिकानां चतुष्पञ्चाशता कलावृद्धिर्भवति। तथाच भूगर्भस्थजनदृष्ट्या द्वादशांशान्तरानुरोधेनैकया कलया एका तिथिरिति तिथिलक्षणेऽङ्गीकृते बाणवृद्धिरसक्षयप्रवादः सत्य एव भवति। तथाच पुरुषार्थचिन्तामणौ "सूर्याधिकरणराश्यं-

शादग्रिमत्रयोदशांशप्रवेशस्तु अतिशीघ्रगतौ चतुष्पञ्चाशद्धटिकाभिर्भवति। अतिमन्दगतौ पञ्चषष्ट्या घटिकाभिर्भवति" इत्युक्तम् । अत्यन्तं सूक्ष्ममवलम्ब्य ज्योतिर्विदाभरणे "वृद्धिक्षयौ स्तः परमौ तिथौ सदा व्यर्धा रसाः साङ्घ्रिरसाश्च नाडिकाः" इति । विद्यारण्यकृतदृग्गणितप्रभायां "सार्धबाणसपादाङ्गघटीवृद्धिक्षयान्विताः । गृहीता धर्मशास्त्रेषु तिथयो नित्यकर्मसु । स्मृत्यादीनां पुराणानामीदृक्तिथिवशात्सदा । निर्णयो युज्यते नोचेत् स्मृत्यादीनामसङ्गतिः । तस्माद्युक्तं मया प्रोक्तं गृहीतव्यं सदाऽऽस्तिकैः" इत्यादिना वेदवत् स्वतः प्रमाणभूतज्योतिःशास्त्ररहस्यमवगत्यैव प्राचीना विद्वांसो निर्णयं चक्रुः । ननु 'केन्द्रार्धयष्टिवेधादर्केन्द्वोरन्तरांशकार्कांशाः । स्फुटनष्टतिथिर्ज्ञेया तस्मात्कार्या तथा चान्या' । इति पञ्चसिद्धान्तिका अध्याये ४ श्लोके १२ वराहमिहिरोक्त्या च्युतितिथ्यादिसंस्कृततिथेरेव वेधयोग्यत्वेन तिथ्यादिविषयेऽपि बीजसंस्करणमावश्यकमिति चेन्न । स्वार्थादन्यत्र भूगर्भभूपृष्ठाभ्यां निःसृतयोर्दृक्सूत्रयोरैक्याभावात् भूगोलोपरिस्थितस्य द्रष्टुः सूर्यचन्द्रद्वादशांशान्तरवेधनोत्पन्नप्रत्यक्षदृष्टविषये भूमध्यदृक्सिध्यर्थं ते संस्कारा विलोमविधिना कर्तुं युज्यन्त एवेति नात्र विवादः । अस्माकं भूगर्भदृक्सिद्धसूर्यचन्द्राभ्यां उत्पन्नपारमार्थिकतिथ्यन्तकालेनैव परमप्रयोजनम् ॥

तथाच भास्करीयबीजोपनये "भूपृष्ठसर्वदेशानां मध्यमेव यतः समम् । तत्तुल्यखेचरानीतं तिथ्याद्येव वरं ततः" । श्रीनिवाससूरिणाप्युक्तम् । "तस्मात्केवलदृक्सिद्धे नैव श्राद्धादिकं चरेत् । भचक्रनाभिदृक्सिद्धेनैव श्राद्धादिकं चरेत् । राहुदर्शनतोऽन्यत्र दृक्सिद्धा नेष्यते तिथिः" । इत्यादिना भूपृष्ठदृक्सिद्धतिथिर्ग्रहणादिषूपयुज्यते । भूमध्यदृक्सिद्धतिथिः श्राद्धादिषु । इति ॥

अत्र भूमध्यदृग्गणितसिध्यर्थं कियन्तः संस्कारा अपेक्ष्यन्ते

इति चेदुच्यते । ब्रह्मगुप्तः । "देशान्तरे स्वमध्ये भुजफलचापे भुजान्तरे च कृते । उन्मण्डलेऽर्कचन्द्रौ स्पष्टौ रविचरदले क्षितिजे" ॥

सिद्धान्तशेखरेऽपि "अध्वकर्मणि कृते स्वमध्यमौ दोःफले रविफले विघूणगू । तौ स्फुटौ विपलदेशभूमिजौ स्वे कुजेऽर्कचरखण्डसंस्कृतौ" । लङ्कार्कोदयिकौ रविचन्द्रौ अध्वकर्मणि कृते सति स्वदेशमध्यमौ भवतः यस्माल्लङ्कायाम्योत्तररेखातः प्राक् पश्चाद्वा स्वदेशेन भाव्यम् । तत्र प्रथमं पश्चाद्वाऽर्कोदयो भवति रेखार्कोदयात् । ततो मन्दफले, रविभुजान्तरे, च कृते निरक्षदेशक्षितिजे स्फुटौ स्तः । ततोऽर्कचरखण्डसंस्कारेण स्वदेशार्कोदयकाले स्फुटौ रविचन्द्रौ भवतः । इमे संस्कारा उपपत्तिमन्तः । अत एव भास्कराचार्येण "अत्रगणितस्कन्धे उपपत्तिमानेवाऽऽगमः प्रमाण" मित्युक्तम् । आगमप्रामाण्येनोपलब्धिनिमित्तनतसंस्कारोऽपि चन्द्रसूर्यग्रहण एवेत्युक्तम् । सिद्धान्तशिरोमणौ–

"प्राक् पश्चिमस्थस्तरणिर्विधुः
प्रागॄणे फले युक्त इतोन्यथोनः ।
मुहुः स्फुटातो ग्रहणे रवीन्दो-
स्तिथिस्त्विदं जिष्णुसुतो जगाद" ॥

अत्र जिष्णुसुतग्रहणं प्रमाणदार्ढ्यार्थं सादरग्रहणसिद्धये च ॥

एवमार्यभट्ट, ब्रह्मगुप्त, श्रीपति, भास्कराचार्यैरागमप्रामाण्येनाविकलरूपं स्थिरबीजसंस्करणं दृग्गणितसाम्यकारकं मध्यमग्रहेषु कुर्यादित्युक्तम् । लल्लाचार्येणापि "शाकेनखाब्धिरहिते" इत्यादिना मध्यमग्रहेषु बीजसंस्कारमुक्त्वा यन्त्रदीपिकाव्याख्यानावसरे "शृङ्गोन्नतौ ग्रहयुतौ ग्रहणे तथाऽस्ते छायानिरीक्षणविधावुदये प्रदेयं । बीजं फलं तिथिभयोगविधौ त्वदेयं चन्द्रे प्रदेयमखिलं क्षितिजादिकेषु" इति व्यवस्था कृता । विष्णुधर्मोत्तरेऽपि "प्रत्यहं तिथिनक्षत्रयोगस्यानयने विधुः" "अबीजसंस्कृतो ग्राह्यो ग्रहणादौ सबीजकः" "यन्त्रवेधादिना ज्ञातं

यद्बीजं गणकैस्ततः। ग्रहणादि परीक्षेत न तिथ्यादि कदाचन"। इति-लोमशवसिष्ठसिद्धान्तोदाहृतवचनाभ्यामपि पारमार्थिकतिथिज्ञानविषये बीजसंस्कारो नावश्यक इति सिध्यति। सिद्धान्ततत्त्वविवेके कमलाकरेणाप्युक्तम्—

"वेलाहीनेंऽतरं यत्तद्बीजं मत्वैव कालजम्।
कर्माहेखचरं शुद्धं नाशयन्त्यधमा बलात्"॥
अदृष्टफलसिध्यर्थं यथार्काद्गणितं कुरु।
गणितं यदि दृष्टार्थं तद्दृष्ट्युद्भवतः सदा॥

इति। एवं "अमावास्यापरिच्छिन्नो मासः स्याद्ब्रह्मणस्य तु" इति ब्रह्मसिद्धान्तवचनेनाऽपि चन्द्रवृद्धिक्षयाभ्यामुत्पन्नचान्द्रमासस्य दर्शान्तकालो गणितेनैवावगम्यः न तु प्रत्यक्षनिमित्तेन॥

ननु गणितागतदर्शान्त एव स्थूलः। सूर्यग्रहणमध्यकालस्यादर्शनादिति चेन्न भूगर्भस्थानां गणितागतदर्शान्त एव किल सूर्यग्रहणमध्यकालः, भूगर्भस्थानां लम्बनादिसंस्काराणामुत्पन्नत्वात्स एव स्थूलः। अत एव दृष्टादृष्टफलककर्मभेदेन स्थूलसूक्ष्मतिथ्यन्तकालज्ञानमुपपन्नमेव। न च वेदैकशरणानां प्राधान्येन सर्वाण्यपि कर्माण्यदृष्टफलकानि। अतो दृष्टादृष्टफलककर्मभेदेन स्थूलसूक्ष्मतिथ्यन्तकालज्ञानस्यानुपपत्तिरिति वाच्यम्।

## "अग्निहोत्रं जुहुयात्स्वर्गकामः"

इत्यादिना आश्रमधर्माणां अदृष्टफलकत्वावगमात्। विधिरयं समानः पैतृककर्मणोऽपि। ज्ञानं दृष्टफलम्। तथाच ब्रह्मसिद्धान्ते अध्याये ७ श्लोके ६१।

"ग्रहणं ग्रहयुद्धं वा तत्तदहि फलप्रदम्"।

इत्यादिना दृष्टादृष्टफलककर्मभेदेन बीजसंस्कारविधिनिषेधव्यवस्थापनं

प्राचीनैर्यदुक्तं तदस्मदादिभिरपि ग्राह्यमेव अतः कमलाकरेण पक्षपातबुध्या अन्यमतखण्डनं कृतमिति यदुक्तं तदुपहसनीयमेव। तथापि तिथेः कलारूपत्वात्प्रत्यक्षत्वमव्याहतमिति चेत्तदापि न योग्यम् ॥

तथा च श्रुतिः—

**"स्मृतिः प्रत्यक्षमैतिह्यं । अनुमानचतुष्टयम् । एतै रादित्यमण्डलम् । सर्वैरेव विधास्यते"** ॥

एतैः स्मृत्यादिभिः सर्वैरेव प्रमाणैरादित्यमण्डलं प्रमीयते। यादृगमिदं मण्डलं भवति। यथाच प्रवर्तते। यथावा मन्वन्तरादिभेदभिन्नं कालं प्रवर्तयति। यथाचोदकसृष्ट्यादिना विश्वमुत्पादयति। तत्सर्वं स्मृत्यादिचतुष्टयप्रमाणसिद्धम्। एतैरेव प्रमाणैः क्षण मुहूर्त दिवस पक्ष मासादिरूपाः कालविशेषा अस्माभिर्निश्चीयन्ते वेदाङ्गभूतज्योतिःशास्त्रेण। ज्योतिःशास्त्रे दृक्प्रतीतिनिमित्तप्राप्तबीजसंस्कारो ग्रहणादिषूपयुज्यते न तिथ्याद्यानयने ॥

अत्र केचित् पण्डितंमन्या अर्धजरतीयन्यायमारोपयन्ति। तदपि न न्याय्यम्। कथमिति चेत् "श्रुतिस्मृतिबलाद्बीजं संस्कारो ग्रहणादिषु। न तिथ्यानयने योग्यो युक्तिरत्रापि विद्यते। हलेऽनपेक्षितोऽप्यश्वो रथे यद्वत्प्रयुज्यते। तत्रार्धजरतीयत्वदोषो भवति कर्हिचित्"। योग्यतावशेन एकस्यैव कार्यविशेषेषु अपेक्षानपेक्षयोरुभयोरप्युपपत्तिः। यथा लाङ्गलवहनेऽनपेक्षितोऽप्यश्वो रथवहनेऽपेक्षते तद्वत् बीजसंस्कारो ग्रहणादिष्वेवेति न काचित्क्षतिः ॥

एतेनार्यभट्ट ब्रह्मगुप्त लल्ल श्रीपति भास्करादिभिर्ग्रहमध्याधिकारान्ते बीजकर्म कथमुक्तमिति शङ्काया नावकाशः। मध्यमग्रहेषु संस्कुर्याद्दृग्गणितैक्यसम्पादनार्थमिति सुधीभिर्ध्येयम्। यथा ब्रह्मगुप्त लल्लश्रीपत्यादिभिः स्फुटाध्यायोक्तनतसंस्कारस्तिथ्यानयनात्पूर्वमुक्तोऽपि सूर्य-

चन्द्रग्रहण एवोपयुज्यते द्रष्टुर्भूगोलोपरि स्थितत्वात् । तथैवेति सिद्धम् ॥

तथापि केचिद्विवदन्ते "यस्मिन् पक्षे यत्र काले येन दृग्गणितैक्यकम् । दृश्यते तेन पक्षेण कुर्यात्तिथ्यादिनिर्णयम्" । इति वसिष्ठवचनात् सूक्ष्मेक्षिकया नलिकादिभिः स्फुटैर्यन्त्रैः प्रसाधितदृक्समगणितसिद्धतिथिनैवाविशेषात्सर्वं कर्मानुष्ठेयमिति । तदयुक्तम् । विष्णुधर्मोत्तरोदाहृत "यन्त्रवेधादिना ज्ञात"मिति पूर्वोक्तवसिष्ठवचनेनैव विरोधात् ॥

'संसाध्य स्पष्टतरं बीजं नलिकादियन्त्रेभ्यः ।
तत्संस्कृतास्तु सर्वे पक्षाः साम्यं भजन्त्येव' ॥

इति सूर्यवाक्येऽपि तिथ्यादिसाधनं कुर्यादिति नोक्तम् । 'ध्यानग्रहोपदेशाद्बीजं ज्ञात्वाच दैवज्ञैः । तत्संस्कृतेभ्यः कर्तव्यौ निर्णयादेशौ' । इति ब्रह्मगुप्तवचने वेधस्य चित्तैकाग्र्येण यन्त्रद्वारा ग्रहज्ञानं ध्यानशब्देन उच्यते । एतेन यन्त्रद्वारेणावश्यं बीजं ज्ञात्वा तत्संस्कृतग्रहेभ्यः दैवज्ञैर्ज्योतिःशास्त्रोक्तफलनिर्देशः कर्तव्यः इति स्पष्टमेव । तथाच सिद्धान्तशिरोमणौ—'ज्योतिःशास्त्रफलं पुराणगणकैरादेश इत्युच्यते' ॥ इति ।

'स्थूलं कृतं भानयनं यदेतज्ज्योतिर्विदां सव्यवहारहेतोः ।
सूक्ष्मं प्रवक्ष्येऽथ मुनिप्रणीतं विवाहयात्रादिफलप्रसिद्ध्यै' ॥

इति भास्कराचार्येण सिद्धान्तशिरोमणौ यत् स्थूलसूक्ष्मनक्षत्रगणनया व्यवस्थितं तद् दृक्समासमनिरूपणपरमेव भवितुमर्हति । यथा—उत्तराभाद्रपदस्थस्य चन्द्रमसो रेवत्या संयोगो दृश्यते । एवमन्येषाम् । एवं विशाखा, पुनर्वसू रोहिणी, उत्तरात्रयमिति षण्नक्षत्राणि अर्धाधिकनक्षत्रभोगीनि । तानि विवाहयात्रादिफलादेश एव युज्यते ॥

कारणस्य गुणाः कार्ये सङ्क्रामन्तीति च स्थितम् ।
अतत्प्रकारकं ज्ञानं भ्रम इत्यभिधीयते ॥ ३५ ॥
अम्याभेदेन चक्रस्य भ्रमणं ज्ञातुमर्हति ।
चक्रशब्दश्चक्रकोकद्वन्द्वश्लेषार्थकस्तथा ॥ ३६ ॥
एकवृन्तफलन्यायादभेदाध्यवसायतः ।
तथैव कलशोऽप्यत्र घटस्तनयुगार्थकः ॥ ३७ ॥
वृत्तता चारुतानन्दकारिता पीनतादयः ।
समानधर्मा भान्त्यत्र वर्ण्यावर्ण्यविवेकतः ॥ ३८ ॥
इति विज्ञाय रसिकः तदर्थं भावयेद्यदि ।
काव्यानन्दार्णवे सत्यमुन्मज्जति निमज्जति ॥ ३९ ॥
संक्षेपादस्य तात्पर्यं वर्ण्यते सांप्रदायकम् ।
घटौ भैम्यास्तनौ भूत्वा चक्रभ्रमकरौ यतः ॥ ४० ॥
तल्लावण्यप्रवाहे तु स्वहेतुलगुडोद्भवम् ।
चक्रभ्रमणकारित्वं तत्कार्ये कलशे किमु ॥ ४१ ॥
संक्रान्तमिति चातुर्यादुक्तन्यायविपर्ययात् ।
समवायिगुणस्त्वेषः निमित्तेऽप्युपपादितः ॥ ४२ ॥
समवायिमृदो धर्माः घटे कार्ये लगन्त्वमी ।
निमित्तगुणरूपादिं घटते न तु कुत्रचित् ॥ ४३ ॥
कोकचक्राऽयथाज्ञानभ्रमणार्थद्वयस्य च ।
चक्रभ्रमेतिपदयोरभेधाध्यवसायतः ॥ ४४ ॥
अभेदातिशयोक्त्या च कलशस्तनयोस्तथा ।
झरचक्रभ्रमोत्पादिक्रियाकारणकेऽमुके ॥ ४५ ॥
कुचाभिन्नघटे कार्ये चक्रभ्रामकतागुणम् ।
निमित्तकारणं गृह्णन् तद्गुणस्यानुसंक्रमम् ॥ ४६ ॥

उत्प्रेक्षमाणः श्रीहर्षः नैषधेऽवर्णयत्कविः ।
तथैव जैमिनीयं तत् योजयित्वा महाकविः ॥ ४७ ॥
इन्द्रनारदसंवादे वर्णयामास तद्यथा ।
रक्षोघ्नोपेन्द्रविजयप्रशंसानुप्रसक्तितः ॥ ४८ ॥
विश्वरूपकलनादुपपन्नं
तस्य जैमिनिमुनित्वमुदीये ।
विग्रहं मखभुजामसहिष्णुः
व्यर्थतां मदशनिं स निनाय
उपेन्द्रस्त्वसुरान् हत्वा स्वयं व्यर्थधृताशनेः ।
ममाऽविग्रहमैच्छत्सः जैमिन्याख्यमुनिर्यथा ॥ ४९ ॥
नैच्छद्यज्ञभुजां लोके विग्रहं यज्ञकर्मसु ।
भिन्नदेशेषु युगपत्कृतेष्वेकैकवर्ष्मणाम् ॥ ५० ॥
चन्द्राभमाभ्रं तिलकं दधाना
तद्वन्निजास्येन्दुकृतानुबिंबम् ।
सखीमुखे चन्द्रसमे ससर्ज
चन्द्रानवस्थामिव कापि यत्र ॥
स्वच्छाभ्रतिलकोद्भासि वदनानां तु योषिताम् ।
प्रतिबिम्बितवक्त्रेन्दोः परस्परविलोकने ॥ ५१ ॥
वर्णयत्यनवस्थां हि चन्द्रस्याभेदबुद्धितः ।
लावण्यवर्णनव्याजाच्छक्तिशास्त्रार्थ उच्यते ॥ ५२ ॥
एवं बहुविधाश्शास्त्रमार्गास्सन्दर्शिताः किल ।
शृङ्गारादिरसान्तस्थाः मधुमिश्रौषधोपमाः ॥ ५३ ॥
तत्रोदाह्रियते शान्तहास्ययोरसयोस्तयोः ।
उदाहृतेन मार्गेण रसाश्चोह्याः परे रसाः ॥ ५४ ॥

नाभ्यस्ता भुवि वादिवृन्ददमनी विद्या विनीतोचिता
खड्गाग्रैः करिकुंभपीठदळनैर्नाकं न नीतं यशः ।
कान्ताकोमलपल्लवाधररसः पीतो न चन्द्रोदये
तारुण्यं गतमेव निष्फलमहो शून्यालये दीपवत्" ॥
अनभ्यस्ता मया विद्या वादिनिग्रहकारिणी ।
यशो न लब्धं खड्गाग्रैः गजकुंभविदारिभिः ॥ ५५ ॥
कान्ताधरसुधास्वादो न कृतश्चन्द्रिकान्तरे ।
व्यर्थं गतं हि तारुण्यं शून्यागारप्रदीपवत् ॥ ५६ ॥
इत्थं त्यक्त्वात्मकर्तव्यविमर्शज्ञानयोगिनः ।
वैराग्यजन्यनिर्वेदभावश्शान्तोऽत्र वर्णितः ॥ ५७ ॥
"उदरद्वयभरणभयादर्धाङ्गाहितदारः ।
यदि नैवं तस्य सुतः कथमद्यापि कुमारः" ॥
अर्धनारीश्वरस्यापि कुमारजनकस्य च ।
स्थितिं प्रत्युक्तहेतूक्तिरुदरंभरणार्थिका ॥ ५८ ॥
हास्यसञ्जननीसर्वलोकैश्वर्योपभोगिनः ।
एवं साहित्यमाभाति शास्त्रार्थान् दुर्ग्रहान् किल ॥ ५९ ॥
संगृह्यसुगमान् कृत्वा कान्तासम्मितबोधकृत् ।
व्यावहारिकपौराणलौकिकाद्यर्थबोधकं ॥ ६० ॥
एतदार्षं मतं श्रौतमनादिसमयागतं ।
नेदानींतनमेवेति दृश्यतेहि प्रमाणतः ॥ ६१ ॥
विचारः क्रियते तत्र श्रुतिवाक्यं प्रदर्श्य च ।
पौराणिकोक्तिमुद्धृत्य समुदाह्रियते यथा ॥ ६२ ॥
आम्नायोत्तमपूरुषेड्यपदजा वाल्मीकिपाराशर
श्रीसूक्त्याद्यमरावनिप्रसरणी नानाकवीशोद्धृता ।

विद्वद्भूमिविहारणी त्रिपथगा साहित्यदिव्यापगा
मोहाघःक्षितिवर्तिमर्त्यदुरितप्रध्वांसिनी वर्धतां ॥ ६३ ॥
इत्येव मामिकाबुद्धिस्तत्रोदाहरणं यथा ।
अम्नायपदजन्यत्वं प्रथमंप्रतिपाद्यते ॥ ६४ ॥
उक्तंसम्यगलङ्कार शास्त्रभूत्तमसूरिभिः ।
काव्यस्यलक्षणं तस्य सामाग्रिचाभिवर्णिता ॥ ६५ ॥
"वाक्यं रसात्मकं काव्यं दोषास्तस्यापकर्षकाः ।
उत्कर्षहेतवः प्रोक्ताः गुणालङ्काररीतयः" ।
साहित्यदर्पणेत्वेवं विद्यानाथवचो यथा ॥ ६५ ॥
शब्दार्थौमूर्तिराख्यातौजीवितं व्यङ्ग्यवैभवं
हारादिवदलङ्कारास्तत्रस्युरुपमादयः ।
शोभामाहार्यकीं प्राप्तावृत्तयो वृत्तयो यथा
(नियताक्षरसंक्रान्त रसादिविषयः कृतौ ॥ ६६ ॥
व्यापारोवृत्तिराख्याता विश्वनाथादि सूरिभिः ।
पदानुगुण्यविश्रान्ति श्शय्या शय्यवसम्मता ।
रसास्वाद प्रभेदास्युः पाकाःपाकाइवस्थिताः ॥
प्रख्यातालोकवादियं सामग्रीकाव्यसंपदः ।
गद्यपद्योभयमयं कायं काव्यविदोविदुः ॥
इत्येवं विश्वनाथेन रसलक्षणमीरितं ॥ ६७ ॥
रसास्वादप्रकारश्च रसलक्षणगर्भितः ।
वर्णितस्समया तावत् प्रकृतप्रतिपत्तये ॥ ६८ ॥
सूच्यते नोच्यते किन्तु विस्तारभयकारणात् ।
"विभावेनानुभावेन व्यक्तस्संचारिणातथा ।
रसतामेतिरत्यादिः स्थायीभावस्सचेतसां ॥

सजातीयैर्विजातीयै रतिस्कृतमूर्तिमान् ।
यावद्रसंवर्तमानस्स्थ्यायी भावउदाहृतः ॥
सत्वोद्रेकादखण्डस्वप्रकाशानन्दचिन्मयः ।
वेद्यान्तरस्पर्शशून्यो ब्रह्मास्वादसहोदरः ॥
लोकोत्तरचमत्कारप्राणः कैश्चित्प्रमातृभिः ।
स्वाकारवदभिन्नत्वेनायमास्वाद्यतेरसः ॥
कारणान्यथकार्याणि सहकारीणि यानिच ।
रत्यादिस्थायिनोलोके तानिचेन्नाट्यकाव्ययोः ॥
विभावा अनुभावास्तत् कथ्यन्ते व्यभिचारिणः ।
व्यक्तस्सतैर्विभाद्यैः स्थायीभावोरसस्मृतः ॥"
काव्यस्यफलमानन्दो लौकिकोऽलौकिकात्मकः ॥ ६९ ॥
उक्तस्सम्यगलङ्कार शास्त्रविद्भिस्तुपूर्विकैः ॥ ६९ ॥
" काव्यंयशसेऽर्थकृतेव्यवहारविदेशिवेतरक्षतये।
सद्यःपरनिर्वृतयेकान्तासम्मिततयोपदेशयुजे" ॥
परिवड्ढइ विण्णाणं संभाविज्जइ जसोविसप्पन्दिगुणा ।
सुव्वइ सुपुरुसचरिअंकिन्तज्जेण णहरन्तिकव्वाळावा ॥
तथालोकोत्तरस्यापि नायकस्यानुवर्णनात्" ॥
ईदृक्फलं हि काव्येस्यादितिकाव्यविदां मतम् ।
नायकः परमात्माहिश्रुतिस्तेनप्रकाशिता ॥ ७० ॥
तस्मात्कविस्सएवायं रसात्मापुरुषोत्तमः ॥
'रसोवसैः' 'रसꣳह्येवायं लब्ध्वाऽनन्दीभवति'।
'गणानांत्वागणपतिꣳहवामहे—कविꣳकवीनाम् ॥
इत्यादिश्रुतिवाक्येस्मिन् तैत्तरीयेविचार्यताम् ॥ ७२ ॥
रसः कविश्चसूक्तोऽत्रह्यलङ्काराश्चसन्तिते ।

साहित्यकालस्तस्माद्धिवेदकालसमोभुवि ॥ ७३ ॥
उपमातैत्तिरीयेऽस्मिन् तस्येत्यादिषुरूपकम् ।
रसिकाह्लादजनकं समुल्लसतिसंस्तुतम् ॥ ७४ ॥
'पद्मकोशप्रतीकाशं हृदयं चाप्यधोमुखम् ।
नीवारशूकवत्तन्वीपीताभास्यात्तनूपमा' ॥
'तस्यैवं विदुषोयज्ञस्यात्मायजमानश्श्रद्धापत्नीशरीरमिध्ममुरोवेदिः
आत्मादिर्यजमानादौ रूपितश्चेतरत्रतु ।
छान्दोग्येमथ्यमानस्य दध्नस्सूक्ष्मांशसर्पिषा ॥ ७५ ॥
उद्गच्छताश्यमानस्य अणिमान्नस्यतूर्ध्वगा ।
उपमीयोच्यतेतद्वत् सन्मूलान्वेषणायच ॥ ७६ ॥
प्रदत्तश्शुङ्गदृष्टान्तः तच्छ्रुतावस्त्यलंकृतिः ।
इत्थंतत्रेतरत्रापि विदांकुर्वन्तुपण्डिताः ॥ ७७ ॥
रसादिध्वनिराम्नाये लभतेनात्रसंशयः ।
वाक्यार्थःकाव्यमार्गेणलब्धस्सध्वनिरुच्यते ॥ ७८ ॥
"नायमात्माप्रवचनेन लभ्योनमेधयानबहुनाश्रुतेन ।
यमेवैषवृणुतेतेनलभ्यस्तस्यैष आत्माविवृणुतेतनूंस्वां" ॥
आत्मा यमेववृणुतेलभ्यस्तेनैवतत्वतः ।
वरणीयः प्रियतमोयस्मादतिशयः प्रियः ॥ ७९ ॥
स एवास्य प्रियतमोयथाप्नोति प्रियोत्तमः ।
आत्मानमिति वाक्यार्थात् वरणीयः परः पुमान् ॥ ८० ॥
भातिप्रियतमत्वेन प्रियात्वेनाप्युपासकः ।
उपास्योपासकप्रेम दांपत्यरतिसम्मितम् ॥ ८१ ॥
व्यज्यतेकामुकस्येव प्रथमाभिस्सृतिर्वरा ।
व्यञ्जिता लोकवत्पुंसः परस्यानुग्रहःपरः ॥

सुव्यक्तोऽनन्यभक्तस्य महीयस्त्वं प्रपञ्चितम् ।
एतादृशार्थसन्तानो ध्वनिसन्तानवर्त्मना ॥ ८३ ॥
व्यज्यतेरसभावादि स्स्वतस्सिद्धोत्रभासते ।
रहस्यत्रयसारेऽपि श्रीमद्वेदान्तदेशिकैः ॥ ८४ ॥
कवितार्किकसिंहैस्स्तुश्रुत्यर्थोयं प्रपञ्चितः ।
यथातथाप्रमाणार्थं लिख्यतेशास्त्रसम्मतः ॥ ८५ ॥
"प्रणयिनमिवप्राप्तं पश्चात्प्रियास्स्वसमिन्वतं
महतिमुहुरामृष्टे दृष्ट्वामनौ मणिदर्पणे ।
प्रपदनधनास्संतश्शुद्धैः प्रभुं परिभुजंते प्रसृम-
रमहामोदस्मेरप्रसूनसमैः क्रमैः" ॥
एवमाम्नायसंस्तुत्यपुरुषेव्यपदोद्भवा ।
साहित्यदिव्यगंगा सा वाल्मीक्याद्युक्तिनाकगा ॥ ८६ ॥
शोभतेऽत्रापिपश्यंतु काव्यशास्त्रार्थकोविदाः ।
श्रीमद्रामायणान्तस्थबालकांडे समीरितः ॥ ८७ ॥
श्रृंगारादिरसस्तद्वत् नाटकादिस्समीरितः ।
आदितोरूढ इति यो भाति तत्रोक्तपद्धतेः ॥ ८८ ॥
"वेदोपबृंहणार्थाय तावग्राहयत प्रभुः ।
काव्यं रामायणं कृत्स्नं सीतायाश्चरितं महत् ॥
पौलस्त्यवधमित्येव चकारचरितव्रतः ।
पाठ्ये गेयेच मधुरं प्रमाणैस्त्रिभिरान्वितं ।
रसैश्श्रृंगारकारुण्य हास्यवीरभयानकैः ।
रौद्रादिभिश्च संयुक्तं काव्यमेतदगायतां ॥
सर्वयन्त्रायुधवतीमुपेतां सर्वशिल्पिभिः ।
वधूनाटकसंघैश्च संयुक्तां सर्वतः पुरीम्" ॥

शृङ्गारादिरसाश्चात्र वाल्मीकिमुनिपोदिताः ।
वधूनाटकसंघाश्च वाल्मीकेरादितस्थिताः ॥ ८९ ॥
इत्येव भासतेह्यत्र रूढिसिद्धानुभाषणं ।
कविनाकृतमाभाति ननूतनमिवेरितम् ॥ ९० ॥
अष्टादशपुराणेषु द्वैपायनकृतेषु च ।
आग्नेये कथिता काव्यसामग्रीचात्र सूच्यते ॥ ९१ ॥
शब्दार्थालंकृतीनां तु विवृतिश्चात्र वर्तते ।
प्रतिपत्तिस्स्थिरास्याच्चेन्महतां दृष्टिसात्कृता ॥ ९२ ॥
"स्यादावृत्तिरनुप्रासो वर्णानां पदवाक्ययोः ।
अलङ्करणमर्थानामर्थालंकार इष्यते ॥ (३४३-४४)
तं विना शब्दसौंदर्यमपि नास्तिमनोहरं ।
अर्थालंकाररहिता विधवेव सरस्वती ॥
उपमानाम सायस्यामुपमानोपमेययोः ।
सत्ताचान्तरसामान्ययोगित्वेऽपि प्रवर्तते ॥

(इत्यादि ३३७ अ)

संक्षेपाद्वाक्यमिष्टार्थव्यवच्छिन्ना पदावली ।
काव्यं स्फुरदलंकारं गुणवद्दोषवर्जितं ॥
रत्यादिभाववर्गोयं यमाजीव्योपजायते ।
आलंबनविभावोसौ नायकादिभवस्तथा ॥
विभाव्य ते हि रत्यादि यत्र येन विभाव्यते ।
विभावो नाम सद्वेधाऽलंबनोद्दीपहात्मकः ॥ (
वाग्विद्यासंप्रति ज्ञाने रीतिस्सापि चतुर्विधा ।
पाञ्चाली गौडदेशी च वैदर्भी लठजा तथा ॥

संचारं परितो विधाय सरघास्संगृह्य कालाद्बहो-
रेकैकं मधुनः कणं कथमपि क्षौद्रं विधायादरात् ।
भोक्तुं यावदमूर्मिलन्ति सहसा तावद्बली कोऽप्यमू-
स्संसार्यापरतस्सुसंभृतमिवाशेषं तु भुङ्क्ते मधु ॥ ३३ ॥

आक्रान्तो हरिभिः पुराद्रिरधुना गोमायुभिस्स्थीयते
व्याप्तं वन्यगजैः पुरा विपिनमप्याक्रम्यते सैरिभैः ।
आरामो निबिडः पुरा कलरवैरापूर्यते कौशिकै-
रग्रे कस्य निवेदयामि चरितं दुर्मेधसो वेधसः ॥ ३४ ॥

ये पद्मानि विकासयन्ति दृषदो ये दीपयन्त्यञ्जसा
ये वा संघटयन्ति चक्रमिथुनं भिन्दन्ति येऽन्धं तमः ।
ये वर्षन्ति हिमं जलं च त इमे तिग्मद्युतेरंशवो
विख्याताः क्व विलिल्युरद्य तरणौ याते दिशं वारुणीम् ॥

आसीदत्र पुरा गिरौ गजरिपुर्दुर्वारदोर्विक्रम-
स्त्वं नैवासि तदासि वेत्रविपिने कुत्रापि जीर्णे वसन् ।
अद्यागम्य सृगाल धृष्टवदरे तस्यापि चर्यामहो
ह्यद्यां स्वैरमधिक्षिपन् विहरसे वीतत्रपो दर्पतः ॥ ३६ ॥

चन्द्रे सन्ति गुणास्तमोहतिजनानन्दामरप्रार्थ्यता
कामारातिपुरस्कृतिप्रभृतयो निह्नुत्य तान् विश्रुतान् ।
अङ्कं दोषमुपेत्य तत्र बहुधा हेतून् स्वमेधावशात्
क्रन्दन्तः कवयः कथं न जनदुस्सङ्के पुरोभागिणः ॥ ३७ ॥

दैवादस्तमुपैतु नाम महसामेको निधिर्भास्करः
कालस्कन्धसगन्धमन्धतिमिरं रोदोन्तरं रुन्धताम् ।

साजात्येन धनञ्जयोडुचपलाः कामं स्फुरन्त्वाद्रियै
खद्योतोऽपि सदा मुहुस्स्फुरति यत् तन्मे मनः कृन्तति ॥

उत्पत्तिर्मलयाचले परिचयः प्रायः पटीरद्रुमैः
कृत्यं दुर्वहमेदिनीभरपरिश्रान्ताहिसंजीवनम् ।
कीर्तिः काममितः परं वद जगत्प्राणोऽसि मन्दानिल
क्रूरं ते कथमीदृशस्य हृदयं पान्थेषु चित्रीयते ॥ ३९ ॥

खातं किं नु सरस्त्वया वनभुवि प्रान्तेषु किं शाखिनो
न्यस्ताः किं नलिनी तदन्तरभुवि प्रौढा समारोपिता ।
एष्वेकं च मतङ्गज त्वमपरिज्ञायैव तृष्णाकुलः
पातुं वारि कृतोद्यमस्सकृदहो सर्वं कथं लुम्पसि ॥ ४० ॥

त्वामुद्दिश्य मतङ्गजेन्द्र गणका आधोरणा नैगमा
अध्यक्षा भिषजोऽन्ततः परिजना नचाश्च जीवन्त्यमी ।
एष्वेकोऽपि न वारितोऽत्र भवता कर्णानिलैर्वार्यते
त्वद्दानोदकलालसो मधुकरो दैवं तदीयं त्विदम् ॥ ४१ ॥

त्वद्दानोदकसौरभैः परवशः पुष्पन्धयो भूयसा
त्वत्कर्णानिलताडितोऽप्यशरणस्त्वामेव संसेवते ।
एवं त्वां भजतामुना यदि मृतिस्त्वत्कर्णयोश्चालनैः
प्राप्ता दैववशेन किं फलमितोऽप्येतस्य शंस द्विप ॥ ४२ ॥

द्रव्यैः क्षुद्रपलाण्डुसर्षपवचाप्रायैस्समं संस्तव-
स्सोढव्योऽजनि दुस्सहः कटुरसौ गन्धोप्यमीषां सदा ।
इत्थं त्वं घनसार मा कुरु हृदि क्लेशं भविष्यन्ति ते
तेषामप्यचिराद्गुणास्सुविदितास्सत्यं ब्रुवे विक्रये ॥ ४३ ॥

या विक्रान्तिररण्यधाम्नि विजने पर्याकुले साध्वसात्
क्षुद्रे मेषवराहकुक्कुटकुले संदर्शिताभूत् त्वया ।
तामीषत् प्रकटीकुरु त्वमधुना मा धाव भो जम्बुक
प्राप्तोऽयं मृगयावृकस्सदृगसौ क्रोधात्तरौद्रध्वनिः ॥ ४४ ॥

आकारेण बलेन च त्वमधिकष्षष्ठ्यंशतो मानवात्
तेनैकेन नियन्त्रितोऽसि तदपि स्वीयेऽनभिज्ञो बले ।
इत्थं सत्यपि मेषगोवृषहयप्रायानपेतागस-
स्सत्वान् मर्दयसि द्विपेन्द्र वचसां दूरे हि मौढ्यं तव ॥ ४५

आकारस्तव दुर्ग्रहोऽक्षिवलनैस्त्वं दुर्बलः प्राणिनां
धूमैरेव निराकृतिर्मशक ते साध्या पलालैरपि ।
कर्णाभ्यर्णगतः कटुध्वनिरसौ दंशोऽपि ते दुस्सह-
स्सत्वानां महतामपि क्व पटुता लब्धा त्वयैतादृशी ॥ ४६ ॥

भानोर्ये पतितास्सहैव पतता तेनान्वहं भानवो
ये चान्ये पतनं विशङ्क्य चकिता दूरे निवृत्ताः कराः ।
संप्राप्तेऽभ्युदये द्वयेऽपि सदृशास्तस्याद्य जाता इति
भ्रातर्माकलयेदृशी हि महतां चर्या विचित्रा किमु ॥ ४७ ॥

कोणे क्वापि निलीय वेश्मनि चिरं कस्यापि मार्गं दृशो-
रप्राप्यैव समस्तधान्यनिचयं संचूर्णयन्नञ्जसा ।
अप्राप्योपरतिं पुनश्च सुदृढा भित्तीः क्रमात् पातयन्
धृष्टो मूषिक जीवसि त्वविकलो दैवं तवैवंविधम् ॥ ४८ ॥

पुच्छं पादचतुष्टयं मुखमपि प्रायस्समंते हयै-
स्त्वं निर्णेजकनिघ्न एव न खर क्लेशं महान्तं व्रज ।

निश्शङ्कं प्रविशाद्य राजभवनं राजोचितैस्सैन्धवै-
र्भोगित्वं भज दुर्लभो हि समयस्त्वेतादृशस्तेऽन्यथा ॥ ४९ ॥

किं त्वं केन चिदर्थितोऽसि किमथ क्रीतोऽसि दृष्टोऽसि वा
निर्मुक्तावरणोऽसि वा तदपि तु स्थित्वैव कोणे क्वचित् ।
आमोदैरविशेषमेव हि जनानानन्दयस्यञ्जसा
तत् प्राञ्चः कवयोऽपि ते मृगमद स्तोतुं गुणानक्षमाः ॥ ५०

गावः कामदुघा वनेऽत्र विजने लग्नास्सवत्सा इमाः
पीड्यन्ते श्वसृगालसूकरमुखैस्सत्वैर्मुहुर्निर्दयैः ।
न त्रातुं प्रभवस्तपास्विन इमे दीनाः पुलिन्दाः पुन-
श्शक्ताः कौतुकिनः किमत्र करवाण्यावेदये कुत्र वा ॥ ५१

सह्याः पश्चिमपादघातनिवहास्सह्याश्च रूक्षस्वना-
स्सह्या तैस्सह संस्थितिश्च करभैभूयोऽवमत्यावहा ।
नेत्थं चिन्तय सैन्धव त्वमधुना नात्रास्त्यभिज्ञो जन-
स्तं देशं व्रज यत्र सोऽस्ति न पुनः क्लेशं भज त्वं वृथा ॥

आरभ्यैव जनिं जलैः परिमितैर्यत्नेन संवर्धितो
गेहे क्वापि सुसंस्कृतेऽथ सुचिरं निक्षिप्य संरक्षितः ।
लाल्योऽप्येवमसौ तिलो न समये दत्ते विना पीडनं
यन्त्रैस्तैलमसौ मलीमसतनोः क्षुद्रस्य नैजो गुणः ॥ ५३ ॥

गाढेऽग्नौ विनिपातितोऽपि सलिले संगृह्य निर्मज्जितो-
प्यायस्तोऽपि च ताडनैर्दृढतरैः कृष्टोऽपि यन्त्रैर्भृशम् ।
त्वं गाङ्गेय परिष्कृतोऽपि न निजैर्मुक्तोऽसि दिव्यैर्गुणैः
किं कर्मन्दिषु विश्रुतेष्वपि गुणस्संदृश्यतेऽयं तव ॥ ५४ ॥

आमोदैर्हृदयङ्गमैर्दश दिशोऽप्याच्छादयन् कोऽप्यसा-
वास्ते चन्दनपादपोऽतिशिशिरच्छायोऽभिगम्यो नृणाम् ।
क्रूरा दृष्टिविषा वसन्ति परितस्तं केचिदाशीविषाः
कोऽमुं द्रष्टुमिहोत्सहेत मनसा प्राणेषु लुब्धो जनः ॥ ५५ ॥

कान्तिस्ते तुहिनाद्रिरूढलवलीलीलासमुत्सारिणी
हंसैरेव सहासिकाद्रिसरसीसीमासु साधारणी ।
नीरक्षीरविवेचनेऽपि पटुता यद्यस्ति सत्यं ब्रुवे
त्वं नो हंसकुलाग्रणीर्बक परः कस्तेषु हृद्यो गुणः ॥ ५६ ।

यस्त्वं सिञ्चति वारिभिः प्रतिदिनं नानाविधैर्दोहदै-
रुद्गच्छत्कुसुमं तनोत्यवहितो वन्यद्विपाच्चावति ।
तं मूले दलयन्तमात्तपरशुं चान्यं समं छायया
श्रान्तश्रान्तिमहो तनोति विटपी धातापि नैतादृशः ॥ ५७

नीरक्षीरविवेचकोऽस्मि सुदृशां लीलागतौ देशिकः
ख्यातोऽस्मीति च हंस गर्वमधिकं चित्ते वृथा मा कृथाः ।
तत्राद्ये पटुतां रसस्य नितरामार्द्रस्य पश्याधुना
मत्तस्यास्य मदावलस्य गुरुतां कृत्ये द्वितीयेऽपि च ॥ ५८

काले नूतनवारिदागममनोहारिण्युदात्तैस्स्वनै-
श्चित्ताकर्षिभिरेष नस्सुखयति श्रोत्राणि केकिव्रजः ।
कालेऽस्मिन्नतिदुस्सहैः कटुतरैर्भेकोऽपि कर्णौ नृणां
निश्शङ्कं रटितैर्दहत्यविरतं मृग्यो ह्यभिज्ञो जनः ॥ ५९ ॥

काले क्वापि सरोरुहाण्युपरतान्यास्ते तदा केतकी
हंसा नैव शकुन्तलोकातिलकास्सन्त्याहिनो बर्हिणः ।

छन्नो यामवतीपतिस्स्फुरति हि प्रौढा तटित्सन्ततिः
कस्याद्योपरमेण कस्य विरतिर्भूयात् फलस्य क्षितौ ॥ ६० ॥

तीर्णः प्रागमितौजसा हनुमता यत्नं विनैवोदधि-
र्यद्येतेन भवेद्वलीमुख तदोत्सेको निरस्तार्गलः ।
मर्त्येनैव सता पुरा दशमुखो रामेण वीराग्रणी-
र्नीतो मृत्युवशं कियान् हि न भवेदेतावता नस्स्मयः ॥६१

स्मर्तारो मनुदक्षशङ्खलिखितप्रष्ठास्समाः प्राणिनां
धर्माधर्मविवेचनैकनिरता युक्तं जगद्देशिकाः ।
त्यक्त्वा तानपि तत्प्रदर्शितमहामार्गस्थितान् देशिकान्
दग्धारो भुजयोर्भवन्ति गुरवः प्रायः कलेर्वैभवात् ॥ ६२ ॥

आस्ते कोऽपि मृगाधिपोऽत्र बहुधानेन द्विपाः पातिता
दुर्द्धर्षोऽयमरातिभिर्बलिभिरप्याखेटसन्नाहिभिः ।
इत्यास्ते बहुधा जनस्य हृदये त्वद्विक्रमो जम्बुक
ज्ञात्वैतन्न बहिर्विनिस्सर नचेन्मर्म स्फुटं ते भवेत् ॥ ६३ ॥

प्रागासीदतिविस्तृतस्य विपिनस्यास्यैव नेताहरि-
श्शार्दूल प्रमुखाश्च केऽपि बलिनस्तस्याभवन् किङ्कराः ।
अद्य त्वं प्रभुरस्य जम्बुक तव क्षुद्रा इमे जन्तवः
प्रेष्या योगममुं गुरुश्च न धिया शक्तस्समुत्प्रेक्षितुम् ॥६४॥

किं पातुं सलिलं तवोचितमतिश्रान्तस्य पान्थस्य वा
भूयोऽभ्यर्णगतस्य वृष्टिविरहात् क्लान्तस्य सस्यस्य वा ।
स्नातुं चेन्ननु सन्ति पुण्यसरितो गङ्गादिमा विश्रुताः
किं वालङ्घ्यमहत्त्वमर्णव तव स्यादेष कोलाहलः ॥ ६५ ॥

काले त्वां सलिलार्थिनो जलधरास्संप्राप्य लब्ध्वा फलं
निर्यत्नं कृतपूर्वपुण्यविभवा निर्यान्त्यहो के चन ।
त्वामेवाशरणा गताश्शरणमित्येते गणा यादसां
क्लिश्यन्ते बहुधा गतागतिपरैः क्लिष्टास्तरङ्गैस्तव ॥ ६६ ॥

निर्मज्जस्यसकृन्नदीषु भजसे मौनं दृढामासिकां
लब्ध्वा मीलितलोचनाश्चिरतरं ध्यानैकनिष्ठोऽप्यसि ।
त्वत्तः किं मुनयोऽधिका न हि ततो नूनं त्वमेवाधिको
मीनानामुपसंहृतौ बक न ते सक्तं यदि स्यान्मनः ॥ ६७ ॥

वत्सा गास्तृषिता धयन्ति गृहिणो रुन्धति तान् स्वामिनः
पातारो द्रविणव्ययैरनुदिनं ह्येतत् पुनर्युज्यते ।
अध्वन्याः कतिचिन्निरस्तकरुणास्सर्वस्वनाशादिव
प्राप्तान्तःकरणव्यथाः कुतुकिनो रुन्धन्त्यहो पापिनः ॥६८॥

छायाभिश्शिशिराभिरध्वगजनास्सान्द्राभिराराधिताः
केचिन्मेदुरसौरभैश्च कुसुमैरन्ये परे स्वादुभिः ।
भूयोभिः फलसंचयैः फलमिदं लब्ध्वा फलं जन्मन-
श्चिन्ता चूत किमद्य ते भवतु वा क्षेमं परं वा ततः ॥ ६९

आकृत्या परुषा दलैश्च सदृशा जाताः पिशाचेक्षवो
भव्यैरिक्षुभिरित्ययं तव सखे खेदोऽद्य विश्राम्यतु ।
तत्राद्यो गृहनिर्मितावुपकरोत्येवायतौ प्राणिनां
द्वित्रैरेवदिनैरयन्तु चरमः का वा क्षतिस्तावता ॥ ७० ॥

काकाः के चन मांसलेषु विविधेष्वन्येषु लभ्येष्वपि
प्रायो जन्तुषु तान्विहायमिलिता भूयोऽपि कार्श्यं गतान् ।

श्रान्तान् संचरणेऽपि संप्रति बलीवर्दान्मुहुः कोटिभि-
श्चञ्चूनां दलयन्ति हन्त किमितोऽप्यास्ते परं पातकम् ॥७१॥

सस्यैश्शालिमुखैः कृषीवलजनैर्यत्नेन संवर्धितै-
र्लब्धैर्यत्नबलं विनैव जठरं स्वं पूरयत्वञ्जसा ।
दर्पान्धस्स्मरपीडितो विनिपतल्लब्धासु गोव्यक्तिषु
स्वच्छन्दं विचरत्ययं हि वृषभः पश्यास्य भाग्यं सखे ॥ ७२ ॥

गृह्णन्तो द्रविणं समस्तमकृतप्रज्ञान् दहन्तो नरान्
बाह्वोर्यद्यभजन्त केऽपि गुरुतामभ्यर्थितास्ते तदा ।
अद्रव्यव्ययसंशयं निखिलमप्यङ्गं दहन् प्राणिनां
तैरप्रार्थित एव दावदहन त्वं तेभ्य आद्यो गुरुः ॥ ७३ ॥

कृत्स्नं मूलधनं निवेश्य पदयोर्विश्वस्य सार्धं सुतै-
र्दारैरागतमैहिकेतरफलं लब्धुं सतृष्णं जनम् ।
गृह्णन्तो द्रविणं वचोभिरखिलं व्यामोहकैः केऽप्यहो
कृत्वैनं गणिका इवाद्य विवशं बाह्वोर्दहन्त्यञ्जसा ॥ ७४ ॥

प्रागासञ्जलजन्तवोऽत्र सरसि स्वैरं मिथस्सङ्गता-
स्सर्वे ते गिलितास्त्वयातिबलिना दृप्तेन हीनागसः ।
नैतज्जीर्यति पातकं तव महाग्राह प्रचण्डो परः
प्रत्यर्थी भवितात्र धीवरवरो दृष्टाः कति त्वादृशाः ॥ ७५ ॥

प्रायो वस्तुषु सार एव सुदृढो हेतुर्नृभिस्संग्रहे-
न प्राज्ञैरुपसंग्रहेऽत्र रुचिरं दृष्टान्तमाकर्णय ।
कायः पोत्रिण आदृतोऽपि हरिणा संत्यज्यते यज्ञनै-
स्तेनैवायमनादृतोऽपि करिणः कायो मुहुर्लाल्यते ॥ ७६ ॥

रूपायां पृथिव्यां भूकंपादिनामात्मकं गमनविशेषादिकं कर्म भवति। तत्र पृथिव्यास्तावद्ये प्रदेशाः आभ्यन्तरवस्तुभिर्नुद्यन्ते वा अभिहन्यन्ते वा, तेषु यत्कर्म भवति, तन्नोदनाद्वा अभिहताद्वा, तेषामेव नुद्यमानानां वा अभिहन्यमानानां वा भूप्रदेशानां संयोगात् अनुद्यमानेषु वा अभिहन्यमानेषु वा प्रदेशेषु, नुद्यमानाभिहन्यमानप्रदेशानामुपरिस्थितेषु भूधरादिषु पदार्थेषु, यत्कर्म भवति तत्संयुक्तसंयोगाद्भवति । तत्र नोदनाभिघातजे कर्मणि, नोदनाभिघातौ यथासंभवम् असमवायिकारणम् । संयुक्तजे च कर्मणि संयुक्तसंयोगः। गुरुत्वद्रव्यत्ववेगादयस्तु यथासंभवं निमित्तकारणं। यत्र कर्म सा पृथिवी समवायिकारणमिति विवेकः। अस्मिन्विषये श्रुतिः–

"येषामज्मेषु पृथिवी जुजुर्वां इवविश्पतिः । भियायामेषु रेजते"।

१८. पृथिव्यां गन्धः असाधारणो विशेषगुणः। रूपरसस्पर्शास्सामान्यगुणाः निमित्तभेदाद्भवन्ति । संयोगवियोगपृथक्त्वसंख्यापरिमाणादयः गुणाः सर्वैस्सर्वदा दृष्टचरा एव ॥

## आपः.

२१. "आपश्चाग्नेय संयोगात्समीरणसमुद्भवः" इति आधुनिकैर्यदुद्घुष्यते, तदस्माकमप्यङ्गीकार्यमेव। अनेन विशिष्टयोर्वाय्वोः खल्वापः उत्पद्यन्ते इत्युक्तं भवति । तत्रापि एकस्मिन् वायौ सूक्ष्माणां अपां सद्भावोऽस्ति। प्रक्रिया विशेषात्तु तासामभिव्यक्तिः। अभास्वरशुक्ला आपः। श्रु. "शुक्रास्तान आपःशँस्योनाभवन्तु"। कालिन्दीजलादौ जलस्य आश्रयोपाधिकत्वान्नीलत्वप्रतीतिः। वियद्विकीर्णकालिन्दीजले धावल्यस्योपलंभात्। आपः मधुराः। जंबीरकरवीररसाम्लतिक्तयोः पार्थिवोपाधिकत्वात् । तत्र रसान्तरानुभवः। कषायद्रव्यभक्षणानंतरं माधुर्याभिव्यक्तेः ॥

## षड्रसोत्पत्तिप्रकारः.

(१) सोमगुणातिरेकान्मधुरो रसः.

(२) पृथिव्यग्निभूयिष्ठत्वादम्लः

(३) सलिलाग्निभूयिष्ठत्वाल्लवणः.

(४) वाय्वग्निभूयिष्ठत्वात्कटुः.

(५) वाय्वाकाशातिरिक्तत्वात्तिक्तः.

(६) पवनपृथिव्यतिरेकात्कषायः.

इति षड्रसतत्त्वं। अत्र वाचस्पतिमिश्राः— "गुणभेदाः परिणामतः, सलिलवत्; यथा—विमुक्तमुदकमेकमपि तत्तद्भूतविकारानासाद्य नारिकेळ, ताळी, बिल्व, चिरबिल्व, तिंदुका, आमलक, कपित्थ फलरसतया परिणामात्, मधुराम्ललवणतिक्तकटुकषायतया विकल्पते। एवमेकैकगुणसंभवात् प्रधानगुणमाश्रित्य अप्रधान गुणाः परिणामभेदान् प्रवर्तयन्ति। परिणामैकत्वं च—बहूनामपि एकपरिणामः दृष्टः। तद्यथा—गवाश्वमहिषमातङ्गानां रुमाक्षिप्तानामेकलवणत्वजातीयलक्षणः परिणामः ॥

सांख्यानां यथा—भूतार्थभूतविकारविषये संगाख्यसंयोग विशेषेणैव विकारो भवति, तथामिळितद्रव्यविषये संहतभूतद्रव्येषु तेजस्संयोगाद्विकारो भवति। वैशेषिकानां सजातीयमेवोपादानं। अन्यद्भूतचतुष्टयमुपष्टम्भकं। अनिरुद्धमते आरंभकसंयोगोऽपि, यथा—वायोर्देहारम्भकत्वम्। अन्येषां सांख्यानां, मीमांसक वेदान्तिनामिव सजातीयविजातीयाद्यभेदं विना, मिळितानां भूतानां उपादानकारणत्वं क्वचित्। तत्तद्भूत प्रधानतया तत्तदभिधानव्यवहारः। तथाचोक्तं–"पृथिव्यप्तेजोवाय्वाकाशानां समुदायात द्रव्याभिनिर्वृत्तिः। उत्कर्षस्त्वभिव्यंजको भवति—इदं पार्थिवं इदं आप्यं, इदं तैजसं, इदं वायव्यं, इदं आकाश्यमिति ॥

२२. अतः अनुपाधिका आपः मधुराः । श्रु. "मधुश्च्युतः" शीतवत्यश्च । श्रु. "अमृतयोनिः" 'चन्द्रमा वा अपांपुष्पम्'। आपः शुचयः । श्रु. "हिरण्यवर्णाश्शुचयःपावकाः" । शिवाः—भेषजाः श्रु. "ईशानांवार्याणां क्षयन्तीश्चर्षणीनां । आपोयाचामि-भेषजम्" निवारणार्हपापानां वारणीशाश्च जन्मिनां । वासका-रणभूता वै याचाम्यब्देवताःप्रति । विमुच्य हृदयग्रन्थिं संसारा-र्णवमौषधिं ॥

अपां गुणाः । संयोग, विभाग, पृथक्त्व, संख्या, परिमाण, परत्वाऽपरत्व, गुरुत्व, द्रवत्व, स्नेह, संस्कारादयः । तथैव रूपरस-गन्धस्पर्शाः । तत्र रसो वैशेषिको गुणः । आपः—मृष्टाः विमला लघवश्चेतीतरे वदन्ति । "यदन्तरिक्षात्पततीन्द्रसृष्टं चोक्तैश्च पात्रैः परिगृह्यतेभ्यः । तदैन्द्रमित्येववदान्तिधीरा नरेन्द्रपेयं सलिलं प्रधा-नं" । एवं गुणोपेता आपः प्राणानामभिसराः, रोगाणां नाशका भवन्ति । अपां अन्ये गुणविशेषास्तु, अयुतसिद्धानामुपश्लेषः (Cohesion) युतसिद्धानामुपश्लेषः (Adhesion) । अपां स्थिति-स्थापकत्वं पुनः विभिन्नाकृतिमत्स्वाधारसंयोगजनकक्रियानुकूल-समतलप्रसरणत्वं (Water finds its own level) । विरुद्ध-क्रिययोर्नदी स्रोतसोमूर्छनेनैव (Pressure) पयसां तत्संसृष्टानां च तृणादीनां ऊर्ध्वगमनम् ॥

२३. अपां तिस्रो ह्यवस्था भवन्ति—हिमकरक, रस, बाष्प-रूपाः । (Water exists in three states as solids, liquids and gases) यद्यपि हिमकरकादौ द्रवत्वं नानुभूयते । ऊष्मणा (By heat) विलीने तत्र जलत्वं प्रसिद्धमेव । दिव्यतेजस्संयोगात्तु (Electricity) तत्र द्रवत्वप्रातिविरोधः । काठिन्यप्रतीतिस्तु तत्र भ्रांतिरेव । दिव्यतेजस्संयोगात्तत्र जलपरमाणुभ्यः द्व्यणुकं, तैश्च

त्रसरेण्वादिकं क्रमेण हिमादौ जायते। तादृशेभ्यः हिमकरकादि द्रवत्वरहितं कठिनमेवेति केचित् ॥

२४. अपां कर्म–क्कथनं (Ebulition), विलयनं (Evaporation) वचनं (Effervescence) पवनशक्तिः (Buoyancy).

### वृष्टिः (Rain).

२५. क. सू. ५—२—३. "अपां संयोगाभावे गुरुत्वात्पतनं"

क. सू. ५—२—४. "द्रवत्वात्स्यन्दनं"

मेघगतानां अपां, वायुसंयोगात्कर्मोत्पत्त्या, गुरुत्वधारकतया पतनप्रतिबंधकस्य मेघसंयोगस्य उपरमे सति, प्रतिबंधकाभावात् गुरुत्वात्पतनं भवति। तदेव वर्षणमुच्यते। ननु यन्त्रमन्तरेण भूमिष्ठानामपां अन्तरिक्षारोहणं कुतो जायते?

क. सू. ५. "नाड्यवायुसंयोगादारोहणम्" वायुसंयुक्तास्सूर्यरश्मयः आपः भूमिष्ठास्तावदन्तरिक्षमारोहन्ति ॥

क. सू. ६. "नोदनापीडनात्संयुक्तसमवायाच्च" यथा हि स्थाल्यां क्कथ्यमानमुदकं (Watery vapour) बलिना मारुतेन नुन्नैः तेजोरश्मिभिस्संयोगात् ऊर्ध्वमारोहति, तथा बलिनः मारुतस्य नोदनेन, आपीड्यमानाभिस्सूर्यनाडीभिः संयोगादापः भूमिष्ठास्तावदूर्ध्वमारोहन्ति। तत्रापः समवायिकारणं, आद्यसंयोगः निमित्तकारणं, द्वितीयः असमवायिकारणमिति विवेकः। एतदुक्तं भवति;—

ग्रीष्मे (In Summer) वाय्वभिहतास्सूर्यरश्मय (Sun's rays forced by the air) एव आरोहन्त्यपः (In the form of Vapour)। अन्तरिक्षमारूढाः खल्वापः धूमेन ज्योतिषा वायुना च संसृज्यमानाः मेघभावमापद्यन्ते (Form clouds)। बलवद्वायुनोदनेन आपीडनास्कंदनाद्वायुसंयुक्तास्सूर्यरश्मयः तत्संयुक्ता

आपः ऊर्ध्वं धावन्ति। जले दिव्यज्योतिस्संयोगे सति विद्युत्प्रकाशः (Lightning) ततो विस्फूर्जतुः (Thunder) । तत्समकाल एव-करकापतनं भवति (Fall of Hailstones) क्वचिद्वायुवलाहक संयोग विभागौ निमित्तकारणे। तथाचोक्तम् ॥

क सू. ५-२-७. "अपां संघातो विलयनं च तेजस्संयोगात्"

क. सू ५-२-८. "तत्र विस्फूर्जथुर्लिङ्गम्"

क. सू. ५-२-८. "अपां संयोगाद्विभागाच्च स्तनयित्नोः"

एवमुक्तं भवति । अन्तरिक्षस्थास्वप्सु बलिना दिव्यतेजस्संयोगेन हि (Electrification) सामान्यतो वर्तमानमनुद्भूतरूपवत्तेजोद्रव्यम् (Latent Heat) निस्सार्यते। तन्निस्सरणाच्च तासांद्रागित्येव (Simultaneously) सांसिद्धिकंद्रवत्वम् प्रतिरुध्यते। तत एव ताः परस्परं संहन्यन्ते। संहन्यमानानां च तासां, यदा पुनः भूमौ पूर्वतो विजातीयेन आदित्येन तेजसा (By the influence of Sun's rays) संयोगो जायते, तदा तेनाप्रतिबद्धद्रवत्वात्सत्यः विलीयन्त इति भावः। तत्र वर्षे अपः समवायिकारणम्। गुरुत्वमसमवायि कारणम्। संयोगाभावः निमित्तकारणम्। भूमौ पतितानामपां द्रवत्वात्स्यन्दनम्, स्थलान्निम्नाभिसर्पणं भवति । अस्मिन्वृष्टितत्त्वे, वैदिकमप्यस्ति प्रमाणम् । यथा—ऋग्वेदे-"आपस्सूर्ये समाहिताः" "आपो देवीरुपह्वये-यत्रगावः पिबंति नः। सिन्धुभ्यः कर्त्वं हविः" । यस्मिन्सूर्ये विद्यमाना रश्मयः, भूलोकसंबन्धिभ्यस्समुद्रेभ्यः अपः शुष्यन्ति, ताभ्यः द्युलोके अन्तरिक्षे वैरूप्यंगताभ्यः अद्भ्यः, अस्माकं हविस्साधनभूतधान्यादिकं कर्तव्यं भवेत्। समृद्धवृष्ट्या सस्यादिवृद्धिर्भवति । तद्द्वारा गावः क्षीरप्रदा भवन्तीति तात्पर्यम्। अन्यत्र "सोपः प्राविशत्" इत्यत्रापि सः अग्निः आपः समुद्रादिस्थजलं प्राविशत् सूर्यरश्मिस्थमग्नीरूपमौष्ण्यं वृष्टिसर्जनाय जलधेरुदकमाहर्तुं (शोषितामिति यावत्)

प्रवृत्तं इति ध्वन्यते। "ऋग्वेदे प्रथमाष्टके द्वितीयाध्याये षट्त्रिंशादि वर्गत्रये पञ्चदशाभिः ऋग्भिः कथितः सर्वोऽपि तत्त्वार्थः "सूर्य-किरणैः भूमिस्थजलं यथा आह्रियते, प्रथमं बाष्पो भूत्वा वायु-विशेषेण अन्तरिक्षं प्राप्य तत्र सूर्यवायुशक्त्या मेघरूपं प्रतिपद्यते पुनः तच्छक्त्यैव तदेव जलं वृष्टिरूपेण भूमिं आनीयते" इत्यादिकं सम्यक्प्रतिपादयतीति सुधियो विभावयन्तु। अयमेव गूढार्थः तैत्तिरीय संहितायां तैत्तिरीयारण्यके च स्पष्टतरं प्रतिपादित इति उभयोर्वेदयोर्वृष्टिविषयं प्रति प्रकरणसंगतिः एतादृशेनार्थेन संगच्छते॥

यजुर्वेदेपि "अग्निर्वायुश्च सूर्यश्च। सहसंचस्मरार्धिया" "सवितारं वितन्वन्तम् अनुबध्नातिशाम्बरः" उदकंप्रति (वृष्ट्य-र्थम्) रश्मीन् वितारयन्तं आदित्यं, शाम्बरः स्वानुग्रहार्थं आश्रयते। अन्यत्र "देवावसव्याः" अग्नेसूर्यसोमसपीतयः अपांनपात्। उद्यो-धत्त, उदधिं भिन्त, दिवः पर्जन्यात्पृथिव्याः वृष्ट्याऽवत" तथैव "आपस्ता अग्निं दधिरे सुवर्णम्" अग्निं या दधिरे विरूपाः" अन्यत्र "अग्निर्वा इतो वृष्टिमुदीरयति, मरुतस्सृष्टान्नयन्ति। यदा खलु असावादित्यो रश्मिभिः पर्यावर्तते अथवर्षति"। यजुरार-ण्यके एकोक्त्या—"पृथिव्या अहः, अहनोऽग्निः अग्नेर्वृत्रः वृत्र-स्योष्मा" इत्येकः पक्षः। दिवः रात्रिः रात्र्या आदित्यः, आदि-त्यस्य वैद्युतम्, वैद्युतस्य नीहारः" इत्यन्यः पक्षः। "तौतावेव प्रतिपद्येत" इत्यनेन ऊष्मनीहारयोस्संयोगे वृष्टिर्भवतीति, रूप कस्य ध्वनिस्सूचितः। (Rain is formed by natural proces-ses of evaporation and distillation)। अन्यत्र "आदित्य रश्मिषु जलं संगृहाण" तथैव "आदित्ये चन्द्रवर्णानां गर्भमा-धेहि"। शतपथब्राह्मणे एतद्वृष्टितत्त्वं सुस्पष्टं निरूपितम्। 'अग्नेर्वै धूमोजायते, धूमादभ्रं, अभ्राद्वृष्टिः' छान्दोग्योपनिषदि च

"अभ्रं वा अपां भस्म'। धूमो भूत्वा अभ्रं भवति। अभ्रं भूत्वा मेघो भवति। मेघो भूत्वा वर्षति"। मनुः—"आदित्याज्जायते वृष्टिः। वाल्मीकिः—"पायत्येष तपत्येष वर्षत्येष गभस्तिभिः" काळिदासोऽपि—"धूमज्योतिस्सलिलमरुतां सन्निपातः मेघः" अन्यत्र "सहस्रगुणमुत्स्रष्टुमादत्तेहि रसं रविः" स एवान्यत्र— "सौरीभिरिव नाडीभिरमृताख्याभिरम्मयः" ताः नाड्यः— आनन्दाः, मेध्याः पूतनाः, नूतना इति चतुर्विधा भवन्ति। तासां सङ्ख्याश्च—"तासां शतानि चत्वारि रश्मीनां वृष्टिसर्जने। शत-त्रयं हिमोत्सर्गे तावद्गर्भस्य सर्जने। चतुश्शतं वृष्टिर्वाहास्ता सर्वा अमृतास्स्मृताः"॥

२६. मेघमंडलस्थास्वप्सु दिव्यतेजस्संयोगसद्भावे प्रमाणं "तत्र विस्फूर्जथुर्लिङ्गम्" इति कणादमुनिना दर्शितम्। तत्र वैदिकम् प्रमाणम् "गर्भो यो अपाम्" (ऋ. अ. १. अ ५. व २४. मं २.) "अग्ने गर्भो अपामासि" (य. वे. अ १२. म ३७.) "अपां संयोगाद्विभागाच्च स्तनयित्नोः" इत्यनेन कणादसूत्रेण अप्तेजसो-र्मिथस्संयोगसंबंधात् विभक्तेश्च विस्फूर्जथोरुपजनिर्भवतीत्युक्तम्। तत्र अकाशं समवायिकारणं, तेजस्संयोगविभागौ च आकाशेऽ-समवायि कारणम्। अद्भिश्च तौ निमित्तकारणे इति विवेकः। विद्युत्सूर्यतेजोरूपा मेघवर्तिनी। (Lightning is a peculiar from of Sun's rays) अत्र श्रुतिः—"रोहिणीवसिष्ठयोः पुत्रः एवं वदति "कोऽन्तरिक्षे शब्दं करोति?" स एव "वाश्रेच-विद्युत्" इति स्वयमेव समाधत्ते। अन्यत्र "विद्युत्सूर्ये समाहिता" अद्भिस्तनयित्नोस्संयोगविभागौ निमित्तकारणे भूयः शब्दं गर्जितं जनयतः॥"

२७. (क. सू.) अस्मिन्प्रकरणे वृक्षतत्त्वमपि किञ्चिद्विचार्यते। "वृक्षाभिसर्पणमित्यदृष्टकारितं" वृक्षमूले निषिक्तानामपां यद्वृक्ष-

मभितः सर्पणम् तज्जीवादृष्टैः कारितम् (Soul) (अदृष्टं शक्तिविशेषः) यस्य हि जीवात्मनः (Soul or life) पत्र, काण्ड, पुष्पफलादिवृद्धिकृतेन सुखेन भवितव्यं, तददृष्टकृताच्छक्तिविशेषात्, मूलमारभ्य यावदग्रं सिरासंतानः अपां—पार्थिवरसानाम् (Manure) आकर्षणं करोति (Takes up or absorbs) तेनैव वृक्षो जीवति (Lives) नान्यथाजीवेत् अतोऽदृष्टकारितं अपां वृक्षाभिसर्पणं कर्म। तत्र आपः समवायि कारणम्। अदृष्टवदात्मसंयोगः असमवायिकारणम्। अदृष्टं निमित्तकारणम्। अनेन कर्मणा आपः ऊर्ध्वं गत्वा वृक्षं वर्धयन्ति ॥

वृक्षादयोपि शरीरभेदा एव एव (Trees are different forms of bodies), भोगाधिष्ठानात् (Substratum for enjoyment)। न खलु भोगाधिष्ठानमन्तरेण, जीवन (Existence) and मरण (Death), स्वप्न (Sleep), जागरण (Wakefulness), भेषजप्रयोग (Treatment by medicine), बीज (Seed) सजातीयानुकूलोपगम (Attracting like things), प्रतिकूलापगमादयः (Repelling the unlike things etc.,) सम्भवन्ति। वृद्धि (Growth) क्षत (Injury), भग्न (Losing energy) संरोहणे च (Recovery), भोगोपपादके स्फुटोप्यस्त्यागमः " नर्मदातीरसंभूताः सरळार्जुनपादपाः। नर्मदातोयसंस्पर्शात्ते यान्ति परमां गतिं। तथा अतिचेष्टावत्त्वम् (Much activity), इन्द्रियवत्त्वंच (Possessing senses) उद्भिदां (Vegetation) न स्फुटतरं। अतो न शरीरव्यवहारः। (So they are not considered as regular bodies)। वृक्षतत्त्वेऽपि (Botany), वृक्षाः ऊर्ध्वस्रोतसः (Having circulation upwards) तमः प्रधानाः (possessing inertia), अव्यक्तचेतनाः (Life not fully manifested), अन्तस्पर्शमेवजनन्ति (feel all sensations only inwardly). अन्ये वृक्षचिकित्सादिविषयाः

,जेवब्रुः । तत्र विशषरूपेणेति व्याख्यायां विशब्दघटितस्थित-
शब्दप्रयोग एव स्वारस्यं प्रतिस्फुरति । अत एव भाष्योत्कर्षदीपि-
काकारः "धिष्ठित इतिपाठस्तु श्रीमद्भिराचार्यैः अनादृतत्वात्
अपपाठ" इति निनिन्द । एवमेव आनुशासनिके ३४ अध्याये "इन्द्र-
द्विष्टेन यजत मामनाहूय धिष्ठितं" । १६९ अध्याये "मध्य उत्तरत-
स्तात दक्षिणामुख निष्ठितं" "विष्ठितं जगत्" इत्यादयः प्रयोगाः
बहुषु स्थलेषु परीक्षकैः द्रष्टव्याः । इत्थं च सर्वं प्राणिजातहृदये
जीवरूपेण अन्तर्यामि रूपेण च विशेषेण अभिव्यक्ति स्फोरणार्थं
भगवद्गीतायां विष्ठितशब्दप्रयोगः स्वारसिकः प्रामाणिकश्चेति
राद्धान्ते उररीकृते शर्मण्यदेशविचक्षणसरण्यनुसरणेन धन्यं-
मन्यानां धिषणधिषणानामपि उपहसतां आधुनिकसुधियां प्रामा-
णिकप्राचीनपाठेषु स्वकपोलकल्पितदोषमाविष्कुर्वतां सर्वज्ञदेशीय
आचार्यसूक्तिषु अश्रद्धधानानां व्याहाराः नीरसाः अम्बरप्रसूनायन्ते
इति वेदितव्याः ॥

इत्थमेव केचन नव्याः अणकोत्प्रेक्षकाः सर्वज्ञं श्रीगौडपादा-
चार्यं बौद्ध इति बुद्धमतावलंबीति च निश्शंकं निर्लज्जं जल्पन्ति । तेषां
युक्त्याभासान् गगनप्रसूनतल्लजकल्पान् पुरस्तात् प्रदर्शयिष्यामि ।
मांडूक्योपनिषद्व्याख्यारूपे अलातशांतिप्रकरणे "ज्ञानेनाकाश-
कल्पेन धर्मान् यो गगनोपमान् । ज्ञेयाभिन्नेन संबुद्धः तं वन्दे द्विपदां
वरम्" ॥ इति मङ्गळपद्यप्रेक्षणावसरे ज्ञानज्ञेययोः अभेदः, द्विपदां
वरं, संबुद्धः, धर्माणां गगनोपमत्वं, उत्तरश्लोके देशितः तं नमाम्यहं,
जातिस्तु देशिता बुद्धैः, इति द्विचत्वारिंशत् श्लोकस्थ बुद्ध-
देशितेत्यादि पदप्रयोगबाहुल्यं, "नैतत् बुद्धेन भाषितं" इत्यादिना
बौद्धसिद्धान्त सांकर्याशंकनं, इत्येवमादीनां बौद्धशास्त्रपरिभाषि-
तानां अर्थानां प्रतिपादनात् अयमाचार्यः बौद्धमतावलंबीत्यनुमि-

मीमहे इति । तत्र द्विपदां वरं इत्यनेन पुरुषोत्तमरूपः अर्थ
आचार्यस्य अभिप्रेतः मनुष्यवाचकद्विपात् शब्दः बौद्धसमय एव
आदृतः नान्यत्रेति स्वकपोलकल्पितसरणिः अवद्यैव । यतः ऋग्वेद
अष्टक १ "यथा शमसत् द्विपदे चतुष्पदे विश्वंपुष्टं ग्रामे अस्मिन्"
ऋ. अ. ५ "शन्न एधि द्विपदे शंचतुष्पदे" ऋ. अ. ८ "शर्मयच्छत
द्विपदे चतुष्पदे । शन्नो अस्तु द्विपदे शंचतुष्पदे" इत्यादि ऋग्यजु-
र्वेदस्थ मंत्रेषु द्विपदमिति प्रयोगाः शतशः उपलभ्यन्ते । तथा पंचम-
वेदस्वरूपे महाभारतेऽपि वनपर्वांतर्गत नळोपाख्याने "नैषधो
द्विपदां वरः" इति वनपर्व५४अध्याय "श्रेष्ठानियानि द्विपदां वरिष्ठ"
१८९ "द्विपदां वरिष्ठं" आदिपर्व "यत् क्षत्तुस्समीपेद्विपदांवर"
५१ अ. कर्णपर्व. 'यदिवाद्विपदां श्रेष्ठद्रोणमानय" २२ अ. हरिवंश
१३२ अध्याय श्लोक. ८८ "इत्येष विधिरुद्दिष्टो मयाते द्विपदां वर
"काश्यपो द्विपदां वरः" आदि ५१ एवमादयः मनुष्यवाचका
द्विपात् शब्दाः सहस्रशः प्रयुज्यंते । एवं सति बौद्धेष्वेव
द्विपात् शब्दः परिभाषितः नान्यत्रेति वेदशास्त्र अनवलोककान
अक्षुण्णप्राचीनसंप्रदायायातसूक्तिनिवहानां जल्पितानि प्रलोभक
पक्षकुक्षिनिक्षिप्तान्येवेति दक्षाः अध्यवस्यंति । यत्तूक्तं "जातिस
देशिता बुद्धैः" इत्यादि श्लोकेषु विद्वदर्थक बुद्धशब्दप्रयोग
बौद्धसमय एव नान्यत्रेति भाषितं भषकभषणकल्पम् । महाभार
भगवान् वेदव्यासः शांतिपर्वणि अनुशासिकपर्वणि च बुद्धश
बहुधा प्रायुङ्क्त । तथाहि—शां. २९१. अ. "इति बुद्धिगतीतिःसर्वा
व्याख्याता यावतीरिह । एतत् बुद्ध्वा भवेत् बुद्धः किमन्य
बुद्धलक्षणं ।" इत्यारभ्य—"इतीदं हृदयग्रार्थिं बुद्धिचिंतामयं दृढं
विमुच्य सुखमासीत विशोकः छिन्नसंशयः" इत्यन्तं प्रदर्शि
संदर्भे बौद्धाः प्रत्ययाः तन्नाशोपायश्च बुद्धलक्षण कथनपूर्वकं तेनै

भगवता निरूपिताः। तत्रैव वसिष्ठ कराळ जनक संवादे बुद्धाबुद्ध-स्वरूपं विविच्य प्रदर्शितं—"षड्विंशेन प्रबुद्धेन बुद्ध्यमानोह्यबुद्धिमान्। एवं नानात्वमित्युक्तं सांख्यश्रुतिनिदर्शनात् ॥ एकत्वं वै भवत्यस्य यदाबुद्ध्यानबुद्ध्यते। बुद्ध्यमानोऽप्रबुद्धेन समतां याति मैथिल ॥ एष ह्यप्रतिबुद्धश्च बुद्ध्यमानश्च तेनघ। प्रोक्तो बुद्धश्च तत्वेन यथा श्रुति निदर्शनात् ॥ नानात्वैकत्वमेतावत् द्रष्टव्यं शास्त्रदृष्टिभिः। मशको दुंबरे यद्वत् अन्यत्वं तद्वदे तयोः ॥ मत्स्योदके यथा तद्वत् अन्यत्वमुपलभ्यते। एवमेवावगन्तव्यं नानात्वैकत्वमेतयोः। सोयमेवं विमुच्येत नान्यथेति विनिश्चियः। परेण परधर्मा च भवत्येष समेत्य वै। विशुद्धधर्मा शुद्धेन बुद्धेन च स बुद्धिमान्। विमुक्त धर्मा मुक्तेन समेत्य पुरुषर्षभ। विमोक्षिणा विमोक्षश्च शुद्धधर्मा शुचिस्त्विह। केवलात्मा तथाचैव केवलेन समेत्य वै। स्वतंत्रश्च स्वतंत्रेण स्वतंत्रत्वमवाप्नुते। एतावदेतत्कथितं मया ते, सनातनं ब्रह्म विशुद्धमाद्यं"। इत्यन्तं ब्रह्मणः नित्यशुद्ध बुद्ध मुक्तस्वरूपत्वं भीष्माचार्येण प्रतिपादितम्. आग्नेयपुराणेपि ३७५ अध्याय. "नित्यशुद्धबुद्धमुक्तं सत्यमानन्दमद्वयम्। ब्रह्माहमस्मि अहं ब्रह्म परं ज्योतिः विमुक्त ओं"। इति भगवान् वेदव्यासः प्राह। वेदान्तशास्त्रेपि श्री शंकराचार्याः जिज्ञासासूत्रस्थ भाष्ये ब्रह्मशब्दस्य व्युत्पाद्यमानस्य नित्यशुद्धबुद्धमुक्तत्वादयो अर्थाः प्रतीयन्ते. बृहतेः धातोः अर्थानुगमात् इत्यूचिरे. इमे श्री वेदव्यास भीष्माचार्यप्रभृतयः बुद्धशब्दप्रयोगमात्रेण बौद्धमतावलंबिनः यदास्युः तदा गौडपादाचार्याः अपि बौद्धमतावलंबिनः भवेयुः. यच्चाप्युक्तं "देशितः देशना इत्यादयः शब्दाः देशना लोकनाथानां सत्वाशयवशानुगाः। भिन्ना हि देशना भिन्नाशून्यताद्वयलक्षणं" इत्यादि बौद्धग्रंथेष्वेव प्रसिद्धाः न तु शास्त्रान्तरेषु

बौद्धपरिभाषितानां देशित इत्यादि शब्दानां अलातशान्तिप्रकरणे बहुळं उपलंभात् बौद्धमतावलंबित्वं इति. तत्राप्युच्यते---देशितः देशना इत्यादयः शब्दाः बौद्धैरेव प्रयोक्तव्याः नान्यैः इति किं राजाज्ञा जागर्ति? देशितः आदेशितः देशना उपदेशः इत्यादयः समानार्थकाः शब्दाः प्राचीनेषु ग्रंथेषु प्राचुर्येण दरीदृश्यन्ते. महाभारते शांतिपर्वणि अ. ३३ श्लो. २२. प्राणात्यये तथा ज्ञानात् आचरन् मदिरामपि। आदेशितो धर्मपरैः पुनस्संस्कारमर्हति। इति. क्वचित् देशित इत्यपि प्रयोज्यते. तद्वदेव देशितस्तंन-मास्यहं इति गौडपादाचार्यैः अभिहिते देशितः इत्यादि स्वाभिष्टे प्रयोगे कोयमधुनातनानां विमर्शकानां निर्बन्धः? बौद्धग्रंथेषु विद्यमानाः शब्दाः उपनिषदादिग्रंथेषु न वर्तन्त इति भाषितुं प्रभवः नोपलभ्यन्ते। यतः भगवन् इति समानार्थकः भगवः इति शब्दः अधीहि भगवो ब्रह्मेति "कथं नु भगवः स आदेशः" "सोहं भगवः शोचामि" इत्यादि छान्दोग्यादिषु वेदान्तेषु प्रसिद्धः बौद्धग्रंथेष्वपि "पृथिवी भगवः किं सन्निश्रया" इत्यादि ग्रंथस्थः भगव इति शब्दः बौद्धग्रंथेभ्यः आकृष्य उपनिषत्सु पठिताः उत उपनिषद्भ्यः समाकृष्य बौद्धैः स्वग्रंथेषु समावेशिताः इति विचिकित्सायां कीदृशं समाधानं उररीक्रियते तदेव समाधानं बुद्धदेशितादि पदप्रयोगेपि अभ्युपगन्तव्यं, इत्थमेव उपनिषत्प्रसिद्धाः माया अविद्या वासना इत्यादयः शब्दाः "इन्द्रो मायाभिः पुरुरूपर्यीयते" ऋग्वेद—मायाभिरिन्द्रमायिनं त्वं शुष्णमवातिरः" "मायान्तु प्रकृतिं विद्यात् मायिनं तु महेश्वरम्'-इत्यादि मंत्रेभ्यः समाकृष्य बौद्धाः स्वग्रन्थेषु वैदिकशब्दसमान् शब्दान् प्रयुञ्जते इति हि वस्तु स्थितिः। अत्रापि नव्यविमर्शक-धुर्याः बौद्धग्रंथस्थमायादिशब्दान् ऋषयः वेदेषु संग्रथ्य प्रावोचन्

इति निश्शंकं जल्पन्ति नूनं. अनेन मायावादः बौद्धसंमतः नत्वौ-पनिषदपरिगृहीतः इति जल्पनं फल्गूकृतम्. यतः ऋग्वेदादिषु बौद्धसमयात् प्राक्कालिकेषु मायादि शब्दाः शतशः श्रूयन्ते. तथाहि—"पतङ्गमुक्तमसुरस्य मायया" "तम आसीत् तमसा गूळ्हमग्रे" "चतुष्कपर्दायुवतिस्सुपेशा" "स्वर्भानोरधयादिन्द्र-मायाः" इति बह्वृच. "भूयश्चांते विश्वमाया निवृत्तिः" "मम-माया दुरत्यया" "संभवाम्यात्ममायया" इत्यादि प्रमाणग्रंथेषु "मायात उद्यदपि यत्सादिवावभाति" "तद्विद्यादात्मनो मायां" "मायया चित्रकारिण्या विचित्रगुणशालिया" इत्यादि पुराणग्रंथेषु च मायावादः श्री वेदव्यासपूज्यैः आदृत एव. एवं विवर्तवादोपि वैदिकपरिगृहीतः. श्री शंकराचार्येभ्यः प्राचीनेन प्रभाकरगुरुणा निर्मिते बृहत्याख्य मीमांसाग्रंथे ११३ पृष्ठे "अविद्या मातृकेयम् अत एव अविद्येत्युच्यते. तस्माद्विवर्तवाद एव आश्रयणीयः तत्त्वविद्भिः वैदिकै'रिति—प्रतिपादितः, वैय्याकरणमूर्धन्यः परम-प्राचीनः भर्तृहरिरपि स्वग्रन्थे वाक्यपदीये विवर्तवादमुररीचकार. "अनादिनिधनं ब्रह्म शब्दतत्वं यदक्षरं। विवर्ततेऽर्थभावेन प्रक्रिया जगतो यतः। असत्योपाधिभिः शब्दैः सत्यमेवाभिधीयते। असत्ये वर्त्मनि स्थित्वा ततस्सत्यं समीहते'। इति। वैदिकः महाकविः भवभूतिरपि "ब्रह्मणीव विवर्तानां क्वापि विप्रलयः कृतः" इति तत्ववित्संमतं वैदिकं विवर्तवादमेव स्फोरया-मास. एवं च वेदवादिसंमतं विवर्तवादं बौद्धाः पर्यगृह्णन् न तु बौद्धशास्त्रेभ्यः विवर्तवादः मायावादश्च वैदिकैः स्वीकृतः. यच्चा-न्यदप्युक्तं "ज्ञेयाभिन्नेन ज्ञानेनेति कथनात् बौद्धसिद्धान्तानुसरणं आचार्याणां समापन्नं" इति. तदपि अज्ञान मोह विजृंभितं तथाहि—बौद्धेषु विज्ञानवादिनः योगाचारस्य मते ज्ञानस्य विषय-

सारूप्यं सयुक्तिकमभ्युपगम्य विषयविषयिणोःसहोपलंभनियमात् अभेदः स्थापितः स एव दिङ्नागाचार्येण "यदन्तर्ज्ञेयरूपं तत् बहिर्वद्वभासते। सोर्थो विज्ञानरूपत्वात् तत्प्रत्ययतयापि च" इत्यादिना विशदीकृतश्च तादृशं सिद्धान्तं "नाभाव उपलब्धेः" "क्षणिकत्वाच्च" "सर्वथानुपपत्तेः" इत्यादि बादरायणसूत्रानुसारेण श्री भगवत्पादाचार्याः बृहदारण्यकभाष्ये वेदान्तसूत्रभाष्ये च महता परिकरेण संयुक्तिकं खण्डयामासुः। तादृशासिद्धांतानुसारेण तत्परमगुरूणां उपर्यारोपयितुं न सांप्रतं. इयान् अस्ति विशेषः। बौद्धाः व्यवहारदशायां विषयविषयिणोः अभेदं सिद्धान्तयन्ति. औपनिषदाः पुनः "अनादिमायया सुप्तः यदा जीवः प्रबुध्यते. अजमनिद्रमस्वप्नमद्वैतं बुद्ध्यते तदा"। "मायामात्रमिदंद्वैतं अद्वैतं परमार्थतः, ज्ञाते द्वैतं नविद्यते" "तस्मादद्वयता शिवा" इत्यादि माण्डूक्योपनिषत्प्रमाणानुसारेण मुक्त्यवस्थायां केवलं अद्वैतात्मानुभवं प्रदर्शयन्ति. योगिनोऽपि निर्विकल्पक समाधौ त्रिपुटीराहित्येन आत्मनः कैवल्यं "तदा हि द्रष्टुः स्वरूपेणावस्थानं"—इत्यादि सूत्रात् प्रदर्शयंति. 'अनुभवमपह्नोतुं ब्रह्मणापि न शक्यते' इतिन्यायेन मुक्त्यवस्थायां समाधौ सुषुप्त्यादिषु च केवलमद्वितीयानुभवः इतिस्फोरणार्थं ज्ञेयाभिन्नेन ज्ञानेनेति प्रतिपादितं न तु व्यवहार दशायां बौद्धवत् इति मेरुसर्षपयोरिव महदंतरं वर्तते. एतेन बौद्धकिंकराः शांकराः इत्यादि कुत्सितोक्तिः कस्यचित्, उपेक्षार्हैव इति तत्वपरिशीलनधुरीणानां विचक्षणानां स्वत एव परिस्फुरतीति. श्रीगौडपादाचार्याः पुनः श्रीशंकराचार्याणां परमेष्ठिगुरवः श्रीवेदव्यासपुत्रस्य शुकाचार्यस्य शिष्याश्च. एते महात्मानः बदरिकाश्रमे नरनारायण क्षेत्रे बहुकालं तपश्चर्यया परितुष्टात् पुरुषोत्तमात् नारायण ऋषेः

ब्रह्मविद्यां परिजगृहुः. श्रीमान् नारायण ऋषिरेव ब्रह्मविद्यां हिरण्यगर्भादिभ्यः उपादिदेशेति "यो ब्रह्माणं विदधाति पूर्वं यो वै वेदांश्च प्राहिणोति तस्मै" इत्यादि श्वेताश्वतराणां मंत्रोपनिषदि श्रूयते. तथा महाभारतेपि शांतिपर्वणि २१२ अध्याये "अनाद्यं तत्परं ब्रह्म न देवा न ऋषयो विदुः । एकस्तद्वेद भगवान् धाता-नारायणःप्रभुः" तथा २१९ अध्याये "निवृत्तिलक्षणं धर्मं ऋषि-र्नारायणोऽब्रवीत् । प्रवृत्तिलक्षणं धर्मं प्रजापतिरथाब्रवीत् । प्रवृत्तिः पुनरावृत्तिः निवृत्तिः परमागतिः । भेदवस्तुत्वभेदेन जानाति स यदा पुमान् । तदापरं, परात्मासौ भवत्येव निरंजनः । इति. एवंच" नारायणं पद्मभुवं वसिष्ठं" इत्यादि गुरुपरंपरायां तरळमणिव-त्प्रकाशमानात् जीवन्मुक्तपरमभागवतशुकाचार्यशिष्यान् आम्ना-यीकृतमांडूक्योपनिषत्कारिकान् गोविंदभगवत्पादाचार्यस्य सा-क्षात् गुरून् बौद्ध इति बुद्धमतावलंबीति च निरपत्रपं निश्शंकं गदितुमसांप्रतमिति सुधिय एव स्वयं स्वांते समालोचयंत्विति सविनयमावेद्यते ॥

---

## अब्दुर् रहिम् खान् खानानस्य संस्कृतप्रियता.

मध्ययुगे ये केचन मुसलमानमनीषिणः भारतीय भावभाषा धारयानुप्राणिताः, तेषु रहिमखान्खानानेकतमः । स च सम्राद् अकबरस्नेहानुग्रहावेष्टनेन वर्धितः अरबी, पार्सी, तुर्की, हिन्दी, ऊर्दु, संस्कृतभाषासु व्युत्पन्नो यथैव, तथैव राष्ट्रपरिचालने, सैन्य-संचालने च विचक्षणस्समास । अहमादबाद्समरे स्वल्पसैन्यसा-न्निध्येनैव बहुविद्रोहिदमनमकार्षीत् । तेन सन्तुष्टः सम्राद् "खान् खानान्" (अयं च तुर्कीशब्दः—अर्थः, Lord of Lords) इति विरुदमदात् । स तु निजजीवने बहुकृच्छ्रमनुबभूव । कदाचिद्रहिमः तत्सूनुश्च कारागारं नीतौ । महबत्खान् तदा तत्पुत्रं दराबखानं

हत्वा तमाच्छाद्य रहिमसकाशं प्रेषितवान्। धीरवरो रहिमः तदा-वरणमुन्मुच्य कुमारस्य च्छिन्नमुण्डमवलोक्यैवमगादीत् "तरबूज शहीद् हयाय"! (महोद्देश्येनोत्सृष्टासुः) ॥

एवमादिकष्टां दशामापन्नस्स संसारे विगतस्पृह अतीन्द्रिय-जगदन्वेषणायां व्यापृतः अन्ते संस्कृतभाषामेव शरणं प्राप। क्रमेण स रामचन्द्रे निरवधिकभक्तिरन्नवत्। तद्विषय एव हिन्दीभाषायां कविताः लिलेख। तत्र प्रायस्संस्कृतशद्वा एव प्रयुक्ताः। 'मदनाष्टक' मिति किंचित्कवितागुच्छं दृष्टिपथमायाति। तत्र कीदृशी कृष्णभक्तिरभिव्यक्ता पश्यत—

"शारदनिशीनिशीथे, चान्दूकीरोशनई।
सघनवननिकुञ्जे कानु बंशी बाजायी ॥
रतिपतिसुतनिद्रा साहियाछोडी भागी ॥
मदन सिरसि भूयः क्यावला अने लगी" ॥

"शारदीया रजनी, निशीथिनी गभीरा, चन्द्रालोकः समन्तादावृतः, कानु (कृष्णः) वंशीं ननाद, राधा निद्रां परितत्याज, स्वामिशय्यां परित्यज्यैवमगादीत् "हे मन्मथ! किमेतादृशं दुर्दैवमदाः?"

रहिमस्य विशुद्धसंस्कृतवाण्या विरचितः अनुपमसुषुमा-मण्डितः कश्चन श्लोकः भावसारल्यपूर्णो वर्तते। स चायम्—

"रत्नाकरोऽस्ति सदनं गृहिणी च पद्मा
किं देयमस्ति भवते जगदीश्वराय।
राधागृहीतमनसे मनसे च तुभ्यं
दत्तं मया निजमनस्तदिदं गृहाण ॥"

...करः भवदीयं सदनं, रमैव त्वदीया रमणी, किं देयं भवते? त्वं हि जगदीश्वरः, तथापि तव मनः केवलं त्वदीयं न, तच्च यतो राधायै दत्तवान्, तस्मादास्माकीनं मनः भवते अदाम्। ...व त्वं गृहाण!

प्रगाढानुभूतिः कथमत्र परिस्फुटा परिभावयन्तु !!

---

बाह्यावस्थाविनापीच्छां भिन्ना भवति । यथा धावन् पुरुषो गृहकोण-क्षिप्तमरक्षितं धनमकस्मात् स्मरन्नबुद्धिपूर्वं तत्क्षणमेव निश्चलस्तिष्ठति । अत एवैकाग्र्यस्याऽवश्यकबाह्यनिश्चलत्वम् । बाह्याबाधतासंपादनाय भूशुद्धिरासनशुद्धिः यमनियमादयः शुचिदेशस्थितिस्नानशुभ्रवस्त्रधारणा-दयो विधीयन्ते । आन्तरशुद्ध्यर्थं भूतशुद्धि–खशुद्धि–हंसमन्त्र–प्राणा-यामप्रत्याहारादयो विधीयन्ते । तत्र प्राणायामो नानाविधः । वैष्णवः प्राणायामस्तु गायत्रीप्राणायाम इतिं यावत् सुलभः । तथा च ॥

"सव्याहृतिं सप्रणवां गायत्रीं शिरसा सह ।
त्रिःपठेदायतप्राणः प्राणायामः स उच्यते" ॥

एवमाभ्यन्तरतो बाह्यतश्च निश्चलीभूतं मनो ध्याने नियोजयेत् । दृढीभूतं ध्यानमेव धारणेत्युच्यते । चिरस्थायिनी धारणैव समाधिः । अत एवोक्तम्—

"शुचौ देशे समासीनो यथावत्कल्पितासनः ।
जितेन्द्रियो जितप्राणश्चिन्तयेत् शिवमव्ययम्" ॥

इदमत्र स्मर्तव्यम् । यन्मनसा दृढं सङ्कल्पयति तन्नियतं सिद्ध्यति । मनश्शक्तेरियत्तां न कोऽपि विद्यात् । अणिमादिसिद्धयोऽन्या वा दृढसङ्कल्पसाध्या एव । मानवः क्रतुना मनुना मनुदेवताबलेनचे-श्वरकल्पो भवेत् यथा विश्वामित्रवसिष्ठवामदेवादयो मन्त्रबलेन दुष्कर-कर्माणि कर्तुं शेकुः । मन्त्रदेवताया आत्मनश्च तादात्म्यभावनैव तादृश-बलकारणम् । परमात्मात्वेक एव केशवो वा शिवो वा अन्यनामभाग्वा । परमात्मना सहात्मसंयोजनेनैव जीसस्नामकः क्रिस्तुमतमूलभूतोऽत्य-द्भुतकर्माणि बहूनि कृतवान् । स तथैवावदत् । स च कमपि मन्त्रं नोपयुयुजे । प्राकृतजनाः परमात्मना सहात्मानं संयोक्तुमसमर्था इति ऋषयो मन्त्रान् कल्पयामसुः । आस्तां तावदिदम् ॥

मन्त्रशब्दस्य व्युत्पत्तिर्यद्यपि "मन्त्रिगुप्तभाषणे" इति सामान्यतः क्रियते, तथापि "मननात् त्रायते यस्मात् तस्मान्मन्त्रः प्रकीर्तितः" इति मन्त्रशास्त्रे व्युत्पत्तिर्विशेषतः क्रियते । उभयार्थग्रहणेन गोपनीयत्वं मननत्वं च मन्त्रशब्दार्थः । मन्धातोरेव मनुमानवादिशब्दा व्युत्पन्ना इति पूर्वमालपितत्वात् पुरुषस्य मन्त्रजपस्तत्सिद्धिश्च निसर्गतया भवतीति ध्येयम् ॥

मन्त्रो द्विविधः । वैदिकस्तान्त्रिकश्चेति । तत्र वैदिकमन्त्राः संहितारूपा ऋचः । तदर्थविवरणानि यजूंषि ब्रह्मणमित्युच्यते । गानार्थं गृहीता ऋचः सामानि भवन्ति । वेदानां तृतीयभाग उपनिषदः । तत्र ऋषयो मन्त्रद्रष्टारो न तु मन्त्रकर्तारः, वेदानां अनादित्वात् । उत्तराक्षरोच्चारणे पूर्वाक्षरध्वंससंभवेन वेदार्थानामेव नित्यत्वं वाच्यमिति बोध्यम् । ऋषयो मन्त्रजपैः सम्पूर्णफलानि प्रापुरिति जपादौ तेषां स्मरणं फलप्राप्तिसूचकं मन्त्रवीर्यप्रदर्शकं निदर्शनात्मकं चेति विधीयते । यथा विश्वामित्रः स्वप्रयुक्तदिव्यास्त्राणि वसिष्ठस्य ब्रह्मदण्डेन मोघीकृतानि दृष्ट्वा ब्रह्मतेजो बलं बलमिति निश्चित्य पूर्वमेव विद्यमानां गायत्रीं जप्त्वा ब्रह्मर्षित्वं जगन्निर्माणशक्तिं च सम्पादितवान् । तथा गायत्रीजपे नान्येऽपि लभेरन् सिद्धिमिति सूचनाय तत्स्मरणं कार्यमिति विश्वामित्रो गायत्र्या ऋषिरिति कल्प्यते । एवमन्येषां मन्त्राणां ऋषिकल्पनम् । संहिताभगानां ऋग्वेदस्य मन्त्रद्रष्टार एकनवतिसङ्ख्याकाः सन्ति । तथाहि मात्स्ये—

"एते मन्त्रकृतः सर्वे कृत्स्नशस्तुनिबोधत ।
भृगुः काश्यः प्रचोताश्च दधीचो ह्यात्मवानपि ॥

. . . . . . . . . . . . . . । 

एते मन्त्रकृतः सर्वे काश्यपांस्तु निबोधत ॥

काश्यपः सहवत्सावो निध्रुवो वैद्य एव च ।

. . . . . . . . . . ॥

मनुर्वैवस्वतश्चैव इलो राजा पुरूरवाः ।
क्षत्रियाणां वराह्येते विज्ञेया मनुवादिनः ॥

भनन्दश्चैव भत्सश्च वत्सलश्चैव ते त्रयः ।
एते मन्त्रकृतो ज्ञेया वैश्यानां प्रवराः स्मृताः ॥

इत्येकनवतिः प्रोक्ता मन्त्रा यैश्चबहिष्कृताः ।

एते वैदिकमन्त्रा ऋग्रूपा मित्राग्नीन्द्रावरुणाश्विन्यादिदेवताः प्रकृत्य स्तुवन्ति । प्रणवो वेदानां सर्वेतरमन्त्राणां च शिरस्त्वेन मूलत्वेन च श्रेष्ठः ब्रह्मणः प्रतिकृतिरिति मन्यते। अत्र माण्डूक्योपनिषद् द्रष्टव्या । अथ वेदमातेति विख्याता गायत्री मुख्या "न गायत्र्याःपरो मन्त्रो न मातुः परदैवतम्" इति वेदसारतया मुक्तिप्रदतयाचात्यन्तश्रेष्ठाद्विजत्वकल्पनैकदक्षा । गायन्तं त्रायत इति गायत्रीछन्दसा बद्धेति च मन्त्रस्य गायत्रीत्यभिधानम् । सवितृदेवताकत्वात् सावित्रीत्यप्युच्यते । बृहदारण्यके ५ अध्या. १४ ब्रा. उच्यते–"भूर्भुव स्वः इति त्रैलोक्यात्मकं प्रथमं पदं, ऋग्यजुःसामानीति त्रैविद्यात्मकं द्वितीयं पदं, प्राणोऽपानोव्यान इत्यध्यात्मकं तृतीयम् । इति त्रिपदा गायत्री । तुरीयं दर्शतं पदं परोरजा य एष तपति इति । ददृश इव ह्येष परोरजा न तु साक्षाद् दृष्ट इति दर्शतमिति"। (तत्र द्रष्टव्यः) त्रिपदा शरीरं, तुरीयमात्मेति तात्पर्यम् । लोके तावत् त्रिपदा गायत्री ह्युपदिश्यते पित्रा पुत्राय अत्रोपदेष्टा मन्त्रस्य वीर्यमर्थं वा प्रायशो न जानाति नापि वरीयानाचार्यश्च बहुशः । कथं पुनरुपदिष्टो गायत्रीतत्त्वं जानीयात् तत्फलं वा प्राप्नुयात् ?

देवी भागवते गायत्रीं प्रकृत्योच्यते—

"भिन्नपादातु गायत्री ब्रह्महत्याप्रणाशिनी
अभिन्नपादा गायत्री ब्रह्महत्यां प्रयच्छति ॥
जपसंख्याष्टभागान्ते पादो यस्य तुरीयकः ।
स द्विजः परमो ज्ञेयः परं सायुज्यमाप्नुयात् ॥
अन्यथा प्रजपेद्यस्तु स जपो विफलो भवेत् ।
गृहस्थो ब्रह्मचारी च मोक्षार्थी तुरीयं जपेत् ॥
तुरीयपादो गायत्र्याः "परोरजसेसावदोम्" ॥

तत्र द्रष्टव्याः शान्तिकपौष्टिकाभिचारकृत्यभूतरोगविषादिनाशकराः प्रयोगाः। अनेन गायत्रीजपरूपमेवं भवति। आदौ प्रणवं ततो व्याहृतित्रयं "भूर्भुवःस्वः" इति, ततो रूपात्मकं प्रथमं पादं, ततो नामात्मकं द्वितीयं पादं, तत आध्यात्मकं तृतीयं पादं पृथक्पृथगुच्चारयेत्। इयं शारीरात्मिका त्रिपदा गायत्री रजस्तमोव्याप्ता। ततःपरे शुद्धसत्वसत्यरूपं हिरण्मयं दिव्यमङ्गलविग्रहान्तर्वर्तिनं परमात्मानं तुरीयपादेन ध्यायेदिति तादृशः पुरुषः छान्दोग्ये हिरण्मयवपुरित्यादिनाऽऽम्नातः। "अन्तस्तद्धर्मोपदेशात्" "ज्योतिश्चरणाभिधानात्" इत्यनयोः ब्रह्मसूत्रयोर्भाष्ये विस्तरो द्रष्टव्यः। ईशावास्ये च—

"हिरण्मयेन पात्रेण सत्यस्यापिहितं मुखम् ।
तत् त्वं पूषन्नपावृणु सत्यधर्माय दृष्टये" ॥ इत्युक्तम् ॥

"ध्येयःसदा सवितृमण्डलमध्यवर्ती नारायणः सरसिजासन"
इति जपान्ते ध्यानं तुरीयपादजपस्थानीयं भवेन्नु?

अत्र मन्त्रे वरेण्यं (अर्घ्यप्रदाने वरेणियं) भर्गः श्रेष्ठः वरणीयः किरणः। सूर्यस्य नानाविधाः किरणाः सन्ति। कश्चन मृतिकरः, केचन

वर्षकराः, केचनामृतमया इत्याद्याः। तथा च बलातिबलामन्त्रस्य श्रीरामाय विश्वामित्रेणोपदिष्टस्य ध्यानश्लोके —

अमृतकरतलार्द्रौ सर्वसंजीवनाढ्यौ
अघहरणसुदक्षौ वेदसारे मयूखे।
प्रणवमयविकारौ भास्कराकारदेहौ
सततमनुभवेहं तौ बलातीबलेशौ" ॥ इति ॥

शुक्लरूपकिरणात् स्फटिकशिलाखण्डप्रवेशितादर्वाक् सप्तवर्णाः किरणकाः पतन्ति। ते च रक्तः विद्रुमसवर्णः पीतः हरितः नीलः अतिनीलः इन्दीवरवर्णश्च। तत्र रक्तवर्ण उग्र उद्वेगकरः कोपवैरकलिकारकः। पीतो ध्यानयोग्यो धिषणाप्यायकरः यतः पीताम्बरः कटकहारवारकिरीटवानिति विष्णुध्यानम्। नीलः शान्तः शीतलः अतो नीलनीरदश्यामलं वपुरस्य ध्यायते। हरितमारोग्यकरं नेत्राप्यायकरमित्येव जगति सर्वत्र तृणलतातरवस्तद्वर्णेन सृष्टाः। बहवो रोगा वर्णविशेषप्रदर्शनमात्रेण नितरां निवार्यन्ते। उन्मादोऽसाध्यकाष्ठापन्नो वर्णविशेषस्य सकृद्दर्शनमात्रेण परिह्रियते। केनचन वर्णेन निद्रामुत्पादयेत्। अपरेण केनचिन्निद्राभङ्गोद्वेगादयः क्रियन्ते। अद्य पाश्चात्यविज्ञानशास्त्रविशारदा वर्णभेषजविचिकित्सापराः चिकित्सार्थं रोगनिवारणालयान् निर्माय जनोपकारं चेक्रीयन्ते। इन्दीवरवर्णकिरणक (violet) वैभवो नाद्यापि सम्यग्ज्ञायते। अतिवेलस्तन्महिमा कालेनाधिकतरं ज्ञास्यते। वर्णानां सप्तानां सङ्गीतशास्त्रे स्वराणां सप्तानां च समीपसम्बन्धोऽस्ति ॥

एवंविधवर्णविशिष्टवरेण्यभर्गघटितगायत्रीध्यानं च—

"मुक्ताविद्रुमहेमनीलधवलच्छायैर्मुखैस्त्र्यक्षणै-
र्युक्तामिन्दुकलानिबद्धमुकुटां तत्त्वार्थवर्णात्मिकाम्।

गायत्रीं वरदाभयाङ्कुशकशां शुभ्रं कपालं गुणं
शङ्खं चक्रमथारविन्दयुगलं हस्तैर्वहन्तीं भजे ॥" इति ।

यद्यपि सप्तवर्णाः प्राधान्येन सन्ति येषां मिश्रणनैपुणादद्य कोटिद्वयातीतसंख्याका वर्णविशेषा निर्मीयन्ते, तथापि तत्त्वसंख्याक्लृप्तमुखतद्वर्णाश्चात्रोद्दिष्टाः । धवलकथनादनुक्तानामुपलक्षणया संग्रहो भवतीति तत्त्वानि च पृथिवीजलाग्निवाय्वाकाशानि, तत्त्वाक्षराश्च क्रमात्—ल, व, र, य, ह इति पञ्च । क्रमाच्च कनिष्ठिका, अनामिका, मध्यमा, तर्जिनी, अङ्गुष्ठः एतैर्द्योत्याः । त्रिणेत्रं ज्ञानसूचकं सूर्यचन्द्राग्निसूचकं च । इन्दुकला च श्रेष्ठत्वानन्तत्वामृतत्वाप्यायकत्वादीनि सूचयति । वराभयौ पालनानुग्रहशक्तिद्योतकौ हस्तौ । अङ्कुशगुणौ विक्षेपणाकर्षणशक्ती द्योतयतः । प्रश्नोपनिषदुक्तरयिप्राणस्थानीयौ (attraction repulsion) । शङ्खं संक्षोभणस्तम्भनं सूचयति । चक्रं निग्रहशक्तिम् । कपालः सृष्टिसामग्रीम् । अरविन्दं सौन्दर्यसौरभ्याभ्यां जगतो रामणीयकमनवद्यतां च सूचयति । एवंविधां गायत्रीमुपासीत ॥

ध्यानानन्तरं चत्वारि शापविमोचनानि कार्याणि । प्रथमं ब्रह्मशापविमोचनम्—'गायत्री ब्रह्मेत्युपासीत यद्रूपं ब्रह्मविदो विदुः तां पश्यन्ति धीराः सुमनसा वाचमक्रत . . .' अत्र शापोऽतिशयोक्तिरेव । तत्प्रकारकं ध्यानमावश्यकमित्यर्थः । वसिष्ठशापविमोचनम्—

'अहमर्कपरं ज्योतिरर्कज्योतिरहं शिवः ।
आत्मज्योतिरसावर्कः सर्वज्योतिरसावहम्' ॥ इति ।

ज्योतीरूपेणार्केणैक्यध्यानमात्मनो विधीयते । अत्र विश्वामित्रशापविमोचनम्—'गायत्रीं भजाम्यग्निमुखां विश्वगर्भां यदुद्भवां देवाश्चक्रे विकृष्टिं तां कल्याणीमिष्टकरीं प्रपद्ये' इतीष्टिसाधकाग्निरूपेणेष्टसाधकरूपेण च ध्यानम् । अथ वरुणशापविमोचनम्—'तिग्मायुधौ तिग्म-

हेतोंसुशेवौ सोमारुद्राविह समृडतं नः प्राणोमुञ्चतं वरुणस्य पाशाद्गोपा-
यतं नः सुमनस्यमानाः ओं धाम्नो धाम्नो राजन्नितो वरुण नो मुञ्च'
इति। जीवः प्रकृतिं श्रद्धारूपेण प्रविशन् सोमो राजा भवतीति पूर्वमुक्तं
तदैव वरुणरुद्रबद्धो भवति । तथा मनुष्यशरीरे सोमारुद्राभ्यां (liquid
and heat) जीवो जीवति । तथाविधो जीवस्तदतिक्रान्तरूपध्याने
तयोरनुज्ञां प्रार्थयति । प्रातर्गायत्री मध्याह्ने सावित्री सायं सावित्रीति
भेदाः मुद्राः न्यासाः कवचहृदयादीनि गायत्रीपञ्चाङ्गादौ द्रष्टव्यानि ।
मन्त्रे 'धियो यो नः' इति बहुवचनप्रयोगेण सर्वजीववर्गाणां सौभ्रात्रं
सार्वजनीनसौहार्दविस्तारश्च प्रकटीक्रियते । सर्वे जनाः सुखिनो भव-
न्त्विति सदा मन्तव्यमित्युक्तप्रायम् । एतेन देशे कस्मिंश्चिदेकोऽपि
गायत्र्युपासको वसति यदि तद्देशवासिनां वैश्वजनीनं भद्रं भवति ।
अत एव तादृशब्रह्मनिष्ठेभ्यो भूदानगृहदानानि श्रोत्रियमिति ख्यातानि
नृपैर्दत्तानि ॥

सन्ध्यावन्दनं नाम मन्त्रः पृथक् वर्तते न च प्रायशोऽनुष्ठीयते ।
तस्य सान्दीपिनी ऋषिः ब्रह्मविष्णुमहेश्वरा देवताः—"कृत्वा सन्ध्या-
मपि ध्यायेन्नीलवर्णां सुशोभनां . . . . " मूलं अं ऐं उं क्लीं
मं सौः इति। अथार्घ्यप्रदानमन्त्रः। सविताऋषिः। अनुष्टुप्छन्दः। सवितृ-
नारायणो देवता । गायत्रीपादैर्न्यासः असुरक्षयार्थे विनियोगः । ध्यानं—
"वेदसारं परंज्योतिर्मूलभूतं परात्परं। हृदिस्थं सर्वलोकेशं मण्डलान्तर्व्यव-
स्थितं । वज्रायुधसहस्रस्य सकृत्सन्तानकारणं । चिन्तयेत्परमात्मानमाप
ऊर्ध्वं विनिक्षिपेत् । ब्रह्मास्त्रं ब्रह्मदण्डास्त्रं ब्रह्मशीर्षास्त्रं च क्रमात् प्रयुज्यते ।
"ज्वलज्ज्वलप्रज्वलप्रज्वलज्ज्वालामालिनि मन्देहारुणे दैत्यानां ब्रह्मास्त्रं पर-
देवते त्वङ्गच्छ देवि शीघ्रं तु गायत्रि शस्त्ररूपिणि इदमर्घ्यं प्रदास्यामि
दुष्टदैत्यवधं कुरु" । अथास्त्रोपसंहार उच्यते । एवमाचरणेन दृश्यते ।